# GOVERNMENT ORIENTAL SERIES

CLASS A, No. 2

PREPARED UNDER THE SUPERVISION OF
THE PUBLICATION DEPARTMENT OF
THE BHANDARKAR ORIENTAL
RESEARCH INSTITUTE
POONA




POONA
**Bhandarkar Oriental Research Institute**
1928.

Government Oriental Series—Class A No. II.

# SIDDHĀNTABINDU

BY

## MADHUSŪDANASARASVATĪ

A COMMENTARY ON THE DAŚAŚLOKĪ
OF
ŚAṀKARĀCĀRYA

Edited with an Original Commentary
BY

**Mahāmahopādhyāya Vasudev Shastri Abhyankar,**
PANDIT, FERGUSSON COLLEGE, POONA.

**Bhandarkar Oriental Research Institute, Poona.**

1928

राजकीया प्राच्यग्रन्थश्रेणिः- अनुक्रमाङ्कः 'ए' १

श्रीमत्पण्डितमधुसूदनसरस्वतीप्रणीतः

श्रीमच्छंकराचार्यविरचितदशश्लोकीव्याख्यानरूपः

# सिद्धान्तबिन्दुः

महामहोपाध्याय-

अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितया

बिन्दुप्रपाताभिधया व्याख्यया समेतः

पुण्यपत्तनस्थ-

प्राच्यविद्यासंशोधनमन्दिराधिकृतैः

भाण्डारकरप्राच्यविद्यामन्दिरमुद्रणालये मुद्रयित्वा प्राकाश्यं नीतः

शके १८५० वत्सरे, १९२८ खिस्ताब्दे

मूल्यं सार्धं रूप्यकद्वयम्

# संक्षिप्तचिह्नज्ञेयानि नामानि

| | |
|---|---|
| अम० को० | अमरकोशः |
| ई० | ईशावास्योपनिषत् |
| ऐ० | ऐतरेयोपनिषत् |
| क० / का० | काठकोपनिषत् |
| के० | केनोपनिषत् |
| कै० | कैवल्योपनिषत् |
| गौ० का० | गौडपादकारिका |
| चू० | चूलिकोपनिषत् |
| छा० | छान्दोग्योपनिषत् |
| तै० | तैत्तिरीयोपनिषत् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| नृ० उ० ता० | नृसिंहोत्तरतापिनी |
| प० / पं० | पङ्क्तिः |
| पं० / पं० द० | पञ्चदशी |
| पा० सू० | पाणिनिसूत्रम् |
| पृ० | पृष्ठम् |
| बृ० | बृहदारण्यकोपनिषत् |
| बृ० वा० | बृहदारण्यकोपनिषद्वार्तिकम् |
| बृह० | बृहदारण्यकोपनिषत् |
| ब्र० पु० | ब्रह्मपुराणम् |
| ब्र० बि० | ब्रह्मबिन्दूपनिषत् |
| ब्र० सू० | ब्रह्मसूत्रम् |
| ब्र० सू० भा० | ब्रह्मसूत्रशारीरभाष्यम् |
| ब्रह्मबिन्दु० | ब्रह्मबिन्दूपनिषत् |
| भ० गी० | भगवद्गीता |
| भाग० | भागवतम् |
| भा० प० | भाषापरिच्छेदः |
| मु० | मुण्डकोपनिषत् |
| मे० को० | मेदिनीकोशः |
| याज्ञ० स्मृ० | याज्ञवल्क्यस्मृतिः |
| वा० | वार्तिकम् |
| श्लो० | श्लोकः |
| श्वे० | श्वेताश्वतरोपनिषत् |
| सं० शा० | संक्षेपशारीरकम् |

# प्रस्तावना

---0---

इह जगति प्रायः सर्वे प्राणिनः स्वोदरपरिपूरणाय संप्राप्तदुःखप्रशमनाय च यथाशक्ति प्रयतन्त इति प्रसिद्धमेव । न तावदेव कर्तव्यं भवति प्राणिनाम् । किं तु सर्वथा दुःखनिवृत्तये यत्न आस्थेयः । सति च शरीरे सर्वथा दुःखनिवृत्तिः सुतरां न संभवतीति शरीरप्रहाणमावश्यकम् । तच्च तन्मूलकारणान्वेषणमन्तरेण दुःसाधमिति किमस्य मूलं का चास्य सूक्ष्मा सूक्ष्मतरा च प्रकृतिः कीदृशश्चायं चेतनाचेतनयोः संबन्ध इति विचारे क्रियमाणे मादृशैः स्वातन्त्र्येण तत्र निर्णयः कर्तुमशक्यः । अतः प्रज्ञावद्भिः परोपकारप्रवणैः प्रथितैर्निबन्धकारैर्ग्रथितान्निबन्धान्समालोचयितुं प्रवृत्तोऽभूवम् । तावदेव श्रीमच्छंकराचार्यप्रणीता दशश्लोकी पण्डितमधुसूदनसरस्वतीविरचितसिद्धान्तबिन्दुयुता पुरतः समुपस्थिताभूत् । इयं च स्वकार्यसमर्थनायालमिति तदर्थावबोधाय प्रवृत्तस्य सिद्धान्तबिन्दुं निगूढाभिप्रायं ज्ञातवतो मे तदभिप्रायप्रकाशनाय तद्व्याख्याने मतिरभूत् । व्याख्यानं च तच्छ्रीमच्छंकराचार्यचरणप्रसादेन निष्प्रत्यूहं समाप्तिमगमत् । त एव च श्रीमदाचार्यचरणाः समुद्दिष्टं मत्कार्यं साधयन्त्विति शम् ।

अभ्यंकरोपाह्ववासुदेवशास्त्री

एतद्ग्रन्थसंशोधनाय यानि समवलोकितानि पुस्तकानि तेष्वेकं दशश्लोकीमात्रस्य । अन्यानि नव सिद्धान्तबिन्दुयुताया दशश्लोक्याः । तानि च पुस्तकानि क्रमशः प्रदर्श्यन्ते—

१ अ इति संज्ञितम् । एतच्च पुस्तकं राजकीयग्रन्थसंग्रहालयाल्लब्धम् । अत्र केवलं दशश्लोकीमात्रं लिखितमस्ति । एतच्च पुस्तकं शके १७२२ (सन् १८००) संवत्सरे लिखितमस्ति । येन लिखितं तस्योल्लेखोऽत्र न दृश्यते ।

२ क इति संज्ञितम् । इत आरभ्य सर्वेषु पुस्तकेषु सिद्धान्तबिन्दुयुता दशश्लोकी लिखितास्ति । एतच्च पुस्तकं सप्तर्षि–( सातारा ) ग्रामस्थानां जोशी इत्युपाह्वानां दाजीशर्मणाम् । अत्राक्षराणि स्थूलतराणि सुवाच्यानि च संदृश्यन्ते । पृष्ठान्यस्याष्टचत्वारिंशत् । इदं च पुस्तकं न केनाप्यवलोकितमिवालक्ष्यते । यतोऽत्र लेखकप्रमादाज्जायमानमप्यशुद्धमद्यापि तदवस्थमेव । एतच्च शके १७९२ ( सन् १८७० ) संवत्सरे लिखितमस्ति । येन चेदं पुस्तकं लिखितं तस्य केवलं नामैवात्र निर्दिष्टमस्ति महादेवेन लिखितमिति ।

३ ख इति संज्ञितम् । एतत्पुस्तकमानन्दाश्रमस्थम् । पृष्ठानि चास्य द्वात्रिंशत् । अत्राक्षराणि स्थूलानि सुवाच्यानि । अशुद्धपरिमार्जनं चात्रालक्ष्यते ।

४ ग इति संज्ञितम् । एतच्च पुस्तकं मैसूरग्रन्थमालास्थं मुद्रितम् ।

५ घ इति संज्ञितम् । एतच्चापूर्णम् ।

६ ङ इति संज्ञितम् । एतच्च पुस्तकं पुण्यग्रामस्थानां वे. शा. कृष्णशास्त्री गोडबोले इत्येतेषाम् । अत्राक्षराणि सुवाच्यानि । आदिमेष्वष्टसु पृष्ठेषु अशुद्धपरिमार्जनं कृतमिवालक्ष्यते । पृष्ठानि चास्य चिक्कणानि । पृष्ठसंख्या त्रयोविंशतिः(२३) । अत्र पुस्तके लेखकस्य लेखनकालस्य च नोल्लेखः ।

७ च इति संज्ञितम् । इदं पुस्तकं राजकीयग्रन्थसंग्रहालयस्थमतिजीर्णम् । अस्य पृष्ठानि एकोनचत्वारिंशत् (३९) । शके १५३१ (सन् १६०९) राक्षसनामसंवत्सरे उत्तरायणे ग्रीष्मर्तौ वैशाखे मासे शुक्लपक्षे पञ्चम्यां तिथौ भानुवासरे पुष्यनक्षत्रे पुण्यस्तम्भ–( पुणतांबे ) ग्रामे त्रिमलराजेन इदं पुस्तकं लिखितम्--इत्यन्ते उल्लेखो दृश्यते । इदं च पुस्तकमशुद्धं दृश्यते । अन्ते च मलपृष्ठे ‘ परशुरामगोस्वामिनः’ इति निर्दिष्टम् । अस्य राजकीयः क्रमाङ्कः १२९

८ छ इति संज्ञितम् । इदं पुस्तकं राजकीयग्रन्थसंग्रहालयस्थम् । जीर्णम् । पृष्ठानि चास्य षड्विंशतिः (२६) । संवत् १७३६ ( सन् १६८० ) पौषशुद्धपौर्णमास्यां लिखितमिदं कृष्णदासेन स्वपठनार्थम्--इत्यन्ते उल्लेखः । इदं च बहुषु स्थलेषु शुद्धं कृतम् । अशुद्धं च क्वचिदेवावशिष्टं स्यात् । तेन मन्ये एतत्पुस्तकसहायेन लेखनकर्त्रान्येन वा केनाप्येतद्ग्रन्थाध्ययनं कृतमिति । अस्य राजकीयः क्रमाङ्कः १९

९ ज इति संज्ञितम् । इदं पुस्तकं राजकीयग्रन्थसंग्रहालयस्थम् । जीर्णम् । पृष्ठानि चास्य त्रयोविंशतिः ( २३ ) । इदंच पुस्तकं शुद्धं कृतमस्ति । संवत् १८४० ( सन् १७८४ ) भाद्रपद शु॥ १५ बुध चतुर्भुजोऽलिखत्–इत्यन्ते उल्लेखः । अत्र पुस्तके बिन्दुसंदीपन्याख्या सिद्धान्तबिन्दुटीकापि लिखिता दृश्यते । अस्य राजकीयः क्रमाङ्कः ३६५

१० झ इति संज्ञितम् । इदं पुस्तकं राजकीयग्रन्थसंग्रहालयस्थम् । पृष्ठानि समीचीनानि । पृष्ठसंख्या त्रिंशत् ( ३० ) । अक्षराणि सुवाच्यानि । एतच्च पुस्तकं शुद्धं कृतमस्ति । लेखनकालस्य लेखकस्य च नात्रोल्लेखः । अस्य राजकीयः क्रमाङ्कः ३६६

# उपोद्घातः ।

-0--

१ धर्मोपासनाविषयविवेचनं हृदि निधाय जगन्मूलभूतानां तत्त्वानां स्वातन्त्र्येण विवेचनं कर्तुं प्रवृत्तानामल्पसंख्याकानां ग्रन्थानां मध्ये मधुसूदनसरस्वतीभी रचितः सिद्धान्तबिन्दुर्विदुषां मनस्यतवि बहुमानास्पदं पदं धत्ते इत्यस्मिन्वस्तुनि न कोपि विवादः । श्रीमच्छंकराचार्यकृतदशश्लोकीव्याख्यानपरतया वस्तुतो विरचितोप्ययं ग्रन्थः कानि कानि मूलभूततत्त्वानि कानि कानि च नानाविधव्यापारयुताया बाह्यसृष्टेः स्थितिजनिमरणादिमूलकारणानि किं सुखदुःखरागद्वेषादिवेदनारूपाया आन्तरसृष्टेः पारमार्थिकस्वरूपं कानि च तस्या मूलकारणानीत्येतस्य प्रश्नजातस्य परममार्मिकतया विवेचनकर्मणि नूनं परां प्रतिष्ठामधिगन्तुमर्हति । इदं सर्वं यदयमात्मा ( बृ० ४।५।७ ) नेह नानास्ति किंचन ( क. ४।११ ) आत्मैवेदं सर्वं (छा. ७।२५।२) ब्रह्मैवेदं सर्वम् ( नृसिं. ता. ५ ) इत्याद्याः श्रुतयो गीतादिस्मृतयो वेदान्तसूत्राणि च प्रपञ्चेस्मिन्दृश्यमानानां सर्वेषां वस्तूनामैकात्म्यमेव प्रतिपादयन्तीति श्रीमच्छंकराचार्यगौडपादाचार्येभ्यः प्राक्बहुभिर्वेदान्तसंप्रदायविद्भिराचार्यैः प्रतिपादितमित्यत्र प्रमाणमाचार्यचरणा एव । गुरुशिष्यभावापन्नानां वेदान्तसंप्रदायविदामाचार्याणामखण्डः प्रवाहोस्मिन्भारते वर्षे आसीद्बहवो विद्वन्मान्या व्याख्याग्रन्थाश्च तैः प्रणीता इत्येतच्च श्रीमद्रामानुजाचार्यप्रभृतिभिर्बहुभिर्ग्रन्थकृद्भिर्बहुशस्तत्र तत्र श्रीभाष्यादिषु ग्रन्थेषु प्रतिपादितमेव । यद्यप्येते ग्रन्था आस्माकीनेन मन्दभाग्येन सांप्रतं नोपलभ्यन्ते तथापि ते विदिता अधीता अध्यापिताश्च प्राचीनैर्ग्रन्थकृद्भिरित्यत्र वस्तुनि नास्ति संशयलेशस्याप्यवकाशः । पुरुषमतिवैश्वरूप्याद् रुचिवैचित्र्याच्च भिन्नभिन्नतया प्रसृतानां बहुविधानामध्यात्मविषयप्रतिपादनपराणां दृष्टिदर्शनमतादिनामधेयानां व्याख्यामार्गाणां संख्या दिने दिने वर्धमाना शालिवाहनशकप्रारम्भसमयेनन्तरं च द्वित्राणां शतानां वर्षाणां मध्ये दुष्प्रत्येयं चतुरशीत्यधिकशतत्रयं यावद्गतेत्यत्रावश्यकसूत्रादिजैनग्रन्थाः प्रमाणम् । एषां दर्शनानां मध्ये कानिचिदुपनिषत्प्रतिपादितात्मैकत्वप्रतिपादनपराण्यात्मैकत्वसाक्षात्काररूप-

मेव मोक्षं व्याचक्षाणान्युपनिषद्दृष्टध्यानवैराग्यपूजोपासनाभक्तिकर्मवैराग्यादीनां मार्गाणामन्यतमं प्राधान्येन साधनत्वेन पुरस्कुर्वाणान्यास्तिकदर्शनसंज्ञामलभन्त। अपराणि पुनरात्मैकत्वसिद्धान्तमनाद्रियमाणानि ध्यानादीनामेवान्यतमं साधनत्वेन पुरस्कुर्वाणानि निर्वाणसिद्धिमुक्त्यातिशब्दैः फलतया मोक्षमेवाधिजिगमिषूणि नास्तिकदर्शनसंज्ञामलभन्त।

२ अभ्युदयनिःश्रेयसयोः स्वरूपावगमार्थं तद्धेतुभूतानां प्रवृत्तिधर्माणां निवृत्तिधर्माणां च स्वरूपावगमार्थं वेदग्रन्थानेवावलोकयतां भारतीयानां विद्वदग्रेसराणां मन्त्रद्रष्टृभिर्ऋषिभिर्दृष्टेषु संहिताब्राह्मणोपनिषदादिषु वेदग्रन्थेषु निरपेक्षं प्रामाण्यात्सामान्यजनानां च स्वतन्त्रबुद्ध्या विमर्शं कर्तुमशक्नुवतां विद्वदग्रेसरैः प्रतिपादितेष्वेव प्रायो विश्वसितुं प्रवृत्तेः प्रतिभासंपन्ना अपि विद्वांस उपनिषत्प्रतिपादितात्मैकत्वानुरोधेन प्रपञ्चस्वरूपविवेचनं चिकीर्षन्तो बाहुल्येनोपनिषद्भगवद्गीतावेदान्तसूत्राणां प्रस्थानत्रयीत्यपरनामधेयानां ग्रन्थरत्नानामेवोपरि भाष्यव्याख्यावृत्त्यादिविरचनेन विवेचनं चक्रिरे न पुनर्वेदबाह्या भवेमेत्यनादरभीत्या स्वतन्त्रान्प्रबन्धान्विरचयामासुः। उपनिषत्प्रतिपादितात्माद्वैतप्रतिपादकानां प्राचीनानामाचार्याणां मध्ये प्रामुख्येन माण्डूक्योपनिषत्कारिकाकाराणां गौडपादाचार्याणामेव नाम दरीदृश्यते। श्रीमद्भिर्गौडपादाचार्यैर्माण्डूक्योपनिषदः कारिकारूपेण व्याख्यानं कृतम्। स्वल्पाक्षरोऽतिलघीयानप्यसौ व्याख्यानग्रन्थ उदात्ततया प्रतिपाद्यार्थस्य सुविस्पष्टतया वाचामतिगम्भीरतया च तन्निगूढव्यङ्ग्यत्वस्याचिरेणैव कालेन महतीं ख्यातिमुपजगाम। स्वसमयप्रचलितबौद्धदर्शनान्तर्गतशास्त्रीयपरिभाषाः पारिभाषिक्यः संज्ञाः श्रीगौडपादाचार्यैरात्माद्वैतप्रतिपादनपरासु स्वकीयासु कारिकासु तथा प्रावीण्येन विनियोजिता यथा सत्स्वपि सुबहुषु स्थलेषु प्रक्रियाभेदेषूपायभेदेषु करणभेदेषु च द्वे अप्येते दर्शने परमार्थतो विचारे नूनं निर्वाणमुक्त्यादिशब्दैः प्रतिपादितमेकमेव संसारमोक्षं फलमधिजिगमिषतः। इयांस्तु विशेषः— केवलमुपनिषत्प्रतिपादितं सच्चिदानन्दस्वरूपं परमात्मसाक्षात्कारलभ्यं ब्रह्मणा सह जीवात्मन ऐक्यं मोक्षनामधेयं सद्रूपम् अविद्यासंस्कारविज्ञानादिद्वादशलक्षणभवचक्रपारगमनरूपमार्याष्टाङ्गिकमार्गलभ्यं निर्वाणस्वरूपं शून्यरूपम्।

३ ओंकारस्वरूपनिर्णयार्थं प्रवृत्तास्विमासु कारिकासु श्रीमद्गौडपादाचार्यैः प्रथमं प्राज्ञतैजसविश्वसंज्ञितं जीवात्मनोवस्थात्रयं संक्षेपत उक्त्वा सृष्टिचिन्तनप्रवृत्तैर्भिन्नभिन्नैर्दर्शनकारैः प्रतिपादिताः सृष्टिप्रक्रियाश्च समासतो वर्णयित्वा वस्तुतो

न किंचिज्जायते माययैव हि सतो जन्म युज्यते न परमार्थत इति प्रतिपादितम्। तथैव वस्तुतोऽजायमान एवात्मा मायया जायमानो दृश्यते सचराचरमिह जगति यत्किंचिद् दृश्यते तन्मनोदृश्यमेव मनसोऽमनीभावे हि नैव किंचिद्द्वैतमुपलभ्यते इत्यादिभिः शब्दैरनादिमायया सुप्त इत्यादिभिश्चाद्वैतमेव परमार्थ इति सिद्धान्तितम्। यदि प्रपञ्चः परमार्थतो विद्येत तर्हि तेन स्फुटं नाशवता भाव्यम्। आदावन्ते च यन्नास्ति तद्वर्तमानेपि नैव विद्यते। सर्वे भावा एवं प्रकारेण वितथैः सदृशाः सन्तो वितथा एवेत्यादिवाक्यैर्दृश्यमानस्य जगतोऽसारता स्थलेस्थलेमीभिः प्रदर्शिता। वेदान्तप्रतिपाद्यं परमतत्त्वं—

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः॥
विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान्।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः॥
निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥
प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः।
मायैषा तस्य देवस्य यया संमोहितः स्वयम्॥
प्राण इति प्राणविदो भूतानीति च तद्विदः।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥
स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥
(गौड० का. २।१२–१३;१८-२०;३१)

इत्यादिभिः श्लोकैः स्पष्टतया ग्रथितं गौडपादाचार्यैस्तत्र ग्रन्थे। प्राणभूतगुणपादलोकवेदयज्ञभोक्तृभोज्यसूक्ष्मस्थूलमूर्तामूर्तकालदिग्वादभुवनमनोबुद्धिचित्तधर्माधर्मादीन्येकस्यैवात्मनो नामधेयानि प्राणविद्भूतविद्गुणविदादिभिर्दत्तानि। केचित्पञ्चविंशतिस्तत्त्वानीति मन्यन्ते केचित् षड्विंशतिरित्यादिना प्रपञ्चस्वरूपविषये प्रचलिता भिन्नभिन्ना विकल्पनाः प्रदर्श्य प्रपञ्चस्वरूपममीभिर्वर्णितं स्वसिद्धान्तश्च स्वप्नमाये (गौ. का. २।३१) इत्यादिना निदर्शितः। यथा घटाकाशपटाकाशौ इति नामभेदेन निर्दिश्यमानावप्याकाशभागौ न वस्तुतो महाकाशाद्भिद्येते नैव च तस्य विकारावयवौ भवतस्तथैव विभिन्ना जीवाः पर-

मात्मनो न भिद्यन्ते नामभेदमाप्नुवन्तोपि । जीवात्मनां परमात्मनि लयोपि घटा-
काशपट्याकाशादीनामिव महत्याकाशे भवतीत्यादिवाक्यैर्जीवस्वरूपं प्रपञ्चितम् ।
संघातापरनामधेयानि प्रपञ्चगतानि सर्ववस्तून्यप्यात्ममायाविसर्जितान्येवेत्येतस्मि-
न्वस्तुनि तैत्तिरीयकोपनिषदन्तर्गतानि स वा एष पुरुषोऽन्नरसमयः (तै. २।१।१)
इत्यादीनि वाक्यानि प्रमाणत्वेनोपन्यस्तानि । तथा च प्रपञ्चस्योत्पत्तिरपि तत्र
निदर्शिता । यथा मायोपकल्पितः सर्वः प्रपञ्चो न नैयायिकादिपरिकल्पितरीत्या
असतः सदुत्पत्तिसदृशः । न हि मायया असत उत्पत्तिर्युज्यते । न मायया
वन्ध्यापुत्रस्तत्त्वतो जायते । यथैकमेव मनः स्वप्ने द्वयाभासं स्पन्दते तथैव जाग्र-
दवस्थायां मायया मनो द्वयाभासं स्पन्दते इत्यादिना ग्रन्थेन ।

४ परमार्थत आत्मनः सकाशादभिन्नायाः केवलं माययैवोपकल्पिताया
बाह्यसृष्टेरस्तित्वं ज्ञानं च प्रति मनस एव सर्वथा कारणतया स्वीकरणाद्
श्रीमद्गौडपादाचार्या दृष्टिसृष्टिवादं पुरस्कुर्वन्ति तदनुसारेण च मनसस्तदवस्थानां
च विनाशेन प्रपञ्चविनाशं प्रतिपादयन्ति । यदात्मसत्यावबोधेन मनो न संकल्प-
यते तदा ग्राह्याभावेऽग्रहं सत्तदमनस्तां व्रजतीत्येतत्स्फुटं प्रतिपादितं—

मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।

दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ ( गौ. का. ३।४० )

इत्यादिभिः । यदा न किमप्युच्चनीचमध्यमं मनसोऽधिगम्यं वर्तते तदा न
मनसोऽस्तित्वे कोपि हेतुः । मनसः स्पन्दनाभावे संसारस्याप्यभाव इति तु
फलितमेव ।

५ उपरि निर्दिष्टेभ्यः समासेन कथितेभ्यः सिद्धान्तेभ्यः सुविदितमेवैतद्भ-
वति यदिमे गौडपादाचार्या उपनिषत्तत्त्वप्रतिपादकेभ्यो वेदान्ताचार्येभ्योऽधिगत-
परंपरागतार्थरहस्या वेदान्तप्रतिपाद्याद्वैतसिद्धान्तप्रतिपादने यद्यपि न प्रवर्तकत्वं
लभन्ते तथापि मायावादप्रतिपादकस्य धुरिस्थितश्रीशंकराचार्यपादस्य वेदान्ता-
चार्यकुलस्य प्रवर्तकत्वेन यदि ख्यापिता भवेयुस्तर्हि तत्र न किमपि विवादा-
स्पदम् ।

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया

इत्यादिभिर्वाक्यैरवस्तुभूतं संसारमात्मा वस्तुभूतमिव माययैव पश्यतीति
स्पष्टतया माण्डूक्योपनिषत्कारिकासु गौडपादाचार्यैः प्रथमं प्रतिपादितम् ।
कारिकास्विमासु यद्गौडपादाचार्याणामभिप्रेतं तच्छंकराचार्यैर्ध्वनितम् । यद्गौडपादा-

चार्यैर्ध्वनितं तच्छंकराचार्यैः प्रतिपादितम्। यद्गौडपादाचार्यैः प्रतिपादितं तच्छंकराचार्यैः साधितम्। यद्गौडपादाचार्यैः साधितं तच्छंकराचार्यैः सिद्धान्ततया प्रतिष्ठापितम्। तथैव यद्गौडपादाचार्यैस्तुच्छमिति ध्वनितं तच्छंकराचार्यैः प्रणिन्दितम्। यद्गौडपादाचार्यैर्निन्दितं तच्छंकराचार्यैः साक्रोशमधिक्षिप्तम्। यद्गौडपादाचार्यैः साक्रोशमधिक्षिप्तं तच्छंकराचार्यैरनभिमतमिति परित्यक्तम्। यद्गौडपादाचार्यैरनभिमतमिति परित्यक्तं तच्छंकराचार्यैरवस्कन्दितम्। यद्गौडपादाचार्यैरवस्कन्दितं तच्छ्रीशंकराचार्यैर्निर्मूलमुन्मथितम्। संक्षेपत इत्थं प्रतिपादनीयं भवति—गौडपादाचार्याणां परंपरया शिष्यभूताः शंकराचार्या गुरूणां गुरुतमैर्गौडपादाचार्यैः प्रवर्तितं मायावादं न केवलं प्रतिपादयामासुः किं तु स्वमतिविभवेन बुद्धिप्रभावेण अतुलप्रतिपादनशैल्या अप्रतिहततर्कशक्त्या व्याख्यापयामासुः पुरस्कारयामासुः साधयामासुः प्रख्यापयामासुश्च।

६ श्रीमद्भिर्गौडपादाचार्यैः प्रथमं प्रकाशितस्य मायावादस्य प्रतिपादनकर्म श्रीमद्भिः शंकराचार्यैस्तथा साकल्येन नैपुण्येन च कृतं यथा गौडपादाचार्याणां स्थाने शंकराचार्याणामेव नाम मायाऽद्वैतमतप्रकाशकानामग्रेसरत्वेनोच्चार्यते चेन्न तत्र किमप्यपवदनीयं स्यात्। अमीभिराचार्यैः कृतासु टीकासु स्वतन्त्रप्रबन्धेषु च पूर्वाचार्यैः प्रवर्तित आत्माद्वैतनिरूपणपरो मायावादस्तथा सामस्त्येनोज्जीवितः स्फुटीकृतः प्रतिष्ठापितश्च यथा आचार्याणामनन्तरं वेदान्तनिरूपणपरासु विद्वद्गोष्ठीष्वाचार्यमायावादनाम्नोरितरदन्यतरेण समं प्रादुर्भवतीति सार्वजनीनोनुभवः। श्रुतिप्रतिपादितसिद्धान्तसमर्थने विनियोजितैरजय्यैस्तर्कैरुपबृंहितया अलौकिकेन वादकर्मनैपुण्येनातिनिपुणं प्रयुक्तया खण्डनमण्डनरूपया विवेचनरीत्या प्रतिभाशालिना च बुद्धिविभवेन श्रीमन्तः शंकराचार्या लोके प्रतिष्ठामुपगतैर्मीमांसकबौद्धार्हतादिमतप्रतिपादकैराचार्यैः कृतेपि बहुतरां विरोधे तेषामितरतीर्थकृतां मतानि दर्शनानि चापाकृत्य श्रुतिप्रवर्तितामाचार्यानुपनिषत्प्रतिपादितमात्माद्वैतं च दृढतरं प्रतिष्ठापयामासुः।

७ गुरुपादाननुसृत्य श्रीमद्भिः शंकराचार्यैः सर्वं जगत्तथा सर्वे लौकिका अनुभवाश्च मिथ्याभूताः शुद्धचित्स्वरूप आत्मैवैकं परमार्थतत्त्वमिति स्वग्रन्थेषूद्घोषितम्। अनाद्यनिर्वचनीयाया मायायाः पटलेनापावृत आत्मैव जीव इत्यभिधीयते। स्वरूपतोविद्याया विकारभूतेनान्तःकरणेनान्तःकरणसंस्कारैश्चोपहितत्वाज्जीवात्मा यैर्यैर्वस्तुभिः सह संनिकृष्टं भूत्वा यानि यानि वस्तूनि बोध-

कल्प्यान्तःकरणं तदीयानाकारान्विधत्ते तेषां तेषां सर्वेषां वस्तूनां ज्ञानं लभते । ज्ञानविषयीभूतस्य पदार्थस्य तदीयमाकारं विदधतोन्तःकरणस्येति द्वयोरपि मायिकत्वेनावस्तुभूतत्वाज् ज्ञानशब्देनाभिधीयमानाया अन्तःकरणवृत्तेरपि मायिकत्वम् । अविद्यायास्तद्विकाराणामन्तःकरणेन्द्रियशरीरबाह्यवस्तूनां सर्वेषामात्मन्यध्यास आत्मनश्चामीषु सर्वेषु बाह्यवस्तुष्वध्यासः । अमुना परस्पराध्यासेनैव सर्वैरान्तैरैर्बाह्यैश्च वस्तुभिः सहैक्यमापद्य जीवात्माहं युवाहं वृद्धोहं ज्ञानी घटमहं जानामि पटमहं जानामीत्यादिकान्विविधाननुभवांल्लभते । एवं मायोपहित एवात्मा मायाविकारभूतं प्रपञ्चं निर्मिमीते ।

८ उपनिषन्निगूढपूर्वाचार्यप्रवर्तितश्रीगौडपादाचार्यप्रकाशितमायावादनिर्वचनस्य श्रीमद्भिः शंकराचार्यैरेव निरवशेषतयातिनैपुण्येन च कृतत्वात्तट्टीकाकाराणां न किमपि स्वातन्त्र्येण कर्तव्यतयावशिष्टं केवलं शंकराचार्यैरेव प्रतिपादितानां तत्त्वानां सिद्धान्तानां च तत्तत्प्रसङ्गवशतस्तैः साङ्गं विवेचनं कृतम् । क्वचिदनेकाः शङ्का उद्भाव्याद्वैतसिद्धान्तानां समाधानं मण्डनं च कृतम् । क्वचिच्च केषांचित्सिद्धान्तानां पाण्डित्यपूर्ण ऊहापोहः कृतः । तथा हि—वेदप्रतिपाद्य इति हेतुना मायोपनिबद्धपरमात्मैव जीवत्वेनावभासत इत्येवं प्रकारके आत्माभासत्वेन स्वीकृते जीवस्वरूपे सति तत्र जीवात्मनो मायायाश्च किंप्रकारकः संबन्ध इति विचारणायामविद्ययावच्छिन्न आत्मा जीवोऽथ वा तस्यां प्रतिबिम्बित आत्मा जीव उताहो अविद्यायां दृष्टं परमात्मनः स्वरूपं जीव इत्येवंप्रकारकाः प्रश्ना अर्वाचीनैष्टीकाकारैः प्राधान्येन विवेचनायोपन्यस्ताः । तथैवात्मनो जगतश्च किंरूपः संबन्धो जीवो जगन्निर्मिमीत ईश्वरो वा जीवस्यैकत्वं नानात्वं वा मायाऽविद्ययोः को भेदः आत्मानात्मनोः किंरूपोध्यासः ज्ञातृविषययोर्ज्ञानकाले कः संबन्ध इत्याद्या अनेके प्रश्नाः शंकराचार्योत्तरकालीनैष्टीकाकारैर्विवेचनार्थमुपनिबद्धाः स्वेषु स्वेषु ग्रन्थेषु । उपरि निर्दिष्टानां बहुविधानां प्रश्नानां विवेचनाय प्रवृत्तेषु टीकाकारेषु बृहदारण्यकभाष्यवार्तिककृतां सुरेश्वराचार्याणां ( ८२५ ) भामतीकाराणां वाचस्पतिमिश्राणां ( ८५० ) संक्षेपशारीरकृतां सर्वज्ञात्ममुनीनां ( ९०० ) पञ्चपादिकाकाराणां पद्मपादाचार्याणां ( ८५० ) पञ्चपादिकाविवरणकृतां प्रकाशात्ममुनीनां ( १२०० ) पञ्चदशीकाराणां विद्यारण्यानां ( १३५० ) तत्त्वदीपनकाराणामखण्डानन्दसरस्वतीनां च नामानि प्रामुख्येन पुरतः परिस्फुरन्ति । एतेषामपरेषां च टीकाकृतां मतभेदा

न्विचारभेदांश्च श्रीमदप्पय्यदीक्षिताः सिद्धान्तलेशे प्रदर्शयामासुर्धर्मराजाध्वरीन्द्रा मधुसूदनसरस्वतीमिश्राश्च टीकाकृतां मतभेदान्समासतः संग्रथनेन विवेचनेन स्वमतप्रदर्शनेन च व्याचक्रुर्व्याचख्युश्च ।

९ शुद्धचैतन्याभिधेयं परमात्मस्वरूपं प्रति प्रायशोऽद्वैतिषु टीकाकारेषु न कापि विप्रतिपत्तिः । शुद्धसत्त्वशुद्धाचिच्छुद्धानन्दमयं हि निर्मलपरमात्मस्वरूपम् । तत्साक्षात्कार एव च मोक्षः । अखिलप्रपञ्चस्य परिणाम्युपादानकारणभूता जीवात्मन उपाधिभूता अविद्यापरनामधेयानादिमायाख्यास्य परमात्मनोऽनिर्वचनीया शक्तिः । माययैतयोपहितः परमात्मा जीवशब्देनाभिधीयते । शुद्धचैतन्येन सहास्य जीवात्मनः संबन्धविषयेऽद्वैतिटीकाकारेषु स्तोका विप्रतिपत्तिर्दृश्यते । मायावादिनामग्रेसराः श्रीमद्गौडपादाचार्यास्त्वेवं मन्यन्ते— यथा महाकाश एवोपाधिना युक्तो घटाकाशपटाकाशाख्ये लभते वियुक्तः पुनराकाश एव भवति तद्वन्मायोपहितं शुद्धचैतन्यं जीवो भवति मायया वियुक्तं सत्पुनः शुद्धं भवति । यथा घटस्य धूममलादिनान्तस्थित आकाशो न कदाप्युपलिप्यत एवं सुखदुःखादिभिर्गुणैर्न कदाप्यात्मोपलिप्यते । यथोपहित आकाशो न महाकाशस्य विकारो न वावयव एवं जीवात्मा परमात्मनो नावयवो न वा विकार इति । श्रीमच्छंकराचार्या जीवस्वरूपप्रतिपादने परमात्मना सह तत्संबन्धस्य निरूपणे च परमगुरून्गौडपादाचार्यानेवानुवर्तन्ते । जलमध्यस्थरविप्रतिबिम्बदृष्टान्तेन प्रतिबिम्बितचन्द्रदृष्टान्तेन घटाकाशपटाकाशादिदृष्टान्तैश्चैमे आचार्या अविद्यया दृष्टोऽविद्योपहितस्य परमात्मन एव स्वरूपावभासो जीव इति प्रतिपादयन्तो न मुख्यत्वेनाभासवादं पुरस्कुर्वन्ति न वा प्रतिबिम्बवादं न वावच्छेदवादम् ।

१० श्रीमद्भिर्गौडपादाचार्यैर्ध्वनितस्य श्रीशंकराचार्यैरप्रतिषिद्धस्यावच्छेदवादस्य वाचस्पतिमिश्रैः स्वोपरचितव्याख्यायां भामत्यां पुरस्कारः कृत आत्मनो रूपरहितत्वात्प्रतिबिम्बनस्याशक्यतया च प्रतिबिम्बवादो न संभवतीत्युक्तम् । यद्यपि शारीरभाष्यद्वितीयाध्यायस्य व्याख्याने भामत्यां वाचस्पतिमिश्रैः प्रतिबिम्बवादस्योल्लेखः कृतस्तथापि तत्करणे नामीषामुद्देशस्तस्य केनापि प्रकारेण समर्थने । किं तु जीवस्वरूपविषये भेदवादं प्रतिपादयतः शङ्काकारस्य निराकरणायासावुपन्यस्तः । सांप्रदायिको गुरुशिष्यप्रवादोऽप्यवच्छेदवादपुरस्कर्तार एवामी वाचस्पतिमिश्रा इति कथयति—

" वाचस्पतेरवच्छेद आभासो वार्तिकस्य च ।
संक्षेपशारीरकृतां प्रतिबिम्बमिहेष्यते ॥ " इति संस्मरन् ।
सिद्धान्तबिन्दावप्यवच्छेदवादपुरस्कृत्त्वेनैवामीषां निर्देशः कृतः । इतरे केचिद् व्याख्याकारा जपाकुसुमदृष्टान्तं प्रदर्श्याशुद्धाविद्या जीवात्मानं मलिनयतीत्याभाषमाणा आभासवादं प्रतिपादयामासुः । वार्तिककाराः पूर्वाचार्यैर्दत्तान्सर्वान्दृष्टान्तान्स्वग्रन्थेषु प्रदर्शयन्तोप्याभासवादं प्रति स्वकीयं पक्षपातं प्रदर्शयन्ति । आभासवादशब्दार्थस्त्वमीभिः प्राचीनमतमनुसृत्य गृहीत इति प्रतिभाति । यदेते व्याधराजपुत्रदृष्टान्तेन जीवोपि परमात्मस्वरूपं यदा स्मरति तत्क्षण एवासौ परमात्मभावं प्रतिपद्यत इति प्रतिपादयन्ति ।

११ अर्वाचीनानां व्याख्याकाराणां मध्ये प्रायशः सर्वेषां प्रतिबिम्बवादप्रतिपादन ऐकमत्यं दृश्यते सत्स्वपि लघीयस्सु सूक्ष्ममतभेदेषु प्रतिबिम्बप्रक्रियाविषये । प्रकटार्थविवरणतत्त्वविवेकपञ्चपादिकाविवरणकारा अज्ञानप्रतिबिम्बितं परमात्मानं जीवात्मत्वेन वदन्ति । विद्यारण्यसर्वज्ञात्ममुनिप्रभृतयः पुनरविद्यापरिणामभूतेन्तःकरणे प्रतिबिम्बितमात्मानं जीवात्मत्वेन संगिरन्ते जीवात्मनोनेकत्वं प्रलयकाले चान्तःकरणसंस्काराणामुपाधित्वं स्वीकुर्वन्ति । अज्ञानप्रतिबिम्बो जीवात्मेति वादिनां मध्ये केचिद्धर्मराजाध्वरीन्द्रप्रभृतयोऽविद्यासंस्कारान्नानाविधा अविद्या वा जीवानामनेकत्वे कारणं ब्रुवन्ति । जीवैकत्वं प्रतिपादयन्तः केचिव्द्याख्याकारा उपाधिभूताया अविद्याया एकत्वमेव जीवानामेकत्वे हेतुमुपन्यस्यन्ति। जीवात्मनामेकत्वेपि देहभेदादन्तःकरणभेदाच्च प्रतिप्राण्यनुभवभेदो वेदनाभेदश्च दृश्यते । अतो न चैकस्य वेदना अनुभवांश्चान्यो वेदयतेनुभवति चेति वदन्ति । प्रातिभासिकस्यास जीवात्मनोवस्थात्रयं सुषुप्तिस्वप्नजाग्रदवस्थासु भवति यस्मिन्नसौ क्रमेण प्राज्ञतैजसविश्वनाम्नीः पारमार्थिकप्रातिभासिकव्यावहारिकाभिधेया वा संज्ञा लभते ।

१२ जीवात्मनो देहेन यः संबन्धस्तद्विषयेपि बहुविधानि मतानि बहुभिष्टीकाकृद्भिः प्रतिपादितानि । एके तावदेकशरीरैकजीववादं प्रतिपाद्य प्रत्यक्षतः परिदृश्यमानानां भौतिकशरीराणां सत्ताज्ञानमुक्त्यादीनि सर्वाणि प्रातिभासिकान्येवेति ब्रुवन्ति । इतरे पुनरुपरि प्रतिपादितं मतमत्यन्तमनुभवविरुद्धमिति मन्वाना हिरण्यगर्भ एव परमात्मनः प्रतिबिम्बभूतो मुख्यो जीवो वर्तते स एव च स्वलीलया क्रीडनार्थं स्वाभासरूपान्बहूञ्जीवात्मनो बहूनि च भौतिकानि

शरीराणि प्रतिविधत्ते। अन्ये पुनर्जीवनामधेयं चित्तत्त्वमेकमेव सर्वेषु देहेषु वर्तते सुखदुःखादीनि तु देहकृतत्वात्प्रतिदेहं भिद्यन्त इति प्रतिपादयन्ति। बहवष्टी-काकारास्तु पाञ्चभौतिकेषु बहुषु देहेषु पृथक्पृथग्बहूञ्जीवात्मनः कल्पयन्ति पृथक्पृथग्जीवात्मनामाभासकारणमविद्यान्तःकरणं वेति वदन्ति। यदा-विद्या आभासकारणत्वेन गृह्यते तदाविद्यानाशादुपाधिभूतस्याविद्यापरि-णामादेर्नाशादविद्यासंबन्धनाशाद्वा जीवात्मनः संसारान्मोक्षो भवति। मोक्ष-स्यास्य च कारणभेदनिदर्शनादधोलिखिताः पञ्च विकल्पाः प्रदर्शिताः। यो जीवो मुक्तो भवति तस्य जीवस्योपाधितया वर्तमानो योऽविद्याभागस्तस्य नाशो भवतीत्यविद्याभागनाशाज्जीवमोक्ष इति प्रथमो विकल्पः। मनोनाशान्मनःसंस्कार-नाशाद्वा मोक्ष इति द्वितीयो विकल्पः। मोक्षकालेऽविद्यासंबन्धः प्रणश्यत्य-विद्यासंबन्धनाशाच्च मोक्ष इति तृतीयो विकल्पः। यथा व्यक्तिनाशेऽन्यत्र वर्तमानापि जातिर्नष्टाया व्यक्तेः सकाशान्निवर्तत एवं ज्ञानोत्तरकाले मुमुक्षो-र्जीवस्य सकाशादविद्या विनिवर्तते। अविद्याविनिवर्तनाच्च जीवमोक्ष इति चतुर्थो विकल्पः। आवरणविक्षेपशक्तिहेतुभूताया अविद्याव्यक्तेर्नाशो ज्ञानोत्तरकाले भवति। तथा च पृथक्पृथग्जीवकृतानां पृथक्पृथगविद्याव्यक्तीनां नाशात्पृथक्-पृथग्जीवानां मोक्ष इति च पञ्चमो विकल्पः।

१३ सृष्टिकर्मण्यस्पृष्टायाः शुद्धायाश्चितः सकाशाद्भिन्नस्येश्वरस्य स्वरूपं प्रति न कापि व्याख्याकृत्सु पृथग्वर्णनार्हा विप्रतिपत्तिः। अखिलसृष्ट्युपादान-कारणभूतायां मायायां प्रतिबिम्बितं शुद्धचैतन्यमीश्वरोन्तर्यामितया वर्तमानः सकलसृष्टपदार्थान्नियमयति। विवरणकारास्त्वीश्वरस्वरूपविषये प्रतिबिम्बवादं नानुमन्यन्ते शुद्धचैतन्यप्रायमेवेश्वरस्वरूपं वर्णयन्ति। ते हि—अमुष्यैवेश्वरापर-नामधेयस्य बिम्बस्य यत्प्रतिबिम्बं स जीवः सततं संनिधीयमानेन बिम्बेन प्रतिनियन्त्र्यते अविद्यायामन्तःकरणे वात्मनः प्रतिबिम्बनमनुमन्वानस्येश्वरस्य सङ्ग इव किंचित्कल्पनीयमापतति येनेश्वरः शुद्धचैतन्याद्भिद्यते। शुद्धचैतन्य-प्रतिबिम्बभूतो जीवो बिम्बरूप ईश्वरे सर्वथावलम्बते ईश्वरश्च स्वप्रतिबिम्बभूतै-र्जीवैः सह क्रीडन्निव वर्तते इति मन्यन्ते।

१४ उपाधिरहितं शुद्धचैतन्यं शुद्धचित्परमात्मब्रह्मादिशब्दैर्व्यपदिश्यते। अस्यैव शुद्धचैतन्यस्य साक्षात्कारान्मुक्तिं प्राप्नोति जनः। मायोपहितस्यैतस्य शुद्धचैतन्यस्य द्वौ प्रकारौ संभवतः। उपहितस्यास्य मायासहितस्येश्वरसंज्ञा

मायांशविरहितस्य साक्षिसंज्ञा साक्षिचैतन्यसंज्ञा वा । मायांशविरहितत्वात्साक्षिचैतन्यस्य सर्वदैकत्वमेव । जीवस्याप्येवंप्रकारेण साक्षिचैतन्यं वर्तत एव । श्रीमद्विद्यारण्यैः पञ्चदश्यामिमे प्रकारा बहुतरं स्फुटीकृताः । ब्रह्मचैतन्यमेवेश्वरशब्देन व्यपदिशन्तो वार्तिककारा ईश्वरजीवरूपौ द्वावेव चैतन्यस्य प्रकारौ प्रतिपादयन्ति साक्षिचैतन्येश्वरयोर्मध्ये न कमपि भेदं पश्यन्ति ।

१५ ईश्वरस्य सर्वज्ञत्वं सर्वसंमतमेव । सर्वज्ञत्वनिरूपणविषये तु सन्ति कतिपये सूक्ष्मा मतभेदाः । ईश्वरस्य ज्ञानोत्पत्तौ मनसोऽभावोऽकिंचित्करो यतस्तस्य भिन्नभिन्ना मायावस्था जीवस्यान्तःकरणवृत्तय इव ज्ञानतां प्रतिपद्यन्ते । भारतीतीर्थादयस्तु सर्वसंसारिजनानुभूताखिलज्ञानसाक्षिभूतत्वान्निखिलजनमनोवासनासंस्कारयुक्तया माययोपहितत्वाच्चेश्वरः सर्वज्ञ इति ब्रुवन्ति । प्रकटार्थकारास्तु स्वोपाधिभूतमायाविकारेषु सर्वेषु चैतन्यस्फुरणादीश्वरस्य सर्वज्ञत्वं मन्यन्ते । तत्त्वशुद्धिकारा वर्तमानवस्तूनां प्रत्यक्षेण भूतकालिकवस्तूनां संस्कारेण भविष्यत्कालिकवस्तूनां पुनरनुमानेनेश्वरो ज्ञानं लभते इति प्रतिपादयन्ति । सर्वेष्वेतेषूपरिनिर्दिष्टेषु मतेष्वीश्वरज्ञानार्थमविद्यावृत्तीनां कल्पनीयत्वेनेश्वरस्य प्रपञ्चज्ञानमस्माभिरुपलब्धस्य स्वप्नज्ञानस्य सदृशमेव सत्यतायां भवति । वेदान्तकौमुदीकाराः पुनर्नेश्वरज्ञानविषये वृत्तीः कल्पयन्ति । सकलमायाप्रपञ्चावभासकं ज्ञानमस्य स्वभाव एव । वर्तमानकालिकं ज्ञानमस्य प्रत्यक्षेण जायते भूतभविष्यद्वस्तूनां मायापटले वर्तमानकालेपि सूक्ष्मतया वर्तमानानां ज्ञानं मायायाः सकाशादन्यस्य कस्याप्युपाधेरभावादीश्वरस्य प्रादुर्भवति ।

१६ अखिलसंसारवस्तुजातं समुत्पादयन्त्या मायानाम्न्या आत्मनोऽनिर्वचनीयायाः शक्तेः स्वीकारः शंकराचार्यमतानुसारिभिः सर्वैरपि वेदान्तिभिः कृतः । ऋग्वेदमन्त्रेषु मायाशब्दो देवानामसुराणां च लोकातिशायिशक्त्यर्थे चमत्कारकौशल्यार्थे वा बहुशो विनियुज्यमानो दृश्यते । उपनिषत्सु भगवद्गीतासु च मायाशब्दो यद्यपि नूनं तस्मिन्नेवार्थे विनियुज्यते तथापि बहुधा आत्मशब्देन योगे आत्मनः स्वामित्वार्थाधिक्योपलक्षितत्वे दृश्यते । आत्मैवैकं तत्त्वमिति सिद्धान्तस्य निरूपणे क्रियमाणे श्रीमतां शंकराचार्याणां प्रतिक्षणं विपरिणमतो जगतः स्वरूपस्योत्पत्तेश्च विवेचनं कर्तव्यतयापतितम् । आत्मनः सकाशादुत्पन्नायाः सृष्टेरात्मनोत्यन्तभिन्नतयात्मवत्सत्यतया च प्रतिपादनं नूनमद्वैतसिद्धान्ततिरस्कारविधानप्रायमासीत् । गुरवो गौडपादाचार्यास्तु संसारस्यास्तित्वं स्वप्न-

प्रतिपादयन्ति । अयमेव प्रायशः शांकरमतानुयायिनामद्वैतिनां सिद्धान्तः । सिद्धान्तमुक्तावलीकारास्तु माया परिणामितयोपादानकारणं न किमपि विवर्तोपादानकारणमिति वदन्ति । स्वाप्नसृष्टिं प्रति तु केचन जीवात्मानं विवर्ततया कारणत्वेन प्रतिपादयन्त्यपरे चेश्वरं विवर्ततया कारणं मन्यन्ते। समासतो वक्तव्ये शांकरमतानुयायिनामद्वैतवेदान्तिनां पुरतः प्रदर्शिताः सिद्धान्ता दृश्यन्ते । शुद्धचैतन्यं न कदापि कयापि रीत्या प्रपञ्चस्य कारणं मायोपहितं चैतन्यं मायांशसहितमुपादानकारणं भवति चैतन्यांशो विवर्ततया मायांशः परिणामितया। प्रपञ्चकर्तृत्वविषये तु प्रायशः सर्वे ईश्वरमेव कर्तारं मन्यन्ते। कतिपये दृष्टिसृष्टिवादपुरस्कर्तारस्तु जीवात्मानं कर्तृत्वेन प्रतिपादयन्ति । स्वप्नसृष्टेस्तु सर्वथा जीवात्मैव कर्ता भवति ।

१८ मायाऽविद्याशब्दयोर्मध्ये मायाशब्दः प्राचीनतरो वेदेषूपनिषत्सु चेन्द्रजालादीनामिव लोकोत्तरासु चमत्कृतिजनिकासु शक्तिषु प्रयुज्यते । अविद्याशब्दः प्रथममुपनिषत्स्वात्मविद्येत्यर्थे प्रयुक्तस्य विद्याशब्दस्य विरुद्धेर्थे प्रयुज्यमानो दृश्यते। बौद्धदर्शनेऽविद्याशब्दोऽविद्यासंस्कारविज्ञानादिद्वादशनिदाने भवचक्रापरपर्याये दृष्टः पारमार्थिकवस्त्वज्ञानार्थे उपयुक्तो दृश्यते। योगसूत्रेषु भगवता पतञ्जलिनाविद्याशब्दो विपरीतख्यातावनित्येषु वस्तुषु नित्यबुद्धिरूपायामशुद्धेषु वा शुद्धबुद्धिरूपायां दुःखेषु वा सुखबुद्धिरूपायामनात्मसु वात्मरूपायां प्रयुक्तः। विपरीतख्यातिश्चैषा न प्रामाणिकी न वाप्रामाणिकी ज्ञानविरुद्धापि ज्ञानविशेषरूपेत्युक्तम्। इत्थमसावविद्याशब्दः श्रीशंकराचार्यकालात्प्राग् वेदान्तशास्त्रविनियुक्तासु पारिभाषिकीषु संज्ञासु तत्त्वज्ञानाभाव इत्यर्थेऽभावसंज्ञासीन्मायाशब्दश्च जीवकृतानामनेकविधकल्पनानां बाह्यसृष्टेश्च कारणभूतत्वेन वर्णितो लोकोत्तरां चमत्कृतिजनिकामात्मनः शक्तिमभ्यधत्त । एवंप्रकारिकाया आत्मनः शक्तेस्तत्त्वज्ञानाभावं प्रति कारणत्वेनोक्तिस्तत्र तत्र दृश्यते निबन्धकाराणाम् । अस्याश्चात्मशक्तेरवस्थाद्वयम् । एकमावरणशक्तिमत् अपरं च विक्षेपशक्तिमत् । अत्रोत्तरावस्थाविशिष्टस्य पूर्वावस्थाविशिष्टं कारणम्। तदविद्याशब्दवाच्यम्। कार्यभूतं तु मायाशब्दवाच्यम्। अनेनाभिप्रायेण मायाऽविद्ययोर्मध्ये कार्यकारणभावरूपः संबन्धो वर्तते इत्येके वदन्ति । कार्यकारणयोरैक्याद् द्वावपि पर्यायशब्दत्वेन प्रायः सर्वैर्गृहीतौ । मायाशब्दस्य प्रयोगः श्रीशंकराचार्यैः प्राचीनवेदान्तिभिः प्रोक्त एवार्थे प्रायशः कृतः । मायाशब्दादर्वाचीनमविद्याशब्दं बहुभिः पूर्वे-

क्षान्तिभिरज्ञानार्थे पारिभाषिकसंज्ञात्वेन स्वीकृतं श्रीमच्छंकराचार्यैः परित्यक्तुं न शक्ता मायाशब्दार्थे एव प्रायः पर्यन्वयुञ्जत । यद्यपि वेदान्तग्रन्थेष्वीश्वराज्ञानप्रतिपादने प्रायशो मायाशब्दस्य प्रयोगो दृश्यते जीवाज्ञानप्रतिपादने चाविद्याशब्दस्य प्रयोगो दृश्यते तथापि न तथाविधः सार्वत्रिको नियमः इत्येतच्छ्रीमद्भिर्माधवाचार्यैः सर्वदर्शनसंग्रहे सम्यक्तया प्रतिपादितम्—" ननु मायाऽविद्ययोः स्वाश्रयव्यामोहहेतुत्वतदभावाभ्यां भेदस्य जागरूकत्वेनाविद्यामयत्वे वक्तव्ये मायामयत्वोक्तिरारोप्यस्यायुक्तेति चेत् तदयुक्तम् । अनिर्वचनीयत्वतत्त्वाभासप्रतिबन्धकत्वादिलक्षणजातस्य मायाऽविद्ययोः समानत्वात् । किं चाश्रयशब्देन द्रष्टोच्यते कर्ता वा । नाद्यः। मन्त्रौषधादिनिमित्तमायादर्शिनस्तस्य व्यामोहदर्शनात् । न द्वितीयः । विष्णोः स्वाश्रितमाययैव रामावतारे मोहितत्वेन तत्र मायावित्वस्याप्रयोजकत्वात् । बाधनिश्चयमन्त्रादिप्रतीकारबोधयोरेव प्रयोजकत्वात् । अपरथा पङ्ग्वन्धवत्कर्तापि व्यामुह्येत । न चेच्छाविधानाननुविधानाभ्यां तयोर्भेद इति भणितव्यम् । मायास्थले मणिमन्त्रौषधादिप्रयोगवदविद्यास्थलेपि द्विचन्द्रकेशोण्ड्रकादिविभ्रमनिमित्ताङ्गुल्यवष्टम्भादावपि स्वातन्त्र्योपलम्भात् । अत एव तत्र तत्र श्रुतिस्मृतिभाष्यादिषु मायाऽविद्ययोरभेदेन व्यवहारः संगच्छते । क्वचिद्विक्षेपप्राधान्येनावरणप्राधान्येन च मायाऽविद्ययोर्भेदेन व्यवहारो न विरुध्यते । तदुक्तम्—

माया विक्षिपदज्ञानमीशेच्छावशवर्ति वा ।
अविद्या छादयत्तत्त्वं स्वातन्त्र्यानुविधायि वा ॥ ( सर्वदर्शनसंग्रहे पृ. ४४७ पं. ७—पृ. ४४९ पं. ४ ) इति ग्रन्थेन ।

१९ श्रीशंकराचार्यमतानुयायिनो व्याख्याकारा उपाधिभेदं प्रदर्श्य जीवेश्वरभेदं वर्णयामासुः । प्रकटार्थविवरणकारा अविद्यामाययोर्मध्येवयवावयविभावं प्रकल्प्यावरणशक्तियुतान्मायांशानविद्येति निर्दिश्य।विद्योपाधियुताञ्जीवानाहुः । तत्त्वार्थविवरणकारास्त्वेकस्या एव प्रकृतेः सत्त्वरजोरूपयोर्गुणयोः संबन्धान्मायाऽविद्ये नाम्नी भवत इति वदन्ति। केचन टीकाकारा विक्षेपशक्तिप्रधानां प्रकृतिं मायेति वदन्ति तथा चावरणशक्तियुतामविद्येति वदन्ति । सर्वज्ञात्ममुनिविद्यारण्यसुरेश्वराचार्यप्रभृतयस्तु मायाऽविद्ययोर्भेदान्वेषणं जलताडनप्रायमिति मन्वाना मायाऽविद्ये पर्यायशब्दत्वेन गृहीतवन्तः । मायाऽविद्ययोर्मध्ये भेदं प्रतिपादयन्तो वेदान्तिन ईश्वरस्य मायामुपाधित्वेन कल्पयन्ति जीवस्याविद्याम् । मायाविद्ये

पर्यायत्वेन स्वीकुर्वाणा मायामीश्वरस्योपाधिं जीवस्य चान्तःकरणमुपाधिं कल्पयन्ति ।

२० यद्यपि श्रीशंकराचार्यास्तत्पूर्वकालीना अद्वैतवेदान्तिनश्च मायोपकल्पितमौपाधिकमेवात्मानं जीवात्मत्वेन कल्पयन्ति जीवात्मपरमात्मनोर्मध्ये न कमपि वास्तवं भेदं पश्यन्ति तथाप्यौपाधिकभेदभिन्नौ जीवात्मपरमात्मानौ कथं परस्परं संबद्धाविति सूक्ष्मतमया रीत्या विवेचनकर्मणि बहवो व्याख्याकारा आत्मानं व्यापारयांचक्रिरे । गौडपादाचार्या उपनिषत्प्रतिपादितात्माद्वैतस्यानादिकालतः प्रचलिताचार्यशिष्यपरंपरानिरूपितार्थत्वेन कल्पनावादं पुरस्कृत्य कल्पयत्यात्मनात्मानमित्यादिकारिकाभिर्जीवात्मसंबन्धमाभास्याभासरूपं प्राहुरिति तु पूर्वं ( पृ. ११ )प्रदर्शितमेव । यद्यप्युदाहरणत्वेन घटोपहिताकाशकुड्योपहिताकाशदृष्टान्ताः स्थले स्थले मीभिर्दत्तास्तथापि सर्वांशेन दृष्टान्तसाम्यप्रदर्शनं नामीषां विवक्षितं किं तूपहिताकाशस्य पृथक्कल्पनं यथाभासस्तथा जीवस्यापि पृथक्कल्पनमाभास इत्येव प्रदर्शने तेषां तात्पर्यम् । श्रीमद्भिः शंकराचार्यैः शारीरभाष्ये सूत्रोल्लिखितानि तानि तान्युपनिषद्वाक्यानि प्रदर्श्य दृष्टान्तपूर्वकं जीवस्वरूपविवेचनं कृतम् । तथा हि दहराधिकरणे "उत्तराच्चेदाविर्भूतस्वरूपस्तु" ( ब्र. सू. १।३।१९ ) इति सूत्रे भाष्ये जीवात्मनः प्रमाणजनितविवेकग्रहणादनन्तरं रक्तनीलाद्युपाधिविगमे स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यमानेन स्फटिकेन तुलना कृता । अंशाधिकरणे " अंशो नानाव्यपदेशात् " ( ब्र. सू. २।३।४३) इति सूत्रे भाष्ये "जीव ईश्वरस्यांशो भवितुमर्हति यथाग्नेर्विस्फुलिङ्गा" इति वाक्ये जीवो विस्फुलिङ्गसदृशत्वेनोक्तः । उभयलिङ्गाधिकरणे " अत एव चोपमा सूर्यकादिवत् " ( ब्र. सू. ३।२।१८ ) इति सूत्रे भाष्ये जलचन्द्रजलसूर्याभ्यां जीवात्मोपमितः । अंशाधिकरणे " प्रकाशादिवन्नैवं परः " ( ब्र. सू. २।३।४६) इति सूत्रे भाष्ये"सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते " इत्यनेन जीवात्मा कम्पमानेन सूर्यप्रतिबिम्बेन समान उक्तः । तत्रैव भाष्ये जीवात्मा ऋजूकृतवक्रीकृताद्यङ्गुल्याद्युपाधिसंबन्धेन ऋजुवक्रभावमिव प्रतिपद्यमानेन सौरचान्द्रमसप्रकाशेन घटादिना सह चलता घटाकाशादिना च तुलितः । तस्मिन्नेवाधिकरणे " आभास एव च " ( ब्र. सू. २।३।५० ) इति सूत्रे भाष्ये आभासवादमिव पुरस्कृत्य " आभास एव चैष

जीवः परमात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः न स एव साक्षात् नापि वस्त्वन्तरम् ” इत्यनेन परमात्मनः सकाशाज्जीवस्य न भिन्नत्वं न चाभिन्नत्वमुक्तम् । उपरि निर्दिष्टेभ्यः सर्वेभ्यो दृष्टान्तेभ्य एतत्प्रतिभाति यच्छ्रीशंकराचार्या ईश्वरस्य सकाशाज्जीवस्य न सर्वथा भिन्नत्वमित्येव केवलं प्रतिपादयितुमीक्षते नोपाधिस्वरूपविशेषविवेचने बद्धादरत्वं प्रदर्शयन्ति ।

२१ श्रीशंकराचार्यानन्तरं प्रवृत्ताष्टीकाकारा मायावादव्याख्याने शंकराचार्यैः प्रदर्शितानामविद्याभासजीवेश्वरादिविषयकानां नानाविधानां सिद्धान्तानां स्फुटीकरणे प्रवृत्ताः पूर्वपक्षापरपक्षविवेचनाय भेदप्रभेदोपभेदनिदर्शनाय चोपयुक्तासु युक्तिषु तर्केषु च निपुणं व्यापारितमतिविभवाः प्रतिसिद्धान्तं सूक्ष्ममतभेदान् प्रदर्शयामासुः स्वान् स्वान् सिद्धान्तांश्चेतरापेक्षया साधीयसः प्रतिपादयामासुः । तथाहि—कल्पनावादनिदर्शनपूर्वकं गौडपादाचार्यैस्तदनुयायिभिरितरैश्च प्रतिपादितात्मैकत्वविषये जीवात्मन एव केवलं काल्पनिकत्वमुतोपाधेरविद्याया एव केवलमुतोभयोरिति प्रश्नमुद्भाव्य वार्तिककारास्तदनुयायिनश्चोपनिषद्वाक्यानां शारीरभाष्यवाक्यानां च स्फुटमुत्तानार्थं प्रतिपिपादयिषन्त उभयोरपि काल्पनिकत्वं स्वीकृत्याभासवादं निरूपयांचक्रिरे । ते ह्यात्मनः काल्पनिकं मिथ्याभूतं स्वरूपं जीवः आत्मरूपं मूलस्वरूपं काल्पनिक्यविद्याविनिवृत्तौ व्याधराजपुत्र इव राजपुत्रोऽहमिति स्मृतौ राधासुतमात्मानं मन्यमानः कर्ण इव वा कुन्तीसुतत्वाकर्णने प्रतिपद्यत इति वदन्तो द्वयोरप्याभासत्वं प्रदर्शयामासुः । एतच्च दहराधिकरणे उत्तराच्चेदिति सूत्रे भाष्ये सूचितम् । अर्वाचीना आभासवादिनो जपाकुसुमदृष्टान्तं प्रदर्शयन्ति । एतत्सर्वमत्र सिद्धान्तबिन्दुटीकायां स्पष्टं प्रतिपादितम् ( पृ० ४३–४५ )

२२ अयमेव विशेषोस्याभासवादस्य यदाभासवादिन इमे जीवात्मनः काल्पनिकमिवावस्तुभूतं स्वरूपं स्पष्टतया निरूपयन्तो “ जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति ” (नृ. उत्तर ९) इत्यादीनि श्रुतिवचनानि “ कल्पयत्यात्मनात्मानम् ” ( गौ. का. २।१२ ) इत्यादीनि गौडपादाचार्याणां वचनानि चावच्छेदप्रतिबिम्बवादापेक्षया साधीयस्तया व्याचक्षते । “ घटसंवृतमाकाशम् ” ( ब्र. बि. १३ ) “ यथा ह्ययं ज्योतिरात्मा ” इत्यादीन्यवच्छेदप्रतिबिम्बवादावष्टम्भकतया बहुशो दर्शितानि वचनान्येव-

भासवादिभिरुपाधेर्गुणैरुपहितस्याभासेन चोपलक्षितस्यापि मूलभूतस्यात्मस्वरूपस्याविचालित्वप्रतिपादनपरतया विनियोजितानि ।

२३ वाचस्पतिमिश्रास्त्वेतस्य बृहदारण्यकभाष्यवार्तिके सुरेश्वराचार्यैर्निरूपितस्याभासवादस्य न पुरस्कारं कुर्वन्ति । सोपाधिकोऽपि चेतनो न काल्पनिको भवितुमर्हति जीवस्य स्वरूपमीश्वरस्येव सत्यं भवितुमर्हाति तथा च मुक्त्यै प्रयतमानेनैव जीवेन मुक्तिं लभमानेन भाव्यमिति विचारसरण्या प्रचोदितास्ते आभासवादमपाकृत्यावच्छेदवादं प्रतिपादयांचक्रिरे । पूर्वाचार्यैः प्रदर्शितैः शारीरभाष्ये श्रीशंकराचार्यैरपि " ईक्षतेर्नाशब्दम् " (ब्र. सू. १।१।५) " स्मृतेश्च " ( ब्र. सू. १।२।६ ) " शारीरश्चोभयेऽपि हि भेदेनैनमधीयते " ( ब्र. सू. १।२।२० ) " स्थित्यदनाभ्यां च " ( ब्र. सू. १।३।७ ) " भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् " (ब्र. सू. २।१।१३)"तदनन्यत्वमारम्भणशब्दादिभ्यः" ( ब्र. सू. २।१।१४ ) " अधिकं तु भेदनिर्देशात् " ( ब्र. सू. २।१।२२ ) " नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः " ( ब्र. सू. २।३।१७ ) " प्रकाशादिवन्नैवं परः " ( ब्र. सू. २।३।४६ ) " अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" ( ब्र. सू २।३।४३ ) इत्यादिषु सूत्रेषु भाष्येषु दत्तैर्घटाकाशपटाकाशादिदृष्टान्तैः प्रोत्साहिता एत आचार्या भामत्यां तेषु तेषु स्थलेषु जीवात्मपरमात्मस्वरूपमवच्छेदवादपुरस्कारेणैव व्याख्यापयामासुः । न केवलमाभासवादस्वीकारे मोक्षप्राप्तौ जीवस्य सर्वथा नाशः स्यादिति दोष आपाद्यते किं तु सर्वथाभासिकत्वस्वीकरणं जीवात्मनो जीवस्वरूपप्रतिपादनविषये प्रच्छन्नमाध्यमिकवादप्रतिपादनप्रायमेवेत्ययमपि विचारोऽमीषामवच्छेदवादपुरस्कारे प्रयोजकोऽभूत् । अविद्ययोपहितो जीवात्मा स्वरूपतः परमात्मेव सत्यतायां वर्तमानः प्रपञ्चमूलस्वरूपयाथार्थ्यज्ञाने यतमानः स्वस्यैव मुक्तिं तत्र पश्यति नान्यस्य कस्यापीत्ययमप्यवच्छेदवादे विशेषस्तत्पुरस्कारेऽमीषां मनसि प्रयोजकः स्यात् ।

२४ यद्यप्ययमवच्छेदवादो विद्वद्धुरीणैः श्रीमद्भिर्वाचस्पतिमिश्रैरतिनैपुण्येन सुसमीचीनतया प्रतिपादितस्तथापि तदनन्तरं प्रवृत्तैष्टीकाकारैर्नायं बहुधाङ्गीकृतः । सर्वज्ञात्ममुनिभिश्च तदपेक्षया वरीयस्तया सूर्यचन्द्रप्रतिबिम्बदृष्टान्तप्रतिपादकानामुपनिषदां भाष्याणां च वाक्यानामनुरोधेन प्रतिबिम्बवादः पुरस्कृतः । गौडपादादिभिर्वेदान्तविद्भिः प्रतिपादितश्च पुराणः कल्पनावाद एव तत्स्थितदोषापहानेन प्रायः प्रतिपादितोयं प्रतिबिम्बवादो यदस्मिन्नीश्वरस्य

प्रतिबिम्बत्वेन स्वीकृतो जीवात्मा बिम्बेन परमात्मना समानः स्वरूपस्य सत्यतायां भवति। तथा च यो मुक्त्यै प्रयतते स एव मुक्तो भवति। तथैवाभासवादेऽवच्छेदवादे च काले काले भिद्यमानेनोपाधिना संबन्धान्नवनवस्येव भवतो जीवस्य कृतानां कर्मणां फलस्यानुभवे ये कृतहानाकृताभ्यागमादयो दोषाः प्रदर्शितास्तेऽप्यस्मिन् प्रतिबिम्बवादे दूरीभवन्ति। अस्मिन् हि प्रतिबिम्बवादे स्थानात्स्थानं जन्मनो जन्म वा चलतोपाधिना सह जीवश्चलति परं त्वविचालित्वेन चलतोपि जीवस्य न कृतहानाकृताभ्यागमौ दोषौ। तथा चायमप्यपरो विशेषः प्रतिबिम्बवादस्य यदस्मिन्नुपाध्यायत्तत्वेन जीवात्मनो वर्तनमुपयुज्यते अनुभवश्च तथाविध एवास्माकं लोके।

२५ उपरिनिर्दिष्टानां विशेषाणां सत्त्वात्प्रतिबिम्बवादोयमितरवादद्वयापेक्षया वेदान्तिनामधिकतरमभिरुचितोभूदर्वाचीनाश्च बहवष्टीकाकाराः प्रतिबिम्बवादस्यैवाङ्गीकारं चक्रुः। प्राधान्येनामीषां प्रतिबिम्बवादिनां टीकाकाराणां मध्ये प्रकटार्थविवरणतत्त्वविवेकपञ्चपादिकाविवरणकाराणां नामानि ख्यातिमुपागतानि। विद्वन्मुकुटहीरमणयो विद्यारण्या अपि पूर्णत्वेनाङ्गीकारं चक्रुरस्य प्रतिबिम्बवादस्य। यद्यपि त्रिष्वप्येषु वादेषु सूक्ष्मतमा मतभेदा दृश्यन्ते तथापि अविद्योपहितः परमात्मैव जीवात्मा वस्तुतो न तदीयैः किं तु तदीयैरिवोपलक्ष्यमाणैरविद्यागुणैरुपहित इव दृश्यते इत्येव प्रतिपादने त्रयाणामप्येषां वादानां तात्पर्यम्। समासतो वक्तव्ये—आत्मतत्त्वप्रतिपादकानां सर्वेषां वैदिकानां वचनानां (१) शुद्धचैतन्यमेव परमार्थः (२) भिन्नतया दृश्यमानयोरपि जीवपरमात्मनोर्वस्तुतः ऐक्यम् (३) दृश्यमानस्य जीवस्वरूपस्य काल्पनिकत्वम् (४) मायैव कल्पनामूलमिति चतुष्टयमेव तात्पर्यम्। तथा च व्याधराजपुत्रादिजपाकुसुमादिघटाकाशादिसूर्यप्रतिबिम्बादिदृष्टान्तास्तत्र तत्र प्राचीनग्रन्थेषूपनिबद्धाः क्रमेण कल्पनाभासावच्छेदप्रतिबिम्बवादेषु मूलभूता इत्यलमतिप्रपञ्चितेन।

२६ यद्यप्याभासवादस्तत्प्रतिपादनाय गृहीतो जपाकुसुमदृष्टान्तश्चोपरिनिर्दिष्टानि चत्वारि प्रयोजनानि संपादयितुमलं तथापि जीवनाशादुपरिनिर्दिष्टप्रकारेण कृतनाशाकृताभ्यागमादिदोषाणां तत्र प्रक्षेपाद्विदुषां नासौ चिरमनुमतः। लोकेप्याभासप्रतिबिम्बयोर्मध्ये पुरतः प्रदर्शितास्त्रयो भेदा दृश्यन्ते—आभासाय गुणस्य प्रकारस्य वापेक्षा प्रतिबिम्बनाय द्रव्यस्य। तथाचाभास उपाधिः स्वगुणेन समग्रमुपधेयं व्याप्नोति प्रतिबिम्बने तूपाधिर्भागेनाच्छादितो भवति।

तथैवाभास्यमानमुपाधेर्न भिन्नतया शक्यते वक्तुं न वाऽभिन्नतया केवलमाभासमानं तद् दृश्यते प्रतिबिम्बं तु बिम्बेन सह समानस्वरूपं वर्तते । अमीषां त्रयाणां भेदानां मध्ये प्रथमौ द्वावत्रात्मनः सर्वव्यापित्वादमूर्तत्वाच्चाकिंचित्करौ । तृतीय एव त्वाभासवादप्रतिबिम्बवादस्य श्रेयस्त्वप्रतिपादने व्याख्याकारानुसारी करोति । किं चाभासस्थले उपाधिः स्वगुणं स्वस्मात्पार्थक्येनोपधेये प्रदर्शयति । यथा जपाकुसुमं स्फटिके रक्तिमानं प्रदर्शयति । प्रतिबिम्बस्थले तूपाधिः स्वस्मात्पार्थक्येनोपधेयं प्रदर्शयति । यथा दर्पणादिः । प्रकृते चाविद्यान्तःकरणं वा स्वान्तस्थतया चैतन्यं प्रदर्शयति । अतस्तदानुगुण्यादत्र प्रतिबिम्बवादे सविशेषमभिनिवेशोर्वाचीनानाम् । आभासवादस्यापि प्राचीनतमकल्पनावादसंनिकृष्टता वैदिकव्याख्यानां चेतरवादापेक्षया सम्यक्त्वमर्थप्रतिपादन इति द्वौ विशेषौ पुरा (पृ. १५) निदर्शितावेव । अवच्छेदवादस्याप्ययमेव विशेषो यदसौ आचार्यवत्मैर्गौडपादशंकराचार्यादिभिर्दत्तानां घटाकाशपटाकाशादिदृष्टान्तानां सम्यक्तया निरूपणे इतरान्वादानतिशेते । प्रतिबिम्बवादस्यापि कृतहानाकृताभ्यागमदोषासंस्पृष्टता(दोषास्पृष्टत्वम्) उपाध्यायत्तजीवात्मता चेति द्वौ विशेषावपि पूर्वं (पृ. १७) निदर्शितावेव । विस्तरस्तु टीकायां तत्र तत्र स्थलेषु प्रपञ्चितः स एवानुसंधेयः ।

२७ इत्थं शुद्धचित्स्वरूपपरमात्मन्येव परमार्थतत्त्वतया स्वीकृते जीवस्वप्रपञ्चादिषु चाभासतया प्रतिपादितेषु घटमहं जानामि पटमहं पश्यामीत्यादिसंविदां कथमुत्पत्तिः कथं चोपपत्तिरिति प्रश्नः पुरतः परिस्फुरति । घटपटादिज्ञानेष्ववश्यं विषयविषयिरूपौ द्वौ द्व्यधिका वा भागा विषयविषयिज्ञानादयः शुद्धचितः सकाशाद्भिन्नतया दृश्यमानाः समुपलभ्यन्ते । चित्तत्त्वमेकमेव परमार्थ इति सिद्धान्तानुरोधेनास्य प्रश्नस्योत्तरे दातव्ये विषयविषय्यादीनां शुद्धचितः सकाशाद्भेदाभावः स्वीकर्तव्य इति प्रतीयमानो भेद आरोपेणैव निर्वाह्यो भवति । तत्र च रूपकालंकार इवारोपस्याहार्यतयारोप्यारोपविषययोरभेदे स्वीकृते द्वयोरपि तयोरारोप्यारोपविषययोः सत्यतया असत्यतया वा स्वरूपसाम्यं स्वीकर्तव्यं भवति । भ्रान्तिमदलंकार इवारोपस्यानाहार्यतयाऽभेदे स्वीकृते तु ज्ञानस्य ज्ञानविषयस्य द्वयोरप्याभास्यत्वमुपपादयितुं शक्यते । तथा च घटमहं जानामीत्यादिसंवित्सु विषयिणो ज्ञानांशस्य विषयस्य घटादेर्द्वयोरपि वस्तुत आभासता । आभासिकानामेतेषां वस्तूनामस्तित्वेऽभ्युपगम्यमाने मूलभूतं जगति सर्वमद्वैतं वर्तत इति प्रवादोऽनर्थकः स्यात् । तस्मादाभास्यमानानां वस्तूनां न

ज्ञानमुत्पद्यते । प्रस्थानत्रयीप्रतिपादिताद्वैतसिद्धान्तानुसारेण प्रपञ्चस्वरूपं निरूपयद्भिः श्रीशंकराचार्यैस्तदनुयायिभिश्चायमध्यासवादो द्वैतसिद्धान्तानुसारेण प्रपञ्चस्यात्मनः सकाशादभिन्नतया निरूपणे तर्कन्यायानुरोधेन लोकान्प्रत्याययितुं समर्थः पूर्वाचार्यैः स्पष्टमप्रतिपादितोपि तद्ग्रन्थेषु निगूढतया स्थितः स्वग्रन्थेषूपनिबद्धो नात्मनः कयापि रीत्या तस्मिन्पक्षपातितयेत्यत्र वस्तुनि न संशयलेशस्याप्यवकाशः ।

२९ मानसशास्त्रज्ञानशास्त्रदेवताशास्त्रादिषु विषयेषु स्वतन्त्रग्रन्थनिर्माणे भारतीयानामाचार्याणां प्रवृत्तिः कादाचित्की समुपलब्धा यतो दुःखात्मकप्रपञ्चस्वरूपयाथात्म्यज्ञानेनाखिलदुःखमोक्षं लिप्सवः सर्वेपि पुरातना मुनयोऽध्यात्मशास्त्रस्याध्ययने तस्मिन्नेव च स्वतन्त्रग्रन्थविरचने स्वभावतः प्रवृत्ता बभूवुः । सर्वेपि दर्शनप्रवर्तका वेदग्रन्थेषु स्वस्याः श्रद्धाया न्यूनाधिक्यानुसारेण स्वेषु दर्शनेषु मूलतत्त्वं मूलतत्त्वानि वा वेदप्रतिपादितमूलतत्त्वैः सहैकस्वरूपाणि वेषद्भिन्नानि वा बहुतरां भिन्नानि वा निरूपयामासुः । वेदप्रामाण्यं स्वीकुर्वत्स्वास्तिकदर्शनेषु मध्ये उभे मीमांसादर्शने सांख्ययोगदर्शने काणादाक्षपाददर्शने च ज्ञानशास्त्रे मानसशास्त्रे च वैशिष्ट्येन विवेचनं चक्रुः । अमीषु षट्स्वपि दर्शनेषु पूर्वाचार्या भिन्नभिन्नानां स्वसिद्धान्तानां समुद्देशरूपं निगूढं गूढमीषत्प्रकाशं स्वल्पं विवेचनं चक्रुः सुखनिबोधाय तेषु तेषु शास्त्रेषु प्रविविक्षूणाम् । अनन्तरं प्रवृत्तेषु महीयस्सु टीकाग्रन्थेषु पूर्वाचार्यैः समुद्दिष्टाः सिद्धान्ताः साङ्गं सप्रपञ्चं सविवरणं तथा व्याख्याता यथा सर्वेषामेषां ग्रन्थानां सुनिपुणमालोडनेन ज्ञानशास्त्रे मानसशास्त्रे वा स्वतन्त्रा ग्रन्था विरचयितुं शक्येरन् ।

३० वैदिकेषु दर्शनेषु सर्वत्र चिदचिन्नामधेये जडचेतननामधेये वात्मानात्मरूपे द्वे एव तत्त्वे मुख्यतया प्रतिपादिते । प्रतिपाद्यस्य द्वैताद्वैतान्यतरस्य प्रधानस्य स्वसिद्धान्तस्यानुरोधेनैकस्यात्मनो द्वयोर्वात्मानात्मनोः परमार्थतोस्तित्वं तत्र च दर्शनग्रन्थेषु प्रतिपादितम् । आत्मानात्मनोः स्वरूपविवेचने स्थितेष्वपि सूक्ष्मतमेषु मतभेदेषु 'आत्मस्वरूपस्य सम्यक्तयानात्मनः सकाशाद्विवेकरूपेण ज्ञानमेव मुक्तिः' इति सर्वेषाममीषामास्तिकानामौपनिषदानां दर्शनानां मौलिकः सिद्धान्तः । यद्यपि मुक्तेः साधनमात्मस्वरूपानुसारेण साक्षात्कारज्ञानविवेकबुद्ध्यादिशब्दैस्तेषु तेषु दर्शनेषु प्रतिपादितं शब्दतो भिन्नं तथापि सर्वत्र ज्ञानरूपमेव तत्स्वीकृतम् । अस्य च ज्ञानस्यात्मनः स्वरूपतया गुणत्वेन वा स्वीकारः

कर्तव्यतयापतितः । यश्च दर्शनकारैर्नैयायिकद्वैतवेदान्त्यादिभिः सगुणात्मनः स्वीकारः कृतस्तैर्ज्ञानं परमात्मगुणरूपतया वर्णितम् । निर्गुणात्मवादिभिः पुनः सांख्ययोगाद्वैतवेदान्त्यादिभिस्तदात्मस्वरूपतया वर्णितम् । स्वरूपतया गुणत्वेन वा वर्णितमेतदात्मनो ज्ञानमेव वस्तुतश्चित्संविदादिभिः शब्दैः प्रोच्यते । व्यवहारेषु तु आन्तरैर्बाह्यैर्वा पदार्थैः सह संयुक्ता बुद्धिर्ज्ञानशब्देनोच्यते । अस्मिञ्ज्ञानस्वरूपप्रतिपादने नैयायिकवैशेषिका इतरेभ्य ईषद्भिद्यन्ते यदेतैर्मनइन्द्रियद्वारात्मनोर्थेन सह संबन्धे जाते ज्ञानं नाम क्षणत्रयस्पृष्टमात्मनो गुणभूतमुत्पद्यत इत्युक्तम् । ते च मुक्तावात्मा स्वरूपतो गुणतो वा ज्ञानरहितः पाषाणकल्पोवतिष्ठत इति वदन्ति । एतेषामन्येषां च सूक्ष्माणां भेदानां बहुत्वात्तेषां प्रपञ्चतो विवेचनाद्विरम्यतेत्र ग्रन्थविस्तारभिया ।

३१ आत्मविषयमनोरूपाणां त्रयाणां संगमनं ज्ञाने प्रयोजकमिति तु सामान्यतः सर्वेषां दर्शनकाराणां संमतम् । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति प्रत्यक्षज्ञानप्रक्रियां कथयन्तो नैयायिका वैशेषिकाश्च—आत्मविषययोः परम्परया साक्षाद्वा संबन्धो ज्ञाने प्रयोजकस्तस्माच्च जायमानं ज्ञानं क्षणत्रयसंबन्धि अनाकारं च । परप्रकाशकत्वं ज्ञानस्य स्वभावो येनेतरज्ञानानि विषयांश्च तत्प्रकाशयति । ज्ञानं न स्वप्रकाशं किं तु स्वप्रकाशने तदितरज्ज्ञानमपेक्षते । विषयसंबन्धनाशे ज्ञानं नश्यति । सुषुप्तौ मुक्तौ च ज्ञानरहित एवात्मावतिष्ठते । एवंमादिरूपं संक्षेपतो ज्ञानविषये स्वसिद्धान्तं प्रतिपादयन्ति । मीमांसकास्तु ज्ञानप्रक्रियाविषये साधारणतो नैयायिकवैशेषिकानेवानुसरन्ति । आत्मज्ञानयोस्तु ययां रीत्या संबन्धो जायते तद्विषय ईषन्मतभेद एतेषाम् । मीमांसकानां मते ज्ञानं नात्मनो गुणः किं तु स्पन्दनात्मक आत्मस्वभाव एव । स्वभावत आत्मा जडसंविदुभयात्मकः । संविद्रूपेणात्मनोंशेन यदात्मनो वस्तुनश्च सममेव स्फुरणं जायते तदेव ज्ञानमात्मनः क्रियारूपं सर्वथात्मायत्तं स्वप्रकाशं, नान्यां संविदं स्वप्रकाशनाय तदपेक्षते । ज्ञानं सर्वदा स्वार्थे प्रमाणं न तत्स्वप्रामाण्ये इतरत्संवादिज्ञानमपेक्षते । यदैकस्याः संविदोनन्तरं तद्विरुद्धा द्वितीया संविज्ञायते तदा न तया पूर्वसंविदो बाधः । अत एव वेदस्य वेदविधीनां च निरपेक्षमेव स्वार्थे प्रामाण्यम् ।

३२ सांख्यानां योगानां च ज्ञानप्रक्रिया अद्वैतवेदान्तिनां ज्ञानप्रक्रियया महत्साम्यं प्रदर्शयति । विषयाकारमापन्नस्य मनसो भिन्नभिन्नास्ववस्थास्वात्मने

यत्स्फुरणं तदेव ज्ञानमित्येते वदन्ति । विषयाकारमापन्नस्य मनसो वृत्तेर्ज्ञान-शब्देनाभिधानं लाक्षणिकमेव । सांख्यपातञ्जलमते हि आत्मा सत्त्वप्रधानायामत एवात्मवच्छुद्धप्रायायां बुद्धौ प्रतिबिम्बते । तस्यामेव च बाह्यवस्तूनि प्रति-बिम्बन्ते । प्रतिबिम्बितैस्तैः सह संसर्गमुपगत्य तेषामाकारान्बुद्धिर्धारयति तानि-च विविच्य निर्धारयति । इत्थं प्रतिबिम्बितेनात्मनोपलक्षिता प्रतिबिम्बितबाह्य-वस्तूनां चाकारं दधानोभयतोमुखदर्पणाकारा बुद्धिरेव ज्ञानं भवति । बुद्धेरात्मना यः संसर्गो जायते तत्स्वरूपविषये वाचस्पतिमिश्रविज्ञानभिक्षूणां मध्ये मतभेदो दृश्यते स तेषां ग्रन्थेभ्य एवावसेयः ।

३३ अद्वैतवेदान्तिनां ज्ञानप्रक्रिया अद्वैतस्यात्माद्वैतरूपेण मौलिकसिद्धान्तेन यथा न विरोधो भवति तथा पूर्वस्यामेव सांख्ययोगानां प्रक्रियायां कतिपया-न्विशेषान् विधाय प्रतिपादिता प्रकृते ग्रन्थे मधुसूदनसरस्वतीभिः सुविस्तरेणा-तिसमीचीनतया व्याख्याता कियतांशेन सांख्यपातञ्जलानां ज्ञानप्रक्रियया साम्यं दर्शयति । तथा च संबद्धानां विषयाणामाकारान्दधतो मनसो भिन्नभिन्नास्ववस्था-स्वात्मनः स्फुरणं ज्ञानमिति यद्यप्येतैः सांख्ययोगानामेव ज्ञानस्य लक्षणं स्व-ग्रन्थेषूपनिबद्धं तथापि मनो विषयाश्चोभयेपि अविद्याविकारा आत्मन्यध्यासिता आत्मा चोपरिनिर्दिष्टेन प्रकारेण तेष्वध्यस्त इति स्पष्टमेव प्रतिपाद्यैतैरात्माद्वैत-रूपस्वसिद्धान्तानुरोधेन तत्समर्थितम् ।

३४ अद्वैतवेदान्तसिद्धान्तानुरोधेन प्रत्यक्षस्वरूपप्रतिपादनप्रक्रियैषाल्क्लिष्टा दुर्गमा गहना च वर्तते । अन्तःकरणवृत्तिरूपाण्यविद्यावृत्तिरूपाणि वा व्यावहा-रिकाणि ज्ञानानि प्रत्यक्षज्ञानविषयीभूतपदार्थायत्तानीति तु शंकराचार्याणां मौलिकः सिद्धान्तः । तथा चेन्द्रियसंबद्धेर्थे जात एवार्थेन्तःकरणं तत्र गच्छति । पञ्चम-हाभूतानां सूक्ष्मभूतैः सत्त्वांशैरुपनिबद्धस्यान्तःकरणस्य स्वभावतो निर्मलत्वादर्थैः संबन्धमापद्यमानं तत्पात्रे प्रक्षिप्तं जलं यथा पात्रं व्याप्नोति तदाकारं च धत्ते तथार्थं व्याप्य तदाकारं दधाति । अन्तःकरणस्यार्थाकारतैवान्तःकरणवृत्तिरित्यभिधीयते । एता अन्तःकरणवृत्तयः सुषुप्तिकालं वर्जयित्वा सदैव नवनवाः समुत्पद्यन्ते । इन्द्रिय-द्वारा साक्षाद्वा स्वसंसर्गमुपयात एवार्थेन्तःकरणं तस्य प्रत्यक्षतो ग्रहणे प्रवणं भवति । दण्डायमानं च भूत्वा संबध्यते । अर्थेन संबद्धं भूत्वान्तःकरणमर्थास्थितमविद्या-पटलं दूरीकरोत्यर्थं च परिमार्ष्टि । दूरीकृतेऽविद्यापटले परिमृष्टे चार्थे अर्थान्त-र्गतं चैतन्यं परिस्फुरति । एतदन्तःकरणस्फुरणमेवाद्वैतवेदान्तप्रक्रियानुसारेण

ज्ञानशब्देनाभिधातुं युज्यते। लोके पुनरर्थाकारं दधानस्यान्तःकरणस्य वृत्तिः प्रमाणमित्यादिशब्दैरभिधीयते। अन्तःकरणं प्रमातृशब्देनाभिधीयते। अर्थस्तु प्रमेयमित्यभिधीयते। प्रमाप्रमातृप्रमाणप्रमेयरूपमेतदभिधानचतुष्टयमन्तःकरणवृत्त्याद्युपाधिकं तैरेवोपाधिभिरुपलक्षितं चैतन्यं प्रति संक्राम्यमाणमपि लोके बहुशो दृश्यते। इत्थं वस्तुत एकमेव चैतन्यमेतदभिधानचतुष्टयमुपाधिचतुष्टयसत्त्वादधिगच्छति। एतत्सर्वं मूलग्रन्थे संक्षेपेण टीकायां (पृ. ५०–६०) च विस्तरेण प्रपञ्चितं तत्र तत्र स्थानेषु द्रष्टव्यम्।

३५ संक्षेपतो वक्तव्ये प्रत्यक्षज्ञानकालेऽन्तःकरणस्य ये व्यापारा जायन्ते तत्संबन्धेनैतत्कथयितव्यं भवति। अन्तःकरणस्य प्रत्यक्षग्रहणप्रवणत्वम्, अर्थस्थिताविद्यापटलापहरणम्, अर्थपरिमार्जनरूपमर्थस्याभिव्यक्तियोग्यत्वापादनं चैते त्रयो व्यापारा भवन्ति। तदनन्तरं चान्तःकरणस्थितचैतन्यादभिन्नमर्थस्थितचैतन्यं परिस्फुरति। एतच्चैतन्यस्फुरणमेव प्रत्यक्षज्ञानम्। घटपटादिप्रत्यक्षेषु त्रयोप्येते व्यापारा भवन्ति। सुखदुःखादिप्रत्यक्षेप्येते त्रयो व्यापारा भवन्ति केवलं बाह्यप्रत्यक्ष इव तत्रान्तःकरणस्य दण्डायमानत्वं नापेक्ष्यते। सुखदुःखादीनां सर्वदा मनःसंनिहितत्वात्। ब्रह्मप्रत्यक्षे ब्रह्मणः स्वभावतो निर्मलत्वात् परिमार्जनापेक्षा। अहमज्ञ इत्यादिषु मानसप्रत्यक्षेष्वर्थस्थिताविद्यापटलं नापह्रियते। अज्ञानस्यैव तत्र प्रत्यक्षविषयत्वात्। शुक्तिरजतादिभ्रान्तिप्रत्यक्षेष्वप्यविद्यापटलस्य नापहारः। प्रत्यक्षविषयस्य रजतस्य तदावरणात्मकत्वात्।

३६ अप्रमात्वेन गणितानां कल्पनाप्रायाणां संशयविपर्ययस्वप्नविकल्पनादीनां स्थलेऽन्तःकरणस्य तद्वृत्तीनां च स्थाने अविद्या तद्वृत्तयश्च दृश्यन्ते। अन्तःकरणसांनिध्यं तु आवश्यकमेव। यतस्तदभावे तत्संस्कारसद्भावे अविद्या तद्वृत्तयश्च नोत्पद्येरन्। उत्पद्यमानेषु संशयाद्यप्रमात्मकज्ञानेषु अन्तःकरणं स्फुटोपलभ्यमानवृत्तिरहितं वर्तते। अन्तःकरणाभासस्तु तत्र वर्तमानः सुखं कल्पयितुं शक्यो यतो लोके देवदत्त इति दृश्यमानेन यज्ञदत्तेन लब्धाः प्रहारा यथा वस्तुतो यज्ञदत्तस्य तापं जनयन्त्येवमेवान्तःकरणाभासेन लब्धाः संस्कारा वास्तविकेनान्तःकरणेन लब्धा भवेयुरागामिनि काले च तैः कात्पनिकानां ज्ञानानां स्मृतिर्जायेत।

३७ स्वप्नसंशयविपर्ययादीनां स्वरूपविवेचने प्रवृत्तेषु विभिन्नमतानां वादिनां व्याख्याग्रन्थेषु समुपलभ्यमानेषु वादेषु निर्णीततत्त्वस्वरूपनिर्णये वादो

मतभेदा दृश्यन्ते। बाह्यवस्तुशून्यत्वप्रतिपादकानां योगाचारबौद्धानां मते विपर्यस्तवस्त्वपि इतरवस्तूनीव क्षणिकं विज्ञानरूपं च। इतरविज्ञानानां सत्तेव तस्यापि सत्ता। इतरविज्ञानेभ्यस्तस्य यो भेदो दृश्यते तत्र विपर्यस्तवस्तुविज्ञानसंतानगतविशेष एव कारणम्। आत्मख्यातिनामधेयमेतद्व्याख्यानमितरैर्नाद्रियते यतो यद्बाह्यवस्त्वसारत्वमलवम्ब्यैतद् व्याख्यानं कृतं तद्बाह्यवस्तूनामसारत्वकल्पनमेव प्रथमं स्वीकारानर्हम्। कल्पितेपि तस्मिन्विपर्यस्तवस्तुज्ञानस्वरूपे इदं रजतमित्यस्य स्थाने 'अहं रजतम्' इति बोधः स्यादित्यपरोपि दोषः। माध्यमिकास्तु बाह्यवस्तूनामान्तरवस्तूनां विज्ञानानां च सर्वेषामप्यसारत्वं प्रतिपादयन्ति सर्वत्र चासत्ख्यातिं कल्पयन्ति। नैयायिकवैशेषिकपातञ्जलास्तु विपरीतख्यात्यपरनामधेयामन्यथाख्यातिं विपर्ययज्ञानस्थले कल्पयन्ति। तत्र च रजतस्य सकाशाद्भेदकानां शुक्तेर्विशेषगुणानामनवगमं विपर्यये कारणत्वेन संगिरन्ते।

३८ अस्मिन्विषयेऽख्यातिवादिनो मीमांसका अनिर्वचनीयख्यातिवादिनोऽद्वैतवेदान्तिनश्च प्रामुख्येन विवदमाना दृश्यन्ते। सांख्यास्तु मीमांसकानेवानुसरन्ति। विपर्ययज्ञानस्वरूपविचाररूपोऽख्यातिवादोयं स्वेषु ग्रन्थेषु मीमांसकैर्विस्तरतो व्याख्यातः। ज्ञानस्वतःप्रामाण्यरूपस्य स्वसिद्धान्तस्यानुरोधेन ह्येतैर्विपर्यस्तवस्तुज्ञानानां स्वरूपमितरव्यावहारिकवस्तुज्ञानस्वरूपमिव सत्यतया प्रतिपादितम्। विपर्ययज्ञानेषु शुक्ते रजतस्य च ये साधारणा धर्माः शुक्लत्वभास्वरत्वादयस्ते प्रथमं प्रत्यक्षीक्रियन्ते। तत्प्रत्यक्षीकरणेन च रजतं स्मृतौ प्रादुर्भवति। पुरतो दृश्यमानस्येदंतया ज्ञायमानस्य शुक्तिरूपस्वस्तुनः स्मृतौ प्रादुर्भूतस्य रजतरूपवस्तुनश्च द्वयोर्मध्ये शुक्तित्वांशस्याज्ञानसाम्याद्गृहीतेंऽशे चात्यन्तसाम्याद्भेदस्याप्रत्यक्षीकरणादिदंतया गृह्यमाणशुक्तिरूपवस्तुप्रत्यक्षीकरणं रजतस्मरणमिति चोभे संविदौ संमिश्रीभूयेदं रजतमिति संविदुत्पद्यते या चेतरव्यावहारिकज्ञानवत्प्रामाण्ये व्यापारे कार्ये च समर्था भवति। इयं मीमांसकप्रतिपादितमिथ्याज्ञानविषयकज्ञानप्रक्रिया रजतसकाशाद्भेदकानां शुक्तेर्धर्माणां तत्र सत्त्वेपि तेषामनुद्भावनादख्यातिरित्युच्यते।

३९ अद्वैतवेदान्तवादिनस्त्विमामख्यातिं खण्डयित्वा तत्स्थानेऽनिर्वचनीयख्यातिं प्रतिष्ठापयन्ति। कल्प्यमानस्य रजतस्य त्वविद्यापरिणामत्वान्न तस्येतररजतवद्व्यावहारिकं सत्यत्वं न वा शशशृङ्गवत्तुच्छत्वमिति रजतस्यानिर्वचनीयत्वादिमां संविदमनिर्वचनीयख्यातिनामिकां वदन्ति। स्वाप्नप्रपञ्चस्य ज्ञानं

शुक्तिरजतादिविपर्ययज्ञानसदृशमेव । उभयोरपि स्थलयोरविद्यापरिणामा एव प्रमेयवस्तूनि अविद्याप्रवणत्वमेव प्रमाणम् अविद्यैव प्रमात्री वस्त्वाकाररूपं बिभ्रती अविद्या च प्रमा ।

४० अनुमानशब्दादिभ्यः प्रत्यक्षेतरेभ्यः प्रमाणेभ्यो जायमानस्य ज्ञानस्योपरिलिखितैवोपपत्तिः । केवलं तत्रान्तःकरणस्य विषयसंसर्गाभावेनार्थगताविद्यायाः पटलस्य दूरीकरणाभावात्तस्याश्च परिमृष्टत्वाभावान्न तत्रावरणभङ्गश्चित्प्रकाशश्च । ज्ञायमानार्थाकारधारणरूपाऽन्तःकरणवृत्तिरत्रान्तःकरणदेश एवोपलभ्यते न प्रत्यक्षज्ञान इव विषयदेशे । नात्रान्तःकरणस्य दण्डायमानत्वम् । अन्तःकरणवृत्तेरेवात्र प्रमात्वम् । यदत्र लिङ्गपरामर्शशब्दाद्युपलाक्षितत्वमन्तःकरणस्य तदेवान्तःकरणस्य प्रवणत्वं तदेव च प्रमाणम् । अन्तःकरणं प्रमातृ । ज्ञानगम्योऽर्थः प्रमेयः । गाढप्रसुप्तस्य जनस्यानुभवस्थले तु तिस्रोऽविद्यावृत्तयो वर्तन्ते याः स्वाप्नविपर्ययज्ञानेष्विव साक्षिचैतन्यमवभासयति । अविद्यावृत्तीनामेवात्रावभास्यत्वादत्रापि नाविद्यावरणभङ्गः । इत्थं चैतदुपपन्नं भवति । अन्तःकरणवृत्तिभिरुपलब्धस्य ज्ञानस्य स्थलेऽन्तःकरणोपहितस्य जीवात्मनः प्रमातृत्वम् अविद्यावृत्तिभिरुपलब्धस्य ज्ञानस्य स्थले तु साक्षिचैतन्यस्य प्रमातृत्वम् । जीवन्मुक्तस्य तु नास्मादृशानामिव व्यावहारिकं ज्ञानम् । साक्षिचैतन्यस्य स्फुरणमेव केवलं तस्य भवति येन प्रपञ्चादिभावयाथात्म्यस्य लोकातिशायि ज्ञानं तस्य जायते । प्रत्यक्षज्ञानस्थले पुरुषगताज्ञानं विषयगताज्ञानं च दूरीकर्तव्ये भवतः । अनुमानादिस्थले तु पुरुषगताज्ञानमेव केवलं दूरीकर्तव्यं भवति । सर्वमेतद्विस्तरशो व्याख्यातं मूले टीकायां च ( पृ. ६४ ) तत्र तत्र स्थलेषु तद् द्रष्टव्यम् ।

४१ प्रस्तुतग्रन्थप्रणेतृणां लोकातिशायिबुद्धिविभवेन विस्मापितविद्वदन्तःकरणानामपूर्वग्रन्थनिर्माणेन जीवितसमय एव दिगन्तविख्यातकीर्तिदुन्दुभीनां कालनिर्णयविषये जीवितयात्राविषये चेतरभारतीयग्रन्थकर्तॄणामिव नास्माकं विस्तरतो वृत्तान्तः कुतश्चिदप्युपलभ्यते नामीषां ग्रन्थेभ्यो न वेतरेषाम् । विद्वत्परंपरागता वृत्तान्तास्तु ख्रिस्तीयसप्तदशशतकस्योत्तरार्धे दिगन्तश्रूयमाणकीर्तिध्वानाः पञ्च पण्डितप्रवराः संस्कृतदर्शनेषु साहित्ये च कृतबहुपरिश्रमा लोकोत्तरप्रतिभासंपन्नाः प्रसिद्धपाण्डित्यपूर्णग्रन्थनिर्मातारः प्राचीनवेदशास्त्राध्ययनाध्यापनं प्रति नवमिव चैतन्यमर्पयन्तो भूषयांचक्रिरे भारतं वर्षमिति प्रचलिता दृश्यन्ते विद्वद्गोष्ठीष्वध्ययनशालासु च वाराणस्यादिपत्तनेषु दक्षिणापथे च । इमे

पञ्च पण्डितास्तु—प्रथमे तैलङ्गदेशीया जगन्नाथपण्डिता येषां रसगङ्गाधरादिग्रन्था लोकातिशायिप्रतिभावैभवस्याद्यापि साक्षित्वं भजन्ते। द्वितीया भाट्टदीपिकाकर्तारः पूर्वमीमांसाशास्त्रे प्रचुरं प्रावीण्यमुपगताः खण्डदेवमिश्राः। तृतीया वङ्गदेशीया गदाधरभट्टा यैर्न्यायशास्त्रेऽपूर्वग्रन्थनिर्माणं चक्रे नवद्वीपन्यायशास्त्राध्ययनाध्यापनपरंपरा च स्थापिता। चतुर्था दाक्षिणात्याः 'काळे' इत्युपाह्वाः सतीगर्भजा नागेशभट्टाः काश्यां निवसन्तो व्याकरणयोगधर्मालंकारशास्त्रादिषु विख्यातग्रन्थनिर्मातारोऽभूवन्। पञ्चमास्तु प्रस्तुतग्रन्थप्रणेतारो मधुसूदनसरस्वतीनामधेया यैरद्वैतवेदान्तशास्त्रे प्रस्तुतग्रन्थनिर्माणेन प्रतिभावैभवं दर्शितं गूढार्थदीपिकादिरचनया च यैर्निखिलवेदान्तग्रन्थावलोकनं तद्रहस्यज्ञानं च प्रकटीकृतमद्वैतसिध्द्यादिग्रन्थैश्च विद्वद्गोष्ठीपाण्डित्यं वादनैपुण्यं च प्रदर्शितम्।

४२ एते सर्वे पण्डिता भिन्नाभिन्नेषु शास्त्रेषु दर्शनेषु च तत्कालेऽधिगताजय्यपत्राः प्रायः समकालीना आसन्निति पारंपर्यगतः प्रवादः। अमीषां मध्ये जगन्नाथरायाणां कालो बहुभिस्तद्ग्रन्थेषूपलभ्यमानैरान्तरैरितरग्रन्थेषूपलभ्यमानैर्बाह्यैश्च प्रमाणैः ख्रिस्तीयसप्तदशशतकस्योत्तरभाग इति निर्णीतः। नागेशभट्टानां कालोपि प्रायः स एवेति तत्प्रसृतशिष्यपरंपराद्यापि दक्षिणापथे प्रवहन्ती साक्षितां भजति मुखान्मुखं संक्रान्तेन परंपराविषयप्रवादेन। विद्वत्परंपरायामस्यां श्रीमद्भ्यो नागेशभट्टेभ्यः प्रसृतायां नागेशभट्ट तारे इत्युपाह्वरामचंद्रभट्ट—पायगुंडोपाह्व बाळंभट्ट—थत्ते इत्युपाह्व नीलकण्ठशास्त्रि—अभ्यंकरोपाह्वभास्करशास्त्रि—अस्मद्गुरु गोडबोले इत्युपाह्व रामशास्त्रिनिर्मितायामुत्तरोत्तरः प्रत्येकं पूर्वपूर्वेण सह परिचित आसीत्तद्बुद्धिवैभवं च प्रायः शिष्यरूपेण प्रत्यक्षीकृतवानिति प्रतीयते। गदाधरभट्टानामपि स एव काल इत्यर्वाचीनानां पण्डितानां मतम्। श्रीमदप्पय्यदीक्षितविरचितवेदान्तपरिमलग्रन्थस्य मधुसूदनसरस्वतीभिर्नाम्नोच्चारितत्वात्परिमलकर्तॄणामप्पय्यदीक्षितानां प्राग्वैषां कालः प्रक्षेप्तुं शक्यते। स्वगुरुपादानां नामसंकीर्तनादन्यन्न किमप्युपलभ्यतेऽमीषां ग्रन्थेभ्यस्तथा च सरस्वतीनामधेयैरितरैरद्वैतिपण्डितैरद्वैतानन्दसरस्वतीस्वयंप्रकाशानन्दसरस्वतीसदाशिवेन्द्रसरस्वतीब्रह्मानन्दसरस्वतीनृसिंहसरस्वतीप्रभृतिभिः सहामीषां कः संबन्धस्तदपि नोपलभ्यते। सरस्वतीशब्दः सर्वेषाममीषां बहुमानाभिधाय्युपपदत्वेन प्रकल्पित इति प्रतिभाति।

४३ संस्कृतभाषायां ग्रन्थान्विरचयतां मधुसूदननामधेयानां ग्रन्थकर्तॄणां

संख्याऽवरतः पञ्चविंशतिर्दृश्यते। अमीषु पञ्चविंशत्यां मधुसूदनेषु मध्ये कतिपये सरस्वत्युपपदधारिण एकतमस्तीर्थोपपदधारी सर्वे चेतरे निरुपपदा उपलभ्यन्ते। तीर्थसरस्वतीभट्टोपाध्यायगिर्याचार्यादीन्युपपदानि तत्र तत्र दर्शनेषु शास्त्रेषु साहित्यादिविषयेषु च नदीष्णानां पण्डितप्रवराणां बहुमानख्यापनार्थं दत्तान्यासन्। कतिपयेषु च स्थलेषु सरस्वतीसदृशान्युपपदानि न केवलं सरस्वत्यवतारत्वं वाग्विषये किं तु तुरीयतामाश्रमस्य प्रदर्शयामासुरिति प्रतिभाति। मधुसूदननामधारिषु ग्रन्थकर्तृषु मध्ये ठक्कुरोपाह्वा न्यायशास्त्रे वेदान्ते चाधिगतप्रावीण्या वङ्गदेशे गङ्गेशोपाध्यायानां ग्रन्थानां विवरणं चक्रुः। अपरे मधुसूदनाचार्याः कृष्णद्वैपायनपुत्रमात्मानं कथयन्तो वेदाध्येतारो वेदाध्यापकाश्चान्वेदग्रन्थपाठविषये विवरणग्रन्थांश्चारचयन्। पञ्चषा अपरे मधुसूदनाः पूर्वमीमांसाविषये लघून्प्रबन्धान्विरचयामासुः। इतरे सर्वे मधुसूदनाः शतकदर्पणमञ्जरीत्यादिसंज्ञकान्बहुविधेषु विषयेषु टीकाग्रन्थान्विरचयांचक्रिरे। सरस्वत्यन्तनामधारिषु मधुसूदनेषु पञ्चषा ग्रन्थकर्तृत्वेन ख्यातिमुपगता उपलभ्यन्ते। अमीषु पञ्चषेषु मध्ये प्रथमे श्रीधरसरस्वतीशिष्या आनन्दमन्दाकिनीकृष्णकुतूहलादिकाव्यप्रबन्धान्हरिलीलावेदस्तुतिव्याख्याश्च रचयामासुः। द्वितीया वेदान्तशास्त्रे आत्मबोधाद्वैतसिद्धिसिद्धान्तबिन्दुसिद्धान्तलेशादीनां ग्रन्थानामुपरि टीकाग्रन्थानां विरचयितारः सिद्धान्तबिन्दुकर्तृभ्यो भिन्नास्तदपेक्षयाऽर्वाचीनास्तद्ग्रन्थाध्येतार इत्यस्मिन्वस्तुनि न कोपि विवादः। तृतीयाः प्राचीनतमा अद्वैतब्रह्मसिद्धिप्रणेतार इति श्रूयते। चतुर्थाः कुसुमावचयलीलानामधेयं नाटकमन्यांश्च काव्यनाटकप्रबन्धान्प्रणिन्युरिति श्रूयते। पञ्चमाश्च प्रकृतग्रन्थप्रणेतारो न्यायवेदान्तमीमांसादिषु शास्त्रेषु कृतबहुपरिश्रमाः प्रतिभावैभवसंपन्ना अधिगतपरंपरागतवेदान्तगूढार्थरहस्यविदो विश्वेश्वरसरस्वतीशिष्याः पुरुषोत्तमसरस्वतीगुरवः ख्रिस्तीये सप्तदशशतकोत्तरार्धे भरतभूमिं भूषयांचक्रिर इति तूपरि निदर्शितमेव।

४४ अमी विश्वेश्वरसरस्वतीशिष्या मधुसूदनसरस्वत्यो वेदान्तकल्पलतिकां भगवद्गीताव्याख्यां गूढार्थदीपिकां संक्षेपशारीरव्याख्यां सारसंग्रहदीपिकां प्रस्थानभेदेतिख्यातत्रयीसांख्येत्यादिसप्तमश्लोकविवरणघटितां महिम्नस्तोत्रटीकां सिद्धान्तबिन्दुनाम्नीं दशश्लोकीव्याख्यामद्वैतसिद्धिं च प्रणिन्युरित्यत्र वस्तुन्यान्तराणां बाह्यानां च प्रमाणानां सत्त्वान्न संशयलेशस्याप्यवकाशः। ईश्वरस्वरूपनिर्णयभगवद्भक्तिरसायनहरिलीलाव्याख्यासर्वशास्त्रार्थसंग्रहाद्वैतरत्नरक्षणादीन्प्रबन्धानप्येते प्रणि-

न्युरित्यापि लोके प्रवादः प्रचलितो दृश्यते । अमीषु ग्रन्थेषु मध्ये सांप्रतं गूढार्थदीपिका महिम्नस्तोत्रटीका सिद्धान्तबिन्दुरद्वैतसिद्धिर्वेदान्तकल्पलतिका च मुद्रिताः सौलभ्येनोपलभ्यन्ते । ग्रन्थलेखनकौशलार्थप्रागल्भ्यवाग्विदग्धतादिभ्यो गुणेभ्यस्तत्र तत्र स्थलेष्वस्मिन्नुपोद्घाते दर्शितेभ्यो वेदान्तकल्पलतिकामीषां प्रथमो ग्रन्थोऽद्वैतसिद्धिश्च चरम इति प्रतिभाति । अस्मिन्विषये गुरुशिष्यपरंपरयास्माभिरुपलब्धाख्यायिका न सर्वथा प्रमाणत्वेन किं तु विद्वन्मनोरञ्जकत्वेनास्माभिरत्र स्तोकमुपन्यस्यते—अमीषां मधुसूदनसरस्वतीनां शिष्येष्वेकतमो माध्वमतानुसार्यप्रदर्शितमाध्वमतपक्षपातोऽमीभ्योऽधिगतवेदान्तरहस्यो गुरुभिः कृतस्याद्वैतमतनिरूपणस्य खण्डने न्यायशास्त्रगतव्याप्त्यनुमानहेत्वाभासतर्कादियुक्तीः प्रधानत्वेनोपयुज्यैकं खण्डनग्रन्थं लिखितुं प्रवृत्त इति वार्तामीभिरितरशिष्येभ्य उपलब्धा । शिष्यप्रणीतग्रन्थावलोकनमनावश्यकमिति सर्वथानादृत्य खण्डनग्रन्थमहत्त्वं विषयं च मनसालोचितवन्त एते न्यायशास्त्रेप्यधिगतप्रावीण्यास्तत्कालीनैर्नैयायिकैरपि नैयायिकधुरीणत्वेन संमानिता न्यायशास्त्ररीतीरेवानुसृत्य श्रूयमाणस्वसिद्धान्तखण्डनस्य निर्मूलनाय सर्वत्राद्वैतस्य सिद्धिं संपादयन्तीमद्वैतसिद्धिं रचयामासुर्यया स शिष्यग्रन्थस्तेन शिष्येणामृत इव मन्यमानोप्यात्माद्वैतवादिनां द्वैताद्वैतयोरन्यतरत्र क्वाप्यनभिनिविष्टबुद्धीनां च विदुषां मनसि न परां प्रतिष्ठां लेभे ।

अभ्यंकरोपाह्व—महामहोपाध्याय—वासुदेवशास्त्री

## ॥ विषयानुक्रमः ॥

॥ श्री ॥

# ॥ सिद्धान्तबिन्दुः ॥

(सटीकः)

॥ श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ॥

श्रीशंकराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रबन्धम् ॥१॥

इह खलु साक्षात्परंपरया वा सर्वानेव जीवान्समुद्दिधीर्षुर्भगवानाचार्यः

---

ध्यायामि चौपनिषदं परमात्मतत्त्वं
इद्रूपमद्वयममूर्तमचिन्त्यरूपम् ।
यद् दुर्ग्रहं समवबोधयितुं यतन्ते
श्रीव्यासशंकरसुरेश्वरमाधवाद्याः ॥ १ ॥

मायावादमहीरुहः श्रुतिशिरस्याबद्धमूलव्रजः
सूत्रैरङ्कुरितोऽथ भाष्यवचसा लब्धस्वरूपो महान् ।
श्रीमद्वार्तिककारमिश्रमुनिभिर्योऽध्यात्मविद्याचणैः
सर्वज्ञैरभितो निषिक्तसलिलः संजातपुष्पोभवत् ॥ २ ॥

पुष्पाणि प्रतिगृह्य नैकविधतामालोक्य तेभ्यः परं
विद्यारण्यमहामुनिः समचिनोत्सारं तदीयं मधु ।
तच्चैतन्मधुसूदनः कृतिवरः सिद्धान्तबिन्दौ मधु
प्राज्ञानां हितकाम्यया समुचितं नाम्नः समस्रावयत् ॥ ३ ॥

तामेतां मधुधारां जिज्ञासूनां मुखेष्वनायासात् ।
अभ्यंकरोपनामा पातयितुं वासुदेव इह यतते ॥ ४ ॥

श्रीशंकरामलवचोनिचयप्रवाह-
वीचीसमुद्गततुषारविधूतचेताः ।
मायावृतिं दृढतरां परिहर्तुकामो
धाराप्रपातनविधौ कुरुते प्रयत्नम् ॥ ५ ॥

सिद्धान्तबिन्दुरपि सागरवद्गभीरः
पारं दिदृक्षुरपि न प्रभुरेष लोकः ।
आलम्ब्य पातमयमञ्जनमक्तनेत्रः
धारावलोकनकृती भविता सुखेन ॥ ६ ॥

इहेति । मोक्षसाधनीभूताद्वितीयात्मतत्त्वविचार इत्यर्थः । उत्तमाधिका-

---

१ ग च झ–प्रयत्नम्, ङ–प्रबन्धम् ॥१॥ यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥ इह । ग ङ–एवशब्दो नास्ति । ३ ग ङ च छ ज झ–आचार्य इति नास्ति ।

श्रीशंकरोनात्मभ्यो विवेकेनात्मानं नित्यशुद्धबुद्धमुक्तस्वभावं संक्षेपेण बोधयितुं दशश्लोकीं प्रणिनाय । नन्विदंकारास्पदेभ्योनात्मभ्यो विवेकेनाहंकारास्पदमात्मानं सर्वोपि लोकोहमस्मीति प्रत्येति दुःखं चानुभवति । तेन ज्ञातज्ञापकत्वान्निष्प्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चेन्न । चिद्भास्यत्वेन लक्षणेनेदंकारास्प-

रिणां दशश्लोक्युपदेशेन साक्षादेवात्मतत्त्वज्ञानं जायते । अन्येषां तूपदेशानन्तरं श्रवणमननादिसाधनद्वारात्मतत्त्वज्ञानं जायते । शरीरेन्द्रियमनःप्राणादयो ये पदार्था अनित्या अशुद्धा जडाः कर्मवश्याश्च ते नात्मानः । आत्मस्वभावविरुद्धस्वभावत्वात् । आत्मा तु नानित्यो नाशुद्धो न जडो नापि कर्मवश्यः । तथा च शरीरादिभ्यो भेदेनात्मतत्त्वज्ञानं प्राणिनामावश्यकम् । तदर्थं श्रीमच्छंकराचार्यैर्दशश्लोकी विरचितेति । तत्र नित्यत्वं कालकृतेयत्ताराहित्यम् । शुद्धत्वमविद्यामलराहित्यम् । बुद्धत्वं स्वप्रकाशानुभवस्वरूपत्वम् । मुक्तत्वं प्रमातृत्वादिबन्धरहितत्वम् । उक्तमाचार्याशयमजानानः शङ्कते–नन्विति । आत्मभिन्नाः पदार्था घटपटादय इदंकारास्पदीभूताः । इदमित्याकारकप्रतीतिमात्रविषयत्वमिदंकारास्पदत्वम् । यथा घटपटादीनाम् । मात्रपदेन शरीरादिव्युदासः । शरीरादयो ह्यहमित्याकारकप्रतीतावपि विषयीभूता भवन्ति । आत्मा चाहंकारास्पदीभूतः । अहमित्याकारकप्रतीतिविषयत्वमहंकारास्पदत्वम् । यथा जीवः शरीरादयश्च । न चाहमित्याकारकप्रतीतिमात्रविषयत्वमहंकारास्पदत्वम् । तच्च न शरीरादीनाम् । तेषामिदमित्याकारकप्रतीतावपि विषयत्वात् । किं तु जीवस्यैवेति वाच्यम् । अनेन जीवेनात्मना ( छा० ६।३।२ ) इत्यादिश्रुतौ जीवस्येदंत्वेन निर्देशदर्शनादुक्तलक्षणस्यासंभवग्रस्तत्वात् । एतत्प्रतीतिद्वयं च पार्थक्येन प्राणिनामनुभवारूढमस्त्येव । तथा चात्मानात्मविवेकस्य प्राणिभिर्ज्ञातत्वात्तज्ज्ञापनाय दशश्लोकीप्रणयनं व्यर्थम् । किं चोक्तरीत्या ज्ञातेपि आत्मानात्मविवेके प्राणिभिर्दुःखमनुभूयत एव । तथा चात्मानात्मविवेकज्ञानस्य फलमपि न संभवतीति फलाभावादपि तद्व्यर्थमित्याशयः । समाधत्ते–चिद्भास्यत्वेनेति । शरीरादयो यद्यप्यहंकारास्पदत्वेन प्रतिभासन्ते तथापि ते नात्मानः । किंत्विदंकारास्पदीभूतत्वेनानात्मान एव । इदंकारास्पदत्वं च नेदमित्याकारकप्रतीतिमात्रविषयत्वम् । किं तु चिद्भास्यत्वम् । जडत्वमिति यावत् । तथा च यद्यप्यज्ञानिनां क्रियद्भ्योनात्मभ्यो घटादिपदार्थेभ्यः सकाशाद्भेदेनात्मज्ञानं संभवति तथापि न शरीरादिभ्यः सकाशाद्याथातथ्येनेति तदर्थमयमाचार्याणां दशश्लोकीप्रणयनप्रयत्नः । यच्च ज्ञातेप्यहमित्यात्मज्ञाने दुःखानुभवोस्तीति तदपि न । शुद्धे चित्स्वरूप आत्मनि दुःखसंबन्धस्य तिमिरसंबन्धस्येव सूर्येत्यन्तासंभवात् । तथा चात्मनो दुःखभ्रममात्रं न तु वस्तुतो दुःखं तत्र संभवति ।

नन्वेवं बद्धावस्थायामप्यात्मनो वस्तुतो दुःखाभावेन किमर्थं शास्त्र-

१ ङ–श्रीशंकराचार्योनात्म । २ ख ग ङ च ज झ–अपिशब्दो नास्ति ।

दानामपि देहेन्द्रियमनसां प्रतिभासतोऽहंकारास्पदत्वेन तदविवेकात्। तेन च शुद्धेप्यात्मनि दुःखित्वाद्यभिमानात्। शास्त्रीयेण च ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः। तस्मादज्ञातज्ञापकत्वात्सप्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम्। तस्य चात्मतत्त्वस्य तत्त्वमस्यहं ब्रह्मास्मीत्यादिवेदान्तमहावाक्यमेव प्रमापकम्। वाक्यं च पदार्थज्ञानद्वारेणैव बोधकमिति तत्त्वंपदार्थयोः प्रकृतवाक्यार्थानुकूलयोरन्यतोऽसिद्धत्वात्तावपि शास्त्रेणैव प्रमातव्यौ। यूपाहवनीयादिपदार्थवत्। ततश्च यतो वा इमानि भूतानि जायन्ते (तै० ३।१।१) इत्यादिसृष्ट्यादिश्रुतयस्तत्पदवाच्यस्यार्थस्य समर्पिकाः। सत्यं ज्ञानमनन्तं ब्रह्म (तै० २।१।१)

मिति चेन्न। दुःखिना मनसः संबन्धेनात्मनि जायमानस्याहं दुःखीत्यभिमानस्य निवृत्त्यर्थत्वात्। तदाह—तेन चेति। शास्त्रीयेणेति। शास्त्रजन्येनेत्यर्थः। तदेव शास्त्रमाह—तस्य चात्मतत्त्वस्येति। प्रमापकं यथार्थज्ञानजनकम्। पदार्थज्ञानद्वारेणैवेति। वाक्यार्थज्ञानं पदपदार्थज्ञानस्य कारणत्वात्। असिद्धत्वादिति। सिद्धिश्चात्र ज्ञानम्। वाक्यार्थज्ञानं हि नियमेन पदार्थज्ञानमपेक्षते न तु पदार्थास्तित्वमात्ररूपां सिद्धिं नियमेनापेक्षते। अन्यथा भीमो दुर्योधनमाजघानेत्यादिवाक्यार्थानुत्पत्तिप्रसङ्गात्। तथा चासिद्धत्वादित्यस्याज्ञातत्वादित्यर्थः। श्रुतिगतसर्वनाम्ना श्रुतिस्थस्यैव परामर्शात्परामृष्टयोर्ब्रह्मजीवयोः स्वरूपं शास्त्रेणैव ज्ञातव्यमित्यर्थः। यूपाहवनीयेति। यूपे पशुं बध्नातीति श्रुतौ यूपस्य पशुबन्धमाधारत्वेन विनियोगः क्रियते। यूपपदार्थश्च क इत्याकाङ्क्षायां यूपं तक्षति यूपमष्टास्त्रीकरोतीति श्रुत्या तक्षणेनाष्टास्त्रीकृतः खादिरकाष्ठविशेषो यूपपदवाच्य इति निश्चीयते। यूपं तक्षति यूपमष्टास्त्रीकरोतीति श्रुतिवाक्यं यूपस्योत्पादकमत्वमोदनं पचतीतिवत्। यथौदनं पचतीत्यत्र पाकक्रियातः प्रागोदनो न सिद्धः किं तु तयैव पाकक्रियया निष्पाद्यो भवति तथात्र तक्षणेनाष्टास्त्रीकरणेन च यूपो निष्पाद्यो भवति। एवं यूपपदार्थेवगते यूपे पशुं बध्नातीति वाक्यार्थो भवति। एवमेवाहवनीये जुहोतीत्यत्र हवनाधारत्वेनाहवनीयोवगम्यते। आहवनीयपदार्थश्च क इत्याकाङ्क्षायां नक्तं गार्हपत्यमादधाति दिवाहवनीयमिति श्रुत्या दिवाधानसाध्योऽग्निराहवनीयपदवाच्य इति निश्चीयते। तत्पदवाच्यस्यार्थस्येति। स आत्मेति पूर्वप्रकृत आत्मा तच्छब्देन परामृश्यते। आत्मस्वरूपं च कीदृशमिति विचार्यमाणे आत्मब्रह्मशब्दयोरयमात्मा ब्रह्म (बृ० २।५।१९) इति श्रुत्यैकार्थत्वबोधनात् ब्रह्मशब्देन च यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति। तद्ब्रह्म (१।५।१) इति तैत्तिरीयश्रुतौ जगज्जन्मादिकारणस्य निर्देशादात्मनो जगज्जन्मादिकारणत्वं सिद्धमिति तादृशस्यात्मस्वरूपस्यात्र तच्छब्देन परामर्शः। अयमेव तस्य वाच्योर्थः। सत्यं ज्ञानमिति। लक्ष्यं च निर्मलं

१ ज–यप्राणमन। २ क ङ छ–चशब्दो नास्ति। ३ ज–येणैव ब्र.। ४ ङ छ–त्वाच्च ब्रह्मात्मतत्त्व ५ क ख ङ–व्यर्थमिति ६ ङ–वाक्यं प्रमा ७ ग ङ–द्वारेव ज्ञापकमिति; ङ–द्वारेव बोध। ८ क छ–एवशब्दो नास्ति। ९ ङ ज–यन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यादि।

इत्यादयस्तु लक्ष्यार्थस्य। एवं तद्यथा महामत्स्य उभे कुले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ( बृ. ४।३।१८ ) इत्याद्या जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयस्त्वं-

निर्विशेषं ब्रह्म। तदेव सत्यं ज्ञानमिति श्रुत्या प्रतिपाद्यते। कथमेतदवगम्यत इति चेदुच्यते—ब्रह्मविदाप्नोति परमिति ह्यत्रोपक्रमः। यत्र चामुकस्मात्परमित्यवधिर्नोपादीयते तत्रार्थादेव सर्वस्मात्परमित्यर्थो लभ्यते। यस्मादन्यत्परं किंचिदपि नास्ति तादृशं सर्वस्मात्परं च ब्रह्मैव। ब्रह्मविदो ब्रह्मप्राप्तिश्च ग्रामविदो ग्रामस्येव भेदेन भवतीति तु न मन्तव्यम्। ब्रह्मविद्ब्रह्मैव भवतीति श्रुतिविरोधात्। अतस्तदेकवाक्यत्वाय ब्रह्मभवनरूपैव ब्रह्मप्राप्तिरिति वक्तव्यम्। ब्रह्मवित्पदेनोक्तं ब्रह्मवेदनमपि निरुक्तब्रह्मभवनरूपब्रह्मप्राप्त्यनुरोधेन निर्विकल्पकब्रह्मसाक्षात्काररूपं ग्राह्यम्। यत्र न ज्ञातुर्ज्ञातृत्वं भासते नापि ज्ञेयस्य ज्ञेयत्वम्। ब्रह्मविषयकेण परोक्षज्ञानेन सविकल्पकप्रत्यक्षेण वा ब्रह्मभवनं न संभवति।एतादृशं निर्विकल्पकसाक्षात्काररूपं ब्रह्मवेदनमेव सत्यं ज्ञानमनन्तं ब्रह्म यो वेद इत्यनेन प्रतिपादितमिति हृदि निधाय ब्रह्मविदाप्नोति परमित्युत्तरं उक्तार्थकैवेयं ऋक् इत्यर्थकेन तदेषाभ्युक्ता इति वाक्येनावतारणिकां कृत्वा सत्यं ज्ञानमिति ऋग्निर्दिष्टा। तस्यां च यदि सविकल्पकं ब्रह्मज्ञानमुच्येत तद्युपक्रमविरोधः स्पष्ट एव। निर्विकल्पकं ज्ञानं च न सविशेषब्रह्मविषयकं संभवतीत्यतो निर्मलं निर्विशेषं ब्रह्मैव सत्यं ज्ञानमिति श्रुत्या प्रतिपाद्यत इति सिद्धम्। ननु सत्यज्ञानादिपदानां सत्यत्वज्ञानत्वादिधर्मपुरस्कारेण प्रवृत्तत्वात्कथं निर्विशेषब्रह्मबोधकतास्य वाक्यस्येति चेन्मैवम्। सत्यादिपदानामितरव्यावृत्तितात्पर्यकत्वात्। सत्यपदं ह्यसत्याद्व्यावृत्तमित्यर्थकम्। नासत्यमिति यावत्। ज्ञानपदं च जडाद्व्यावृत्तमित्यर्थकम्। न जडमिति यावत्। अनन्तमित्यस्य च न विनाशीत्यर्थः। उपपादितं चैतद्विस्तरेणाद्वैतामोदे ( पृ. ११७ )। न च यथा यतो वेति श्रुतिप्रतिपादितब्रह्मस्वरूपस्य तत्पदवाच्यत्वं तथा सत्यं ज्ञानमिति श्रुतिप्रतिपादितस्य निर्विशेषब्रह्मस्वरूपस्यापि वाच्यार्थत्वमेवास्तु। तथा च लक्षणाश्रयणक्लेशोपि न भवतीति वाच्यम्। निर्विशेषस्य जात्यादिराहित्त्वेन वाच्यत्वासंभवात्। शब्दो हि जातिगुणक्रियासंज्ञान्यतमं धर्मं पुरस्कृत्यैव तद्विशिष्टमर्थं शक्त्या प्रतिपादयति। अत एव चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारवचनं संगच्छते। निर्विशेषब्रह्मणि तु न किंचिदपि शब्दप्रवृत्तिनिमित्तत्वेन जात्याद्यन्यतमं स्वीकर्तुं शक्यते। सविशेषत्वापत्तेः। लक्षणा तु लक्ष्यतावच्छेदकीभूतं धर्मं विनापि भवतीति वक्ष्यते। तद्यथेति। श्वेतकेतुशब्देन निर्दिष्टः संबोध्यो जीवस्त्वंपदेन परामृश्यते। जीवस्वरूपं च तद्यथेति श्रुतौ जाग्रदाद्यवस्थावत्त्वेन निर्दिष्टम्। अवस्थावत एव संबोध्यत्वसंभवात्स एवात्र त्वंशब्दस्य वाच्योर्थः। तद्यथेति श्रुतेरयमर्थः। यथा लोके महा-

१ ङ—स्तु तत्पदलक्ष्यस्य एवं। २ च छ ज झ—लक्ष्यस्य। ३ ङ च छ झ—स्य इत्याद्याः। ४ ग—द्यास्त्वं।

पदवाच्यार्थस्य समर्पिकाः। योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः (बृ० ४।३।७) न दृष्टेर्द्रष्टारं पश्येः (बृ० ३।४।२) इत्यादयस्तु लक्ष्यस्यार्थस्य। तेन प्रथममवान्तरवाक्येभ्योनुभूतयोः शुद्धयोर्जीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्तेर्लक्षणया निर्विकल्पकस्मरणोपपत्तिः।सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवाङ्गीकाराच्चाद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिप-

मत्स्यः महत्त्वाद्यो नदीस्रोतोवशो न भवति प्रत्युतायमेव नदीस्रोतोविष्टम्भकः। स्वच्छन्दचारीति यावत्। नद्याः पूर्वं चापरं चेत्युभे कूले क्रमेण संचरति एवमेवायं पुरुषो जीवात्मा स्वप्नान्तं बुद्धान्तं चेत्युभावन्तौ संचरति। स्वप्नजागृतिरूपेवस्थाद्वये यथेष्टं संचरतीति। योयं विज्ञानमय इति। अत्र जीवस्वरूपं निर्विशेषज्ञानमयं प्रतिपाद्यते। अवान्तरवाक्येभ्य इति। सत्यं ज्ञानं योयं विज्ञानमय इत्यादिभ्य इत्यर्थः। शुद्धयोर्जीवब्रह्मणोरिति। अस्य स्मरणोपपत्तिरित्यत्रान्वयः। स्मरणे हेतुर्लक्षणयेति। लक्षणा च शक्यसंबन्धः। लक्षणायां हेतुर्मुख्यार्थान्वयानुपपत्त्येति। तत्त्वमसीत्यत्र तत्त्वंपदार्थयोरभेदेनान्वयः प्रतीयते। स च तत्त्वंपदवाच्यार्थयोर्न संभवति। अवस्थावतो जीवस्य जगज्जन्मादिकर्तृत्वायोगात्। एवं च शब्दप्रमाणेन पूर्वमनुभूतस्य शुद्धचैतन्यस्यात्र संस्कारद्वारा स्मरणे सति स स्मृतिविषयीभूतोर्थः शक्यसंबन्धत्वाल्लक्षणया गृह्यते इति भावः। ननु तत्त्वमसीत्यत्र निर्विशेषब्रह्मणो लक्षणया बोधोस्तु नाम। किं तु तदर्थं स निर्विशेषब्रह्मरूपोर्थः पूर्वं सत्यं ज्ञानमिति वाक्यादवगत इति यदुच्यते स तत्र शक्त्यावगम्यते लक्षणया वा। नाद्यः। शक्त्यार्थबोधस्य शक्यतावच्छेदकप्रकारकत्वावश्यंभावेन शक्त्या निर्विशेषशुद्धचैतन्यबोधानुपपत्तेः। न द्वितीयः। अन्यत्र गृहीतो ह्यर्थो लाक्षणिकपदे शक्यार्थसंबन्धेनोपस्थितो लक्ष्यो भवति। तथा च यथा सत्यं ज्ञानमिति वाक्याद् गृहीतो निर्विशेषब्रह्मरूपोर्थस्तत्त्वमसीत्यत्र शक्यार्थसंबन्धेनोपस्थितो लक्ष्यस्तथान्यस्मात्कस्मादपि श्रुतिवाक्याद् गृहीतो निर्विशेषब्रह्मरूपोर्थः सत्यं ज्ञानमित्यत्रोपस्थितो लक्ष्यः स्यात्। यस्माच्च वाक्यात्सोर्थो गृहीतः स्यात् तस्मिन्नपि वाक्ये सोर्थः पुनः किं शक्त्या लक्षणया वा गृहीत इति विकल्पेनवस्थैव स्यादित्याह—सुषुप्ताविति। तथा च सुषुप्तावनुभूतो निर्विशेषब्रह्मरूपोर्थो लक्षणया सत्यं ज्ञानमिति वाक्ये उपस्थितो भवति। अथ सत्यं ज्ञानमित्यत्र लक्षणां विना शक्त्यैव निर्विशेषब्रह्मप्रतिपादनं भविष्यतीति पक्षान्तरमाह—अद्वितीयेति। सुषुप्तौ साक्षिचैतन्यमात्रमनुभूयते न तु तद्गत उपाधिभूतो धर्मः कश्चित्। तथा चोपाधिभूतानां धर्माणां व्यभिचारित्वान्मिथ्यात्वेन न तद्विशिष्टं ब्रह्म किं तु चैतन्यमात्रमिति स्थिते मोक्षसाधनीभूतज्ञानविषयब्रह्मस्वरूपप्रतिपादकस्य सत्यादिवाक्यस्य चैतन्यमात्रप्रतिपादन एव तात्पर्यावगमात्तदनुसारेण सत्यादिपदैर्निर्विशेषमेव

१ ङ—स्तु त्वंपदलक्ष्यस्य। तेन। २ च छ ज झ—लक्ष्यस्य.। ३ क ख घ छ ज झ—द्धजी। ४ ग च छ ज—या स्मर।

दानामुपाधिविशिष्टचैतन्यशक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तदंश एव संस्कारोद्बोधा-
च्च । इच्छन्ति ह्याकाशादिपदादपि निर्विकल्पकम् । तात्पर्याधीनत्वाच्छब्दवृत्तेः ।

शक्त्योपस्थाप्यते । ततस्तादृशसंस्काराद्बोधे तन्निर्विशेषमेव तच्छब्देन परामृ-
ष्टस्यात्मनः स्वरूपमिति निर्णयः । तत्त्वमसीत्यत्र तु न शक्त्या निर्विशेषस्योप-
स्थितिः । स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्येवं
जगत्कारणत्वेन पूर्वप्रक्रान्तं सूक्ष्मतरं सविशेषमात्मस्वरूपमणिमेति निर्दि-
श्यैतदात्म्यमिदं सर्वमिति तादृशसूक्ष्मकारणस्वरूपता स्थूलस्याखिलस्य जगतः
प्रतिपादितेति तदेव सविशेषं तच्छब्देन परामृश्यते । अतस्तत्र लक्षणावश्यकी ।
त्वंशब्देनापि संबोध्यः सविशेष एव परामृश्यत इति तत्रापि लक्षणावश्यकी ।
तदंश एवेति । यथा भोजनप्रकरणे सैन्धवमानयेत्युक्ते वक्तृतात्पर्यानुरोधेन
सैन्धवपदाच्छक्त्या लवणस्यैवोपस्थितिर्न तु शक्यस्याप्यश्वस्य तथा
ब्रह्मविदाप्नोति परमिति प्रकरणे सत्यं ज्ञानमनन्तमित्युक्ते श्रुतितात्पर्यानु-
रोधेन सत्यादिपदाच्छक्त्या आश्रयमात्रस्य ब्रह्मण उपस्थितिर्न तु शक्या-
नामप्यारोपितानां सत्यत्वादिधर्माणाम् । ननु यथा गवादिपदानां गोत्वादिजा-
तिविशिष्टव्यक्तौ शक्तिरेकैव न तु जातौ व्यक्तौ च पृथक्शक्तिद्वयं गौरवात् ।
तथा सत्यादिपदानां सत्यत्वादिधर्मविशिष्टे ब्रह्मण्येकैव शक्तिरिति कथं
शक्यैकदेशस्याश्रयमात्रस्योपस्थितिरिति चेन्न । गौरवाद्विशिष्टे न शक्तिः ।
किं तु केवलायां जातौ व्यक्तौ च । शक्तिद्वयकल्पनं च विशिष्टशक्तिमतेऽप्यव-
श्यकम् । भावप्रधाननिर्देशे वाक्यार्थोपपत्तये व्यक्तिप्रकारकजातौ शक्त्यन्तर-
स्यावश्यं कल्पनीयत्वात् । जातौ व्यक्तौ च पृथक्शक्तिद्वयाङ्गीकारे हि विशेष्य-
विशेषणभावस्य कामचारात्क्वचिद्व्यक्तेः प्राधान्यं क्वचिज्जातेरितीष्टं सिध्यति ।
ननु यथा गौः शुक्लश्चलो डित्थ इत्यादौ जात्याद्यन्यतमप्रकारिका शब्दाच्छक्त्या
जायमाना प्रतीतिर्दृश्यते तथा निष्प्रकारिका शक्त्या जायमाना प्रतीतिः क्व
दृश्यत इति चेत्तत्राह—इच्छन्तीति । आकाशशब्दो हि न जात्याद्यन्यतमं
कंचिद्धर्मं पुरस्कृत्य स्वार्थं बोधयति । तथाननुभवात् । नन्वेवं चतुष्टयी
शब्दानां प्रवृत्तिरिति महाभाष्यविरोधः । जात्यादिचतुर्विधशब्दातिरिक्ताना-
माकाशादिशब्दानां संभवादिति चेत्सत्यम् । शब्दो द्विविधः सप्रकारकबोधज-
नको निष्प्रकारकबोधजनकश्च । तत्राद्यस्य चतुष्टय्येव प्रवृत्तिर्नातिरिक्तेति भाष्य-
तात्पर्यं न तु निष्प्रकारकबोधजनकशब्दव्यावृत्ताविति । तात्पर्याधीनत्वादिति ।
वृत्तिर्द्विधा शक्तिर्लक्षणा च । तत्र लक्षणा तात्पर्याधीनेति स्पष्टमेव । तात्पर्यानु-
पपत्तिप्रतिसंधानपूर्वकमेव हि सा गङ्गायां घोष इत्याद्युदाहरणेषु प्रसरति । शक्ति-
स्तु यद्यपि तात्पर्यज्ञानं विनापि लब्धप्रसरा तथापि तस्याः कार्यक्षमत्वं तात्प-
र्याधीनमेव । तदुक्तं भाषापरिच्छेदे—

१ ग छ ज—तन्ये श. २ ग ण—तत्रैव तदं; इ—तत्रैव सं । ३ क छ ज—तत्रैवांशे सं ।
४ इ—कं स्मरणम् । ता । ५ कं ज—ब्दप्रवृ ।

एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधे भानमपास्तम् । असंप्रज्ञातसमाधेः श्रुतिस्मृ-

---

आसत्तिर्योग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते । कारणम् ( भा. प. ८१ ) इति । अत्र ह्यासत्त्यादिवत्तात्पर्यज्ञानस्यापि शाब्दबोधकारणत्वमुक्तम् । यदि तु तात्पर्यज्ञानं न सर्वत्र शाब्दबोधे कारणं किं तु नानार्थशब्दप्रयोगस्थले एवेत्युच्यते तदापि शक्तिर्न क्वापि तात्पर्याविषयीभूतमर्थमुपस्थापयतीति तात्पर्याधीनैव । यथामात्यो राजसंमतिं विना कानिचित्कार्याणि स्वातन्त्र्येणापि करोति तथापि तद्विरुद्धकार्यकरणे न सामर्थ्यं तस्येति स राजाधीन एवोच्यते तद्वत् । एवं च महावाक्यान्निर्विशेषाद्वितीयब्रह्मावबोधः सिध्यति । एतेनेति । तात्पर्यानुरोधेन महावाक्यान्निर्विशेषं ब्रह्मैव केवलं भासत इति स्वीकारेणेत्यर्थः । न च तत्त्वमसीत्यादिमहावाक्याद्ब्रह्मज्ञानं भवति चेद्ब्रह्मणो ज्ञानविषयत्वं स्यात् । किं च यद्यपि गौः संचरतीत्युक्ते प्रमितिप्रमात्रोः शक्त्यानुपस्थितत्वेन न शाब्दबोधे विषयतया भानं तथापि प्रमेयस्य प्रमितिप्रमातृसाकाङ्क्षत्वेन तयोर्भानमवर्जनीयमेवेत्यद्वैतभङ्ग इति वाच्यम् । महावाक्याद्यद्विषयकं ज्ञानं भवति तद्ब्रह्मेति न वयं प्रतिपादयामः । किं तु महावाक्याद्यज्ज्ञानं भवति तज्ज्ञानमेव ब्रह्मेति । तथा च न ब्रह्मणो ज्ञानविषयता । नाप्यद्वैतभङ्गप्रसङ्गः । असंप्रज्ञातसमाधौ त्रिपुट्या अभानवन्महावाक्याज्जायमाने अखण्डार्थबोधे प्रमातुरप्यभानाङ्गीकारात् । तदाह—असंप्रज्ञातसमाधेरिति । समाधिर्द्विविधः—संप्रज्ञातासंप्रज्ञातभेदात् । सम्यग् विविक्ततया प्रज्ञायते ध्येयमस्मिन्स संप्रज्ञातः । तद्भिन्नोऽसंप्रज्ञातः । यत्र ध्येयं भेदेन न भासते । तथा च तत्र त्रिपुट्या अभानमित्यर्थः । तद्बोधिका श्रुतिश्च

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ ( का. २।६।१० )

इति । अत्र हि पञ्चज्ञानेन्द्रियमनोबुद्धीनां व्यापारोपरम उक्तः । त्रिपुटीभाने तु व्यापारोपरमो न संभवति । स्मृतिस्त्वसंप्रज्ञातसमाधिबोधिका—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ( भ० गी० ६।२० )

इति । योगसेवया असंप्रज्ञातसमाधिरूपया चित्तं निरुद्धं निर्वृत्तिकं जातमित्यर्थः । ननु महावाक्यजनिर्विशेषब्रह्मबोधे तत्साधनतया महावाक्यरूपशब्दः प्रतीयते न वा । आद्ये द्वैतापत्तिः । अन्त्ये साधनाभावाद्बोधोऽपि न स्यादिति चेन्न । शाब्दबोधात्पूर्वं शब्दप्रतीतेरङ्गीकारेण न साधनाभावाच्छाब्दबोधाभावः । शाब्दबोधसमकालं तदुत्तरं च शब्दप्रतीतेरनङ्गीकारेण न द्वैतापत्तिरित्यदोषात् । न च महावाक्याज्जायमानं ज्ञानमेव ब्रह्मेत्युक्तम् । तथा सति ज्ञानरूपस्य ब्रह्मण उत्पत्तिः स्वीकार्या स्यादिति वाच्यम् । तज्ज्ञानं नैव जायते । किं तु तदानीं केवलं तदावरकाज्ञाननिरास एव जायते । तन्मूलक एव

तिसिद्धत्वाच्चेति। पारोक्ष्यसद्वितीयत्वाभ्यां च न तत्त्वंपदार्थमात्रानुभवादेव कृत-

तदानीं ज्ञानं जायत इति व्यवहारः। न च वाक्याज्जायमानं यज्ज्ञानं तद्ब्रह्मेत्यङ्गीकारे ब्रह्मणो विषयत्वाभावेपि विषयित्वापत्तिः। शाब्दज्ञानस्य पदार्थसंसर्गविषयकत्वावश्यंभावादिति वाच्यम्। महावाक्यस्याखण्डार्थबोधकत्वाङ्गीकारात्। यद्यपि महावाक्यघटकतदादिशब्दानामखण्डार्थे शक्तिर्नास्ति तथापि तात्पर्यानुरोधाल्लक्षणया तादृशो बोधः। एतदुक्तं भवति-तत्त्वमसीत्यत्र मुमुक्षोः श्वेतकेतोर्निर्विशेषमात्मस्वरूपं बोधनीयत्वेन विवक्षितम्। तत्र तत्सत्यं आत्मेत्यात्मा प्रकृतः। आत्मा च ब्रह्मैव। अयमात्मा ब्रह्मेत्यादिदर्शनात्। ब्रह्म चाद्वितीयं निर्विशेषं निर्गुणमसङ्गं चेति शतशोन्यत्र श्रुत्योद्घोषितम्। तथा चात्मज्ञापने प्रवृत्तस्य महावाक्यस्यापि तादृशात्मस्वरूपबोधन एव तात्पर्यमित्यवगम्यते। तथा च तात्पर्यानुपपत्त्या प्रसरन्त्या लक्षणया निर्विशेषमखण्डमद्वितीयं चिद्रूपं ब्रह्म बोध्यते। ननु लक्ष्यतावच्छेदकपुरस्कारेणैव लक्षणा प्रवर्तते। निर्धर्मके ब्रह्मणि तु कस्यापि धर्मस्य लक्ष्यतावच्छेदकस्यासंभवान्नाखण्डे ब्रह्मणि लक्षणा वक्तुं शक्येति चेन्न। यथाकाशादिपदानां धर्मराहित्ये केवल एवाकाशे शक्तिरुक्ता तथा लक्षणापि केवले स्वीक्रियते। नन्वेवमाकाशादिपदात्केवलाकाशबोधे शक्तिजन्यो बोधः शक्यतावच्छेदकप्रकारक एवेति नियमो भज्येत। इष्टापत्तौ तु गामानयेत्यतो गोपदार्थस्य पशुत्वेनापि बोधापत्तिः। तथा केवले लक्षणास्वीकारे लक्षणाजन्यो बोधो लक्ष्यतावच्छेदकप्रकारक एवेति नियमो भज्येत। इष्टापत्तौ तु गङ्गायां घोष इत्यत्र तीरस्य द्रव्यत्वेनापि बोधापत्तिरिति चेन्न। शक्तिजन्यो बोधः शक्यतानवच्छेदकाप्रकारक एव जायते तथा लक्षणाजन्यो बोधो लक्ष्यतानवच्छेदकाप्रकारक एव जायत इति नियमाङ्गीकारणाददोषात्। नन्वेवं सविशेषस्य जगत्कारणस्य पूर्वं प्रक्रान्तत्वेपि तात्पर्यानुरोधेनाश्रयमात्रस्य तत्पदेन परामर्शः स्यात्। तथा संबोध्यत्वेन जीवस्य सविशेषत्वेपि तात्पर्यानुरोधेन तत्रत्यचेतनमात्रांशस्य त्वंपदेन परामर्शः स्यात्। न हि पूर्वप्रक्रान्तोर्थः पूर्वोक्तसकलांशवैशिष्ट्येनैव परामृश्यत इति नियमोस्ति। तथा च तत्त्वमसीत्यत्र मास्तु लक्षणा। तां विनापि मोक्षसाधनतयेष्टस्य निर्विशेषब्रह्मावबोधस्य सिद्धत्वादिति चेत्तत्राह-पारोक्ष्येति। आश्रयमात्रस्य परामर्शेपि तत्र तत्पदस्वभावसिद्धपरोक्षत्वावबोधोऽवर्जनीय एव। शब्दशक्तिस्वाभाव्यात्। तच्छब्दस्वभाव एवायं यत्परामृष्टार्थः परोक्षत्वेनैवोपस्थापनीय इति। तथा युष्मच्छब्दस्वभावोपीदृश एव यत्संबोध्योर्थोऽस्मदर्थप्रतिद्वन्द्विरूपेणैवोपस्थापनीय इति। अद्वितीयात्मप्रत्यक्षं च मोक्षोपयोगि न तु सद्वितीयत्वेन जायमानं परोक्षं वात्मज्ञानम्। तथा च लक्षणाया अभावे तच्छब्दात्परोक्षत्वेन युष्मच्छब्दाच्च सद्वितीयत्वेनात्म-

१ इ—सद्वय। २ इ—दार्थानु।

कृत्यता ।

वाच्यार्थभेदावभासान्न पौनरुक्त्यम् । लक्ष्यस्य चार्थस्यैकत्वादखण्डार्थता । पदजन्यस्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभवादेवाविरुद्धम् । सविकल्पकवाक्यार्थबोधे च सविकल्पकपदार्थोपस्थितिरङ्गम् । प्रकृते च निर्विकल्पको वाक्यार्थबोधः । तस्यैव प्रमात्वेनाज्ञाननिवृत्तिसामर्थ्यात् ।

तत्त्वं शाब्दमर्यादयावबुध्येत । अतो लक्षणावश्यकीति भावः ।

ननु तत्त्वमसीत्यत्र तत्त्वंपदयोर्द्वयोर्लक्ष्यार्थस्यानेकत्वे अखण्डार्थकत्वं न स्यात् । एकत्वे तु पौनरुक्त्यमित्याशङ्क्य लक्ष्यार्थस्यैकत्वादखण्डार्थकत्वमङ्गीकृत्य पौनरुक्त्यं परिहरति—वाच्यार्थभेदेति । यथा कृशानुः पावक इत्येवं समानार्थकपदद्वयोपादाने पौनरुक्त्यं भवति परं तु यत्र समानार्थकत्वप्रतिपादनायैव तादृशपदद्वयोपादानं यथा कोशे तत्र न पुनरुक्तिः । प्रत्युतावश्यकमेव तादृशानेकपदोपादानम् । तत्तद्भिन्नपदपुरस्कारेणैवैकार्थत्वबोधने तात्पर्यात् । तथात्र लक्ष्यार्थैकत्वप्रतिपादनाय वाच्यार्थद्वयं प्रदर्शनीयमेव । मिथो भिन्नत्वेन प्रतीतं जीवेश्वररूपमर्थद्वयं पुरस्कृत्यैव तन्मूलस्वरूपैक्यबोधने श्रुतितात्पर्यात् । तथा च न पौनरुक्त्यम् । प्रत्युतावश्यक एवार्थद्वयप्रदर्शनाय शब्दभेदः । अत्र च वाच्यार्थभेदोऽवश्यं प्रदर्शनीय इति प्रदर्शितः । पर्यवसानं त्वैक्यप्रतिपादन एव । अत एवावभासपदोक्तिः । क्वचित्तु वाच्यार्थाभेदावभासादिति पाठः । वाच्यार्थयोरभेदज्ञानरूपफलसत्त्वादित्यर्थः । अस्मिन्पाठेवभासशब्दस्वरसाश्चिन्त्यः । किं चात्र पदद्वये लक्ष्यार्थस्यैकत्वेपि तद्बोधस्य निष्प्रकारकत्वेन न पौनरुक्त्यं दोषः । तत्रैव हि स दोषो भवति यत्र पदद्वयादेकस्यार्थस्य समानेन प्रकारेणोपस्थितिः । अत्र तु प्रकार एव नास्ति कुतः समानप्रकारकत्वम् । अखण्डार्थता । संसर्गानवगाहिशुद्धब्रह्ममात्रबोधजनकता ।

नन्वेतादृशोऽत्र लक्षणया जायमानो यो निर्विकल्पकः शाब्दबोधस्तदर्थं ततः पूर्वं जायमानं यच्छक्यसंबन्धेनार्थस्य स्मरणं तदपि निर्विकल्पकमेवेति वक्तव्यम् । इतरथा शाब्दबोधोपि सविकल्पक एव स्यात् । निर्विकल्पकं स्मरणं तु न क्वापि दृष्टचरमित्यत आह—पदजन्येति । अन्यत्रादृष्टचरोप्यर्थः श्रुत्यादिप्रमाणाविरुद्धश्चेत्तदङ्गीकारे बाधकाभाव इत्यर्थः ।

तस्यैवेति । प्रमात्वमबाधितार्थविषयकत्वम् । सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यमात्रानुभवेन जागृतावनुभूयमानानां तद्विशेषाणां व्यभिचारित्वेन मिथ्यात्वात्सप्रकारकबोधस्य न प्रमात्वम् । ननु निष्प्रकारकबोधस्यापि न प्रमात्वम् । तद्वति तत्प्रकारकानुभवो यथार्थः सैव प्रमेत्युच्यत इत्य संभेदेरुक्तत्वादिति चेन्न । तदवृत्त्यप्रकारकस्तदनुभवो यथार्थ इति लक्षण-

१ ग—वाच्यार्थाभे ।; ज—वाच्यार्थस्य भेदा ।; झ—वाच्यार्थस्य च भेदा । २ छ ज झ—लक्ष्यार्थस्य चैक । ३ ख ङ—स्य चैक । ४ ङ—र्थानुभवानुकू । ५ ग ङ ज—भवबदे ।; झ—भवबलादेवा । ६ ग—निवर्तनसा ।

अतो न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिः। प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितेरेव शक्तिलक्षणासाध्यत्वात्।

ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थबोधे च सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानतत्कार्यनिवृत्त्युपपत्तौ किं विचारणेति चेत्सत्यम्। वेदान्ता यद्यपि स्वतःप्रामाण्यान्निर्विकल्पकमात्मसाक्षात्कारं जनयन्ति तथापि तस्य मन्दबुद्धीनां वादिविप्रतिपत्तिजसंशयप्रतिबन्धेनाज्ञाननाशकत्वासामर्थ्यात्। विचारेण तु संशयनिवृत्तौ निरपवादमज्ञाननिवृत्तिरिति संशयबीजभूतवादिविप्रतिपत्तिनिराकरणार्थं विचार आरभ्यते।

स्वीकारात्। अत इति। श्रुतितात्पर्यानुरोधेन निर्विकल्पकस्मरणस्याज्ञाननिवर्तकबोधजनकत्वेन प्रकृतोपयुक्तत्वादित्यर्थः। तथा च लक्ष्यतावच्छेदकधर्मासंभवमूलिका या लक्षणाया अनुपपत्तिः सात्र नास्तीति भावः। प्रकृतेति। शक्तिलक्षणारूपाया द्विविधाया अपि वृत्तेस्तात्पर्याधीनत्वादेतत्सिध्यति।

स्वत एवेति। साक्षिमात्रभास्यत्वादेवेत्यर्थः। किं विचारेणेति। तथा च दशश्लोकीप्रणयनं व्यर्थमित्याशयः। सत्यमिति। महावाक्यं हि पारमार्थिकसत्तानिश्चयरूपमात्मसाक्षात्कारं जनयितुं प्रभवतीति सत्यमेव। किंतु सत्यधिकारिणि। अधिकारी च शुद्धचित्त एव। तथा च तदर्थमियं दशश्लोकी न विरचिता। किं तु यः संशयितचेतास्तदर्थमयं विचारः। तदाह-वेदान्ता इति। संशयप्रतिबन्धेनेति। यथा शङ्खः पाण्डुर इत्युपदिष्टेपि पित्तप्रतिबन्धेन पाण्डुरता न दृश्यते तद्वत्। तथा च तत्र यथा पित्तदूरीकरणायाञ्जनाद्यावश्यकं तथात्र विचार आवश्यकः। विचारेण च संशये नष्टे मतिर्निश्चिता भवति। निश्चितमतेस्त्वञ्जसैव साक्षात्कारः। यथा दिवा शुक्रतारा द्रष्टुं योग्या भवत्येवेत्येकस्य निश्चिता मतिः। द्वितीयस्य संशयिता। तृतीयस्य तु तद्विपरीतयेन दिवा शुक्रतारा नैव द्रष्टुं योग्येति। त्रयोप्येते चक्षुष्मन्तः समानाः। तांश्च यदि कश्चिच्छुक्रतारां प्रदर्शयितुं पश्यतेयं शुक्रतारा पुरतो वृक्षामस्योर्ध्वं दृष्टिर्निधेयेति वदति ततः प्रथमो यावता कालेन शुक्रतारां साक्षात्करोति न तावता द्वितीयः। तदपेक्षयाप्यधिकेन कालेन तृतीयः। नैव वा द्वितीयतृतीयौ साक्षात्कुरुतो यदि संशयो विपरीता मतिश्च न निवर्तेत। अतः संशयनिरासायायमात्मस्वरूपविचारारम्भ आचार्याणामिति।

आत्मस्वरूपप्रतिपादकं च तत्त्वमसि (छा. ६।८।७) इति महावाक्यमिति तद्घटकपदानामर्था निर्धारणीयाः। निर्धारणं च विरुद्धमतप्रदर्शनपूर्वकं क्रियते

१ ख--माण्यत्वात।, ङ--माण्यावधारणात्तेन।; झ--माण्यम् तेना। २ ङ--नानिवृ। ३ झ--तस्येह मन्द। ४ च--वादिप्रतिवादिविप्र। ५ ङ ज--जन्यसंश। ६ च--न्धेन तस्याज्ञान। ७ ङ--न तत्कार्यनाश। ८ क ख ङ च झ--ज्ञानादिति। ९ ग--रासार्थं।

तत्र त्वंपदार्थे वादिविप्रतिपत्तयः प्रथमं प्रदर्श्यन्ते। तत्पदार्थस्य शास्त्रतात्पर्यविषयतयाभ्यर्हितत्वेपि त्वंपदार्थस्य मोक्षफलभागितया ततोप्यभ्यर्हितत्वात्।

तत्र देहाकारेण परिणतानि चत्वारि भूतान्येव त्वंपदार्थ इति चार्वाकाः। चक्षुरादीनि प्रत्येक मित्यपरे। मिलितानीत्यन्ये। मन इत्येके। प्राण इत्यन्ये। क्षणिकविज्ञानमिति सौगताः। शून्यमिति माध्यमिकाः। देहेन्द्रियातिरिक्तो देहपरिमाण

---

चत्ततः श्रोतॄणां सुखप्रतिपत्तिर्विश्वासदार्ढ्यं च भवति। तदाह-तत्रेत्यादिना। ततोप्यभ्यर्हितत्वादिति। मुमुक्षुं जीवमुद्दिश्यैव शास्त्रप्रवृत्तेर्जीवस्य मुख्योद्देश्यत्वेनाभ्यर्हितत्वम्। किं च जीवात्मपरमात्मनोरभेदोऽत्र प्रज्ञापनीयः। स च भेदनिरासे सत्येव सिध्यति। तदर्थं भेदहेतवो निरसनीयाः। भेदहेतवश्च जीवात्मनिष्ठाः परमात्मनिष्ठाश्चेति द्विविधाः परस्परव्यावृत्ता एकैकनिष्ठत्वेन भासमाना धर्माः। तत्र जीवात्मगता जाग्रदाद्यवस्थावत्त्वाज्ञत्वकर्मवश्यत्वादयो जीवस्य प्रत्यक्षाः। परमात्मगता जगत्कारणत्वसर्वज्ञत्वादयः परोक्षाः। तत्र प्रत्यक्षानुभूतत्वेनात्यन्तासंभावितनिरासा जीवधर्मा एव प्रथमं समुच्छेद्याः। तेषां च धर्माणां जीवस्वरूपविचारेण निरासे परोक्षाः परमात्मगता धर्माः सुखेन निरसनीया भविष्यन्तीत्याशयेनाचार्येण भूमिरित्यादिना प्रथमं जीवस्वरूपविचार आरब्ध इति बोध्यम्।

चार्वाका इति। प्रत्यक्षैकप्रमाणवादिनश्चार्वाका आकाशं न मन्यन्ते। तस्याप्रत्यक्षत्वात् पृथिव्यादिभूतचतुष्टयात्मको देह एवात्मेति तेषां मतम्। इन्द्रियाण्यपि न देहातिरिक्तानि। किंतु देहे तत्तद्भागश्चक्षुरादिशब्देन व्यवह्रियते। मनोप्येवम्। हृदयभाग एव मनः। प्राणस्तु शरीरसंचारी वायुः। चार्वाकैकदेशिनां मतान्याह-चक्षुरादीनीति। एतन्मत एकस्मिन्देहेनेक आत्मानः। यद्यपि सर्वेषां सर्वाणीन्द्रियाणि सन्त्येवेति न नियमस्तथापि यस्य प्राणिनो यावन्तीन्द्रियाणि तावन्तस्तत्रात्मान इति बोध्यम्। मिलितानीति। एतद्वादिमतत्रये एकस्मिन्देह एक एवात्मा। सौगताः। सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकभेदेन चतुर्विधेषु बौद्धेष्वाद्यास्त्रयः। देहपरिमाण इति। बाल्याद्यवस्थाभेदेन यथा देहस्य वृद्धिक्षयौ भवतस्तथा तदनुसारेणात्मनोपि वृद्धिक्षयौ भवतः। यद्यप्येवमात्मनो वृद्धिक्षयौ भवतस्तथाप्यात्मनो नानित्यत्वमाशङ्कनीयम्। परिमाणभेदेपि सर्वथा विनाशाभावात्। एतदेव परिणामिनित्यत्वम्। एतद्दिगम्बराणां मतम्। दिगम्बरा जैनाः। एत एवार्हता इत्युच्यन्ते। अर्हन्नाम नित्यसिद्धः पुरुषः।

---

१ ग ङ छ ज -र्थे प्रथमं विप्रतिपत्तयः प्रद०।; झ-र्थे विप्रति०। २ ग झ-स्य शास्त्रफलमोक्षभा०। ज-स्य शास्त्रजन्यमोक्षफलभा०। ३ च छ ज झ-कारपरि०। ४ ङ च छ ज-णिकं विज्ञा०। ५ ग-सुगताः।

इति दिगम्बराः। कर्ता भोक्ता जडो विभुरिति वैशेषिकतार्किकप्राभाकराः। जडो बोधात्मक इति भाट्टाः। भोक्तैव केवलंबोधात्मक इति सांख्याः पातञ्जलाश्च। अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्धर्मकः परमानन्दबोध एवेत्यौपनिषदाः।

एवं सामान्यतोऽहंप्रत्ययसिद्धे चिदात्मनि वादिविप्रतिपत्तिभिः संदिग्धेऽहंप्रत्ययस्यालम्बनविशेषनिर्णयायाह भगवानाचार्यः—

न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः।
अनैकान्तिकत्वात्सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥

अस्यार्थः। अहमहंप्रत्ययावलम्बनम्। एकोऽद्वितीयः। अवशिष्टः सर्वद्वैतबाधेऽप्यबाधितः। शिवः परमानन्दबोधरूपः। तस्यैव मङ्गलरूपत्वात्। केवलो निर्धर्मकः। तेनाद्वितीयः सर्वप्रमाणाबाध्यः परमानन्दबोध एवाहंप्रत्ययालम्बनमित्यौपनिषदत्प्रणीतागमानुसारित्वात्। जडो विभुरिति। आत्मा हि वैशेषिकादिमते न स्वयं स्वेन प्रकाशते। किंतु स्वस्माद्भिन्नेन स्वगुणभूतेन ज्ञानेन। अतस्तस्य स्वप्रकाशत्वाभावाज्जडत्वमेव पाषाणवत्। जडो बोधात्मक इति। अहमस्मीति यदा प्रतीतिर्भवति तदा तादृशप्रतीतिनिरूपितमाश्रयत्वं विषयत्वं चैकस्यैव भासते। किं तु तद्विरुद्धम्। तदुपपत्तये तैरात्मनोंऽशद्वयात्मकत्वमङ्गीकृतम्। बोधांशेनाश्रयत्वं जडांशेन विषयत्वम्। एवमेव मामहं न जानामीत्यत्रैकस्यैव कर्तृत्वं कर्मत्वं चांशभेदेनोपपादनीयम्। भाट्टाश्च वैशेषिकादिवज्ज्ञानमात्मगुणं नेच्छन्ति किं त्वात्मांशमेव। तेन च ज्ञानांशेनात्मनः साक्षित्वं जडांशेन च सुखादिभोक्तृत्वम्। सांख्यादिमते तु केवलज्ञानात्मक एवात्मा न त्वंशेनापि जड इति विशेषः। औपनिषदाः। अद्वैतवेदान्तिनः शंकराचार्याः। ते ह्युपनिषत्प्रमाणेनात्मस्वरूपं निर्धारयन्ति। अनुमानं तु न तत्र स्वातन्त्र्येण प्रमाणभावमर्हति।

एवं जीवस्वरूपविषये देहात्मवादमारभ्य निर्धर्मकात्मवादपर्यन्तं मतानि प्रदर्शितानि। तत्र मतभेदेन जीवात्मस्वरूपं द्विविधमनित्यं नित्यं च। अनित्यमपि द्विविधं सत्यं मिथ्या च। देहात्मवादिप्रभृतीनां क्षणिकविज्ञानवादिपर्यन्तानां मते सत्यमनित्यं च। माध्यमिकमते मिथ्याभूतम्। नित्यमपि द्विविधं परिणामिनित्यं कूटस्थनित्यं च। दिगम्बराणां मते परिणामिनित्यम्। वैशेषिकादीनामौपनिषदपर्यन्तानां मते कूटस्थनित्यमिति।

१ ङ छ ज झ—जडबोधा। २ ख—वलो बो। ङ झ—वलं बोधा ३ ख—निर्धर्मिकः। ४ झ—ध इत्यौ; ङ—धरूप एवं। ५ ङ—वान्श्रीशंकराचार्यः। ६ ङ घ छ ज झ—षुप्तैकासि। ७ ख घ छ झ—बोधः। न। ८ ख—निर्धर्मिकः। ९ ङ—न इत्यौ।

पक्ष एव श्रेयानित्यर्थः। एतदुपपादनायेतरवादिमतानि निराकरिष्यन्प्रथमं देहात्मवादं निराकरोति—न भूमिर्न तोयं न तेजो न वायुर्न खमिति। अत्राहमिति सर्वत्र प्रत्येकं[1] नञा संबध्यते। या भूमिः सोहं[2] न भवामि योहं सा भूमिर्न भवति इति[3] च[4] परस्परतादात्म्याभावो द्रष्टव्यः। यद्यपि वादिना प्रत्येकं भूम्यादेरात्मत्वं[5] नाभ्युपेयते संघातस्यैव तदभ्युपगमात्तथापि तन्मतेवयव्यनङ्गीकारात्प-

प्रथममिति। देहात्मवादस्यातितुच्छत्वादादौ तन्निराकरणम्। ननु यथा शुक्तौ रजतमिति प्रत्येति भ्रान्तस्तथा चार्वाको नात्मनि देह इति प्रत्येति। आत्मनः प्रतीत्यभावप्रसङ्गात्। नापि देहे आत्मेति प्रत्येति। देहस्य प्रतीत्यभावप्रसङ्गात्। किं तु देहात्मनोर्मिथो यो भेदस्तत्राभेद इति प्रत्येति। तथा च यथा रजतभ्रमनिवृत्त्यर्थं नेदं रजतमित्युच्यते तथात्र नानयोरभेद इति वक्तव्यमिति कथमाचार्येण भूमिरित्याद्युच्यतेत आह—या भूमिरिति। अयं भावः। न भूमिरित्येकं वाक्यम्। एवं न तोयमित्यादीन्यपि भिन्नानि वाक्यानि। अहमित्यस्य च सर्वेषु वाक्येषु संबन्धः। या भूमिः स नाहमित्यर्थः। भूमिमुद्दिश्याहमर्थाभेदो निषिध्यते। अस्यैव वाक्यस्यावृत्त्योद्देश्यविधेयभाववैपरीत्येन च योहं सा न भूमिरिति द्वितीयोर्थः। अत्राहमर्थमुद्दिश्य भूम्यभेदो निषिध्यते। तथा च नानयोरभेद इति फलितं भवति। न तोयमित्यादिवाक्येष्वप्येवमेव व्याख्येयम्। संघातस्यैवेति। देहाकारेण परिणतः पृथिव्यादिभूतचतुष्टयसंघात एवात्मेति चार्वाकसिद्धान्तः। अवयव्यनङ्गीकारादिति। पृथिव्यादितत्त्वचतुष्टयसंघातो देहः स एव चात्मेति यच्चार्वाकमतं तत्र स संघातस्तेषां चतुर्णां तत्त्वानां संयुक्तानामसंयुक्तानां वा। आद्येपि यथा तन्तूनविनाश्यैव तेषां संयोगविशेषेण तदतिरिक्तं पटाख्यं द्रव्यमुत्पद्यते तथायं देहोथ वा यथा दुग्धावयवानां संयोगविशेषेण दुग्धस्वरूपं विनाश्य दध्याख्यं द्रव्यमुत्पद्यते तथायं देहः। नाद्यः। प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य मते तदसंभवात्। न हि तन्मते तन्त्वतिरिक्तं पटाख्यं द्रव्यं स्वीकर्तुं शक्यते। तन्तुपटरूपस्य पृथक्द्रव्यद्वयस्याप्रत्यक्षत्वात्। द्विगुणपरिमाणस्यानुपलम्भाच्च। न द्वितीयः। पृथिव्यादीनां चतुर्णां संयोगेन जायमानो देहो न पृथिवीत्युच्येत। पृथिवीत्वस्याव्याप्यवृत्तित्वाभावात्। दुग्धावयवानामिव पृथिव्यवयवानां स्वरूपेण विनाशाच्च। एवं न जलं न तेजो नापि वायुरित्यतस्तच्चतुष्टयातिरिक्तं देहाख्यं किमपि पञ्चमं तत्त्वमभ्युपगन्तव्यं स्यात्। तच्च तत्त्वचतुष्टयवादिनश्चार्वाकस्य मते नेष्यते। अथासंयुक्तानां पृथिव्यादीनां चतुर्णां तत्त्वानां संघातो देहश्चेत्स धान्यराशौ धान्यकणानां मिथः संयु-

१ ग–प्रत्येकं इति नास्ति। २ च ज झ–मिः साहं। ३ झ–ति पर। ४ ख च छ ज झ–वा। ५ ग–म्यादिरात्मत्वेन ना।

श्रमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसंबन्धानभ्युपगमात्संहन्तुरभावाच्च संघातो नोपपद्यत इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृतः ।

यद्यपि भूतचतुष्टयतत्त्ववादिनो मत आवरणाभावत्वेनाभिमतस्यास्थिरस्यासत आकाशस्य देहानुपादानत्वं तथापि सिद्धान्ते तस्य भावत्वदेहोपादानत्वाद्यङ्गीकारात्तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम् । अथवा न वायुरित्यन्तमेव देहात्मवादस्य निराकरणम् । न खमिति शून्यवादस्य । खशब्दस्य शून्यवाचकत्वात् ।

नेन्द्रियमिति प्रत्येकमिन्द्रियाणामात्मत्वनिरासः । न तेषां समूह इति मिलितानां भूतानां देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलितानां निरासः । पूर्वं संघातमनभ्युपगम्य प्रत्येकं भूतानि निराकृतानि । अधुना

---

क्तानामपि तत्संयोगस्य किंचित्कार्यकारित्वाभावेनाकिंचित्करत्वादसंयुक्तानामिवास्तु किंवा पृथिव्यादीनामसंयुक्तानाप्यमन्तरालस्य सूक्ष्मत्वेनादृश्यत्वात्संयुक्तानामिव वास्तु देहरूपेण संघातसिध्यत्तरं तत्र चैतन्यं न तु ततः प्रागिति संघातकर्तुश्चेतनस्य कस्यचिदभावात्संघातोपपत्तिर्न भवति । अथ संघातसिद्ध्यर्थं ततः प्राक्पृथिव्यादीनां प्रत्येकमात्मत्वं वक्तव्यम् । ते च चत्वार आत्मानः स्वयं देहरूपेण संघीभवयुरित्यवशिष्यते । किं तु तदपि वक्तुं न शक्यते । प्रत्येकं पृथिव्यादीनामात्मत्वाभावात् । एतदेवाचार्येण भूमिरित्यादिना प्रतिपाद्यते ।

यद्यपीति । चार्वाकमते ह्याकाशं नाम न भावरूपः कश्चन पदार्थः । किं त्वावरकानां चतुर्विधानां भौतिकानां पदार्थानां योऽभावः स एवाकाशपदेनोच्यते । तथा च भूतचतुष्टयस्य यत्र स्थितिस्तत्र तद्भावस्यावस्थातुमशक्यत्वेन न देहोपादानत्वमाकाशस्य । किं च भावरूपेण देहः प्रतीयते । अतस्तस्य भावरूपेण प्रतीयमानमेवोपादानकारणं भवितुमर्हति । न त्वभावरूपम् । तथा च देहानुपादानस्याकाशस्यात्मत्वं चार्वाकैर्नैवाभ्युपगम्यत इत्याचार्येण खमित्येवमाकाशस्यानात्मत्वं किमर्थं प्रतिज्ञातमित्याशयः । तथापीति । अद्वैतवादिनां मते भूतचतुष्टयस्येवाकाशस्यापि स्थिरत्वात्सद्रूपेण प्रतीयमानत्वाच्च देहोपादानत्वमस्त्येव । तथा च न भूमिर्न तोयं न तेजो न वायुरित्येतावतैव चार्वाकमते खण्डितेऽपि न खमित्यनुक्तावाचार्याणां स्वमतसिद्धस्याकाशस्यात्मत्वं संमतं स्यात्किमिति संभावना जायेत तन्निरासार्थं न खमित्युक्तमिति भावः ।

मिलितानामिति । तेषामिति तच्छब्देन भूम्यादीनामिन्द्रियाणां च परामर्शः । पौनरुक्त्यं परिहरति–पूर्वमिति । न खमित्यनेन भागेनेत्यर्थः । अधुनेति ।

१ ङ–त्वानभ्युप । २ ङ ङ–न संयो । ३ ङ–न्धानुपग । ४ ङ–इति प्रत्येक । ५ ग ङ च छ झ–तस्य स्थि । ६ ङ–हाद्यनुपा । ७ छ ज झ–भावत्वेन देहोपादानत्वाङ्गीका । ८ झ–निरसनम् । तेषां । ९ झ–च निरासः । १० झ–कृत्याधुना । ११ ग–ना सं ।

तु संघातमप्युपगम्यापि[1] निराकृतानीति भेदः । भूतनिराकरणेन भौतिकयोः प्राणमनसोर्निरासः। मनोनिराकरणेन[2] च मनोवृत्तेः क्षणिकविज्ञानस्य देहातिरिक्तस्य[3] कर्तृत्वभोक्तृत्वादिविशिष्टस्य[4] च निरासः । सिद्धान्ते ज्ञानेच्छासुखादीनाम[5]न्तःकरणाश्रयत्वाभ्युपगमात् । कामसंकल्पादीन्प्रकृत्यैतत्सर्वं मन एव (बृ.१।५।३)

नापि तेषां समूह इत्यनेनेत्यर्थः । मनोनिराकरणेनेति । ननु क्षणिकविज्ञानस्यात्मत्वं सुगताभिमतं निराकृतम् । भौतिकस्य मनस आत्मत्वाभावेन तद्वृत्तिरूपस्य लौकिकविज्ञानस्यात्मत्वाभावात् । परंतु वैशेषिकाभिमतं देहमनोव्यतिरिक्तस्यात्मत्वं मनस आत्मत्वनिराकरणेन कथं निराकृतं भवतीति चेत्-उच्यते । वैशेषिकैर्यद्यपि देहातिरिक्तो मनोतिरिक्तश्चात्मा स्वीकृतस्तथापि तस्य कर्तृत्वं भोक्तृत्वं च स्वीकृतम् । तत्तु सिद्धान्ते मनस एवेति मनस आत्मत्वनिराकरणेन कर्तृत्वादिविशिष्टस्यात्मत्वं निराकृतं भवति । एतावता वैशेषिकाभिमतमात्मस्वरूपं निराकृतं भवतीत्याशयः । ननु मनसः कर्तृत्वे भोक्तृत्वे च किं प्रमाणम् । प्रत्युताहं करोमीत्यादिप्रतीत्यनुरोधेनाहमर्थस्यात्मन एव कर्तृत्वादिकं स्वीकार्यं भवतीति चेन्न । उक्तप्रतीतेरेव तत्र प्रमाणत्वात् । यत उक्तप्रतीत्याहमर्थस्य कर्तृत्वं सिध्यति न त्वात्मनः । अहमर्थस्तु नात्मा । किंतु मनोविशेष एव । नन्वेवं सत्यहं जानाम्यहमिच्छाम्यहं सुखीत्येवमहमर्थे प्रतीयमानमपि ज्ञानेच्छासुखादिकं मनस एव स्यान्नात्मन इति चेत् इष्टापत्तिः । तदाह-सिद्धान्त इति । अस्मिन्नर्थे श्रुत्यनुग्रहं दर्शयति-कामसंकल्पादीनिति । काम इच्छा । अत्र श्रुतिरिच्छादीनां मनोधर्मत्वं प्रतिपादयति । अहमिच्छामीत्यादिप्रतीतिश्चाहमर्थधर्मत्वं तेषां साधयति । यदि चाहमर्थो मनोव्यतिरिक्तश्चेच्छ्रुतिप्रतीत्योर्विरोधः स्यात् । अतस्तदेकवाक्यतायै मन एवाहमर्थ इत्यङ्गीकर्तव्यं भवति । ननु नाहमर्थो मनः । किंतु मनोव्यतिरिक्त आत्मैवाहमर्थः । तस्यैव च कामादयो धर्मा न तु मनसः । एतत्सर्वं मन एवेति श्रुतेस्तु न विरोधः । मनःशब्दस्य लक्षणया मनोमूलकमित्यर्थपरत्वादिति चेन्न । लक्षणायां मानाभावात् । न विधौ परः शब्दार्थ इति न्यायविरोधाच्च । न च कामादीनां मनोधर्मत्वाङ्गीकारेपि मनःशब्दस्य लक्षणया मनोनिष्ठमित्यर्थ इति लक्षणायास्तुल्ययोगक्षेमत्वैवेति वाच्यम् । धर्मधर्मिणोस्तादात्म्येन नीलं वस्त्रमितिवल्लक्षणां विनैव निर्वाहात् । तथा च नाहमर्थ आत्मा किंतु मन एवेति सिद्धम् । भागवते चात्माहमर्थयोर्भेदं स्वीकृत्य हर्षादीनामहंकारधर्मत्वं प्रतिपाद्यात्मधर्मत्वं निषिद्धम्-

१ ङ-तमुपसंगम्या । २ ग झ-न मनो । ३ झ-क्तभोक्तृ । ४ ङ च-स्य निरा । ५ ख छ ज झ-सुखदुःखादी ।

इति श्रुतेः। एतेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्तद्वाद्यभ्युपगतानामनात्मत्वं प्रतिज्ञातं भवति। तत्र हेतुमाह—अनैकान्तिकत्वादिति। व्यभिचारित्वाद्विनाशित्वादिति यावत्।

आत्मनो देशकालापरिच्छिन्नत्वात्तत्परिच्छिन्नानां घटादिवदनात्मत्वात्तद्ध्वंसप्रागभावयोश्च ग्रहीतुमशक्यत्वादनात्मनां जडत्वात्स्वभिन्नस्य चात्म-

---

हर्षशोकभयक्रोधलोभमोहस्पृहादयः।
अहंकारस्य चैवैते जन्म मृत्युश्च नात्मनः॥ (भाग) इति।
कर्तृत्वस्य चात्मधर्मत्वं ब्रह्मपुराणे निषिद्धम्—
कुर्वन्त्यचेतनाः कर्म देहेन्द्रियगणाः सदा।
चेतनस्तदधिष्ठाता शान्तात्मा न करोत्यसौ॥ (ब्र. पु. ?) इति।

एतेनेति। भाट्टाः सांख्याः पातञ्जलाश्चात्मनो भोक्तृत्वं मन्यन्ते। भोक्तृत्वं च सुखदुःखादिमत्त्वम्। तच्चोक्तन्यायेन मनस एव नात्मनः। तथा च भोक्तुर्मनस आत्मत्वनिराकरणेनैव भाट्टाद्यभिमतमात्मस्वरूपं निराकृतं भवति। एवं दिगम्बराभिमतमात्मस्वरूपं वृद्धिक्षयशालि। वृद्धिक्षयौ तु वस्तुतो देहस्यैव नात्मनः। तथाच वृद्धिक्षयवतो देहस्यात्मत्वनिराकरणेनैव दिगम्बराभिमतमात्मस्वरूपं निराकृतं भवतीति भावः।

आत्मन इति। देशाद्यपरिच्छिन्नो ह्यात्मा। ये चात्मत्वेन परेषामभिमता देहेन्द्रियादयस्ते विनाशित्वात्कालपरिच्छिन्ना एवेति न तेषामात्मत्वम्। घटादिवत्। तथा च प्रयोगः—देहादयो नात्मानः परिच्छिन्नत्वाद्घटादिवदिति। ननु देहाद्यतिरिक्तः सिद्धान्त्यभिमत आत्मा न देशादिपरिच्छिन्न इति कथं निर्णय इति चेन्न। आत्मनश्चतुर्विधाभावानुपपत्तेः। कालतः परिच्छिन्नस्यैव हि वस्तुनः प्रागभावः प्रध्वंसश्च संभवति। देशतः परिच्छिन्नस्यैवात्यन्ताभावः संभवति। भूतले घटो नास्तीतिवत्। वस्तुतः परिच्छिन्नस्यैवान्यत्र भेदः संभवति। भेदश्चान्योन्याभावः। सिद्धान्त्यभिमतस्यात्मनस्तु न कोऽप्यभावः संभवति। तस्य सद्रूपेण सर्वदा सर्वत्र स्फुरणात्। तथा च त्रिविधपरिच्छेदराहित्यमात्मनः सिध्यति। तदेवोपपादयन्नादावात्मनि प्रागभावप्रध्वंसाभावयोरनुपपत्तिं प्रदर्शयति—ध्वंसप्रागभावयोश्चेति। मानाधीना मेयसिद्धिरिति न्यायेन ध्वंसप्रागभावग्राहकप्रमाणसत्त्वे तयोः सिद्धिः स्यात्। तत्त्वत्र न संभवति। प्रमाणं हि ज्ञातरि ज्ञानं जनयति। स च ज्ञातात्र किमनात्मोतात्मा। तत्र नाद्य इत्याह—अनात्मनामिति। जडे ज्ञातृत्वस्य क्वाप्यसंभवाददर्शनाच्च। न द्वितीय इत्याह—स्वभिन्नस्य चेति। आत्मप्रागभावध्वंसयोर्ग्रहीतात्मैव चेत्स्वयमेव स्वाभावग्राहक इति पर्यवसितं भवति। यः स्वो न भवति स आत्मापि न

१ ज—कालाद्यपरि। २ च—त्वात्तत्प। ३ ग—त्वाद्ध्वंस।

त्वाभावादात्मन एकत्वेपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदाभ्युपगमाद्व्यवस्थोपपत्तेः स्वेनैव स्वाभावग्रहणे विरोधाद् ग्राह्यकाले ग्राहकासत्त्वाद् ग्राहकसत्त्वे ग्राह्याभावात् कृतहान्यकृताभ्यागमप्रसङ्गाच्च न तस्य ध्वंसप्रागभावौ।

सद्रूपस्यात्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसंभवः। द्वैतस्य मिथ्यात्वेनाधिष्ठानतादात्म्यापन्नतयैवं शुक्तिरजतादिवदध्यस्तत्वेन तस्याधिष्ठानभूतसत्तादात्म्यापन्नतयैव सिद्धत्वात्तादात्म्याभावानुपपत्तिः। तेनात्मा नाभावप्रतियोगी। अभा-

भवत्येव। स्वः ग्रहीतात्मा। तद्भिन्नो यः स नैवात्मा भवितुमर्हति। आत्मन एकत्वात्। आत्मभेदाङ्गीकारस्य गौरवपराहतत्वात्। नन्वात्मन एकत्वे सुखदुःखादिव्यवस्था कथं संगच्छत इति चेत्तत्राह—आत्मन एकत्वेपीति। नन्वस्त्वेक एवात्मा। स च स्वयमेव स्वस्य प्रागभावं प्रध्वंसं च ग्रहीष्यतीत्यत आह—स्वेनैवेति। विरोधमुपपादयति—ग्राह्यकाल इति। स्वप्रागभावकाले स्वप्रध्वंसकाले च स्वयं ग्रहीतैव नास्ति। स्वास्तित्वकाले ग्राह्यभूतः स्वप्रागभावः स्वप्रध्वंसश्च नास्तीत्यर्थः। एवं ग्रहीतुरसंभवाद्ग्रहीतृसापेक्षस्य प्रमाणस्यासंचारादात्मप्रागभावप्रध्वंसयोरसिद्धिमुपपाद्य कारणान्तरेणापि तयोरसिद्धिं साधयति—कृतहानीति। आत्मनः प्रध्वंसाङ्गीकारे हि तेन कृतं कर्म यदनुपभुक्तफलमवशिष्टं तस्य फलोपभोगं विनैवात्मविनाशकाले हानिः स्वीकार्या स्यात्। तथात्मनः प्रागभावाङ्गीकारे आत्मोत्पत्त्यनन्तरं सद्यो जायमानस्य सुखदुःखोपभोगस्याभ्यागमः कारणं विनैव स्वीकर्तव्यः स्यात्। न चैतदिष्यते। भोगं विना कर्मक्षयस्य तथा कारणं विनाकस्मिककार्योत्पत्तेश्च केनाप्यनङ्गीकारात्।

एवमात्मप्रागभावप्रध्वंसयोरसंभवमुपपाद्याधुना तदत्यन्ताभावस्यासंभवमुपपादयति—सद्रूपस्येति। सन्मात्ररूप एव ह्यात्मेति श्रुत्युद्घोषः। सद्रूपस्य च घटोस्ति पटोस्तीत्येवं सर्वत्रानुगमो दृश्यते। तथाच सद्रूपस्यात्मनो न क्वाप्यत्यन्ताभावसंभवः। अथात्मनोन्योन्याभावस्यासंभवं साधयति—द्वैतस्येति। अन्योन्याभावो भेदः। यथा पटे नायं घट इत्येवं घटभेदोनुभूयते तथा कस्मिंश्चिद्वस्तुनि नायमात्मेत्येवमात्मभेदो वक्तव्यः। स च न संभवति। अनात्मनां मिथ्याभूतानां सर्वेषां वस्तूनामात्मन्यध्यारोपितत्वेन तेषामधिष्ठानभूतात्मतादात्म्येनैव सिद्धत्वेन तत्रात्मभेदस्य वक्तुमशक्यत्वात्। यथा शुक्तौ तत्तादात्म्येन प्रतीयमाने रजते नेयं शुक्तिरिति निषेधो वस्तुतो नावकाशं लभते तद्वत्। तेनात्मेति। उक्तरीत्यात्मनश्चतुर्विधस्याप्यभावस्यासंभवेनात्मनो नाभा-

१ छ ज—णादीनां। २ ख—हणविरो। ३ ख ड—काभावाद्ग्राह। ४ ख च ज—त्वेन तत्तादा।, ख—त्वेन शुक्तिरजतादिवदध्यस्तस्याधिष्ठानानुस्यूतसत्तादात्म्यापन्नतयैव सिद्धस्य तादात्म्याभावानु।, ड—त्वेन सत्तादा, छ—त्वेन सत्तादात्म्य। ५ ज—व सिद्धत्वाच्छुक्ति। ६ च छ—त्वेन तादात्म्याभावा।, ज—त्वेन तत्तादात्म्याभावा। ७ ड—त्वात्सत्तादा।

वप्रतियोगिनश्च देहेन्द्रियादयः। तेनामी नात्मानः। किंतु स्वप्रकाशबोधरूप आत्म-न्यद्वैतेप्यनिर्वचनीयानाद्यविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम्।

वप्रतियोगित्वमित्यर्थः। तेनामी इति। अभावप्रतियोगित्वेनेत्यर्थः। वादिभि-रात्मत्वेनाभ्युपगतानां देहादीनां त्वभावः संभवति। अतस्तेषां नात्मत्वमित्यभि-प्रायः। तत्र देहस्योत्पत्तेः पूर्वं प्रागभावः। देहस्य विनाशे प्रध्वंसाभावः। तथा देहस्य विभुत्वाभावाद्यत्र देहो नास्ति तत्र तस्यात्यन्ताभावः। घटपटादीनां देहभि-न्नानां वस्तूनां सत्यत्वात्तत्र देहभेदश्चेति चतुर्विधोप्यभावो देहस्योपलभ्यते। आत्मनस्तूक्तरीत्या चतुर्विधेष्वभावेष्वेकोपि न संभवति। तथा च यस्यैकोप्य-भावः संभवेत्स नैवात्मा भवेत्किमुत चतुर्विधाभावप्रतियोगिभूतो देह आत्मा भवेत्। एवमेवेन्द्रियमनःप्राणक्षणिकविज्ञानानां चतुर्विधाभावोपलम्भान्नात्मत्वम्। यस्य चात्मनः केनाप्यभावेन प्रतियोगितयापि संबन्धो न भवति तस्याभावतादात्म्यं सुतरां नैवेति शून्यात्मवादिनो मतनिरासः। जैनानां मीमांसकानां च नये यद्यप्यात्मस्वरूपं नित्यमिति तस्योत्पत्तिविनाशाभावान्न प्रागभावः प्रध्वंसश्च संभवति तथाप्यात्मस्वरूपस्य तन्मते विभुत्वाभावादात्मनोत्यन्ताभावः संभव-त्येव। तथा तन्मते द्वैतसत्त्वादात्मेतरवस्तुष्वात्मभेदोपि संभवति। वैशेषिकाणां सांख्यानां पातञ्जलानां च नय आत्मनो नित्यत्वान्न प्रागभावप्रध्वंसौ। विभु-त्वाच्च नात्यन्ताभावः। तथापि द्वैतसत्त्वादचेतनेषु पृथिव्यादिषु सत्येषु वस्तुष्वा-त्मभेदः संभवत्येव। यद्यपि देहादीनामनात्मत्वं मिथ्यात्वेनापि सिध्यति तथाप्या-चार्यैः स हेतुरत्र न निर्दिष्टः। वादिभिस्तेषां मिथ्यात्वस्यानभ्युपगमात्। ननु यदि देहादयो नात्मानस्तर्हि कुत आत्मत्वेन प्रतिभासन्ते तत्राह—किं तु स्वप्रकाशेति। शुक्तौ रजतमिवाविद्ययात्मन्यारोपिता इत्यर्थः। ननु शुक्ताविदमंशेन प्रकाशितायां शुक्त्यंशेन चाप्रकाशितायां सत्यामेव तत्र रजतादे-रारोपो दृश्यते न तु शुक्त्यंशेन प्रकाशितायाम्। यथा स्पष्टालोकमध्यग-तायां संनिहितायां च शुक्तौ। नापीदमंशेनाप्यप्रकाशितायाम्। यथा गाढान्धकारे। परप्रकाशस्य शुक्त्यादेर्जडस्य वस्तुनः प्रकाशकदीपादिसं-निधानतारतम्यादिवशादंशेन प्रकाशोंशेनाप्रकाशश्चोपपद्यते। आत्मा तु बोध-रूपत्वात्स्वप्रकाशस्त्वयाभ्युपगतो निरंशश्च। तथा च स सदा सर्वथा प्रकाशत एवेत्यप्रकाशितांशाभावेन तत्र न देहाद्यारोपः संभवति। किं च शुक्तेः सका-शाद् द्वितीयस्य रजतस्यान्यत्र सत्त्वेन तस्यारोपो भवति न त्वसतो वन्ध्यापुत्रस्य कूर्मक्षीरस्य वान्यत्रारोपः। त्वन्मते तु देहादीनां क्वाप्यन्यत्र सत्त्वेनाप्रतीयमाना-नां कथमारोप इति चेन्न। स्वप्रकाशोप्यात्मा वस्तुतोनावृतोपि तच्छक्तिभूतया-नाद्यविद्ययावृतस्वरूप इवाविद्योपहतजीवदृष्ट्यांशेन प्रकाशते। निरंशे स्वप्रका-शेप्यात्मनीयमनाद्यविद्या स्वोपहितजीवदृष्ट्यांशभेदं परिकल्प्यांशेनात्मस्वरूप-माच्छादयितुं प्रभवति। तथा भ्रम आरोपितस्य वस्तुनोन्यत्र सत्यत्वस्य नावश्यम-

१ ग—तेन नेमी। २ ग—रूपाख्य आ। ३ छ—बोधाख्य आत्म। ४ ङ—प्यनाद्यनिर्वचनी-याविद्या।

ननु बोधरूप आत्मेति तवाभ्युपगमात्सुषुप्ते च बोधाभावाद्गाढं मूढोऽहमासं न किंचिदवेदिषमिति सुप्तोत्थितस्य परामर्शात्कथमव्यभिचारिता तस्येत्याशङ्क्याह—सुषुप्त्येकसिद्ध इति। अयमर्थः। आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः। अन्यथा मूढोहमासमिति परामर्शानुपपत्तेः। मातृमानमितिमेयानां व्यभिचारित्वेपि तद्भावाभावसाक्षिणः कालत्रयेप्यव्यभिचारात्।

ननु प्रमाश्रयः प्रमाता स एव कर्ता भोक्ता प्रदीपवत्स्वपरसाधारणसर्वभासक-

---

पेक्षा। यदि सत्यं सर्पं कदाप्यपश्यंश्चित्रस्थमेव केवलं सर्पं दृष्ट्वेदृशः सर्प इति स्वान्ते कश्चिद्भावयति तस्यापि रज्ज्वां सर्पारोपः सति निमित्ते संभवत्येव। तथा चारोपे संस्कारः कारणं न तु वस्तुसत्यत्वम्। संस्कारश्च मिथ्याभूतादपि भवत्येव।

ननु बोधरूप इति। सुषुप्त्यवस्थास्थमूढत्वस्य मूढोहमासमित्येवं जागृतावनुसंधानात्सुषुप्तौ मूढत्वं सिध्यति। मूढत्वं च बोधाभावः। बोधाभावे च बोधरूप आत्मापि तदानीं नास्त्येव। तथा च सिद्धान्त्यभिमतस्य बोधरूपस्यात्मनोपि व्यभिचारित्वमित्याशयः। सुषुप्तिसाक्षित्वादिति। सुषुप्त्यवस्थायां विद्यमानं मूढत्वमनुभूतं न वा। नानुभूतं चेत्तस्यानुसंधानं जागृतौ न स्यात्। अनुभवाभावेन संस्काराभावात्। अनुभूतं चेद्येनानुभूतं स एव सुषुप्तिसाक्षिभूतो बोधरूप आत्मेति न तत्र तस्य व्यभिचार इति भावः। मातृमानेति। शरीरं व्याप्य स्थितमन्तःकरणं घटादिज्ञानकाले गवाक्षोद्घाटनेन दीपप्रकाशवत्स्वाश्रयं शरीरमजहदेव दिदृक्षु भूत्वा चक्षुरादिद्वारा बहिर्निर्गत्य सूक्ष्मतन्तुवद्विषयप्रदेशपर्यन्तं गत्वा विषयं व्याप्य तदाकारेण परिणमते। तत्र शरीरास्थितोन्तःकरणभागः कर्तेत्युच्यते। तदुपहितं चैतन्यं प्रमातृचैतन्यम्। सूक्ष्मतन्तुवन्मध्यस्थितो योन्तःकरणभागस्तदुपहितं चैतन्यं प्रमाणचैतन्यम्। विषयाकारसदृशाकारेण परिणतो विषयप्रदेशावस्थितो योन्तःकरणभागस्तदुपहितं चैतन्यं प्रमितिचैतन्यम्। घटादिविषयोपहितं चैतन्यं प्रमेयचैतन्यम्। एतच्चाग्रे मूल एव स्पष्टम्। एते च तत्तदुपहितचैतन्यभूताः प्रमात्रादयो व्यभिचारिणः। उपाधिसंनिधाने भावात्तदभावे चाभावात्। तत्साक्षिभूतमनुपहितं चैतन्यं तु सदा सद्रूपेणाव्यभिचार्येवेति भावः।

अथेदानीं यथा प्रमेयस्य भावाभावौ तदन्यः साक्षात्करोति तथा प्रमातुरपि भावाभावौ तदन्यः साक्षात्करोतीत्युक्तम्। तदसहमानो वैशेषिकमतानुसारी शङ्कते—नन्विति। अयं हि शङ्कस्याशयः। प्रमा यथार्थज्ञानम्। स चात्मनो गुणः। तदाश्रयः केवल आत्मैव कर्ता भोक्ता च। न त्वन्तःकरणोपहितः। अन्तःकरणं तु ज्ञाने कर्तृत्वे भोक्तृत्वे चात्मनः

---

१ ङ छ ज झ-षुप्तौ च। २ ङ च छ ज झ-षुप्तैक ३ ङ-येपि व्य। ४ च छ ज झ-व च कर्ता। ५ स ङ छ ज-रणः स।

श्चेति ने[1] घटादिवत्साक्षिसापेक्ष इति चेन्न[2]। विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेर्दृश्यस्य द्रष्टृत्वा[3]भावात्प्रमातुश्च परिणामित्वेन दृश्यत्वात्। एकस्य कूटस्थस्यैव[4] सर्वसाक्षित्वात्[5]।

नन्वेकः कूटस्थो निर्धर्मकः साक्षी नाद्रियते। अप्रामाणिकत्वादिति चेन्न। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ( श्वे. ६।१४,

---

केवलं साहायकमाचरति। न तु तस्य ज्ञातृकर्तृभोक्तृस्वरूप प्रवेशः। तथा च यथा प्रदीपः स्वस्य स्वप्रभासंयुक्तस्य पटादेश्च ज्ञापने न प्रदीपान्तरसापेक्षस्तथायमात्मा स्वस्य स्वनिष्ठज्ञानस्य विषयस्य चावभासने नान्यापेक्षः। अतस्तस्य न साक्ष्यन्तरापेक्षेति। विकारित्वेनेति। विकारित्वं परिणामित्वम् यद्यात्मैव प्रमाता स्यात्तर्हि तस्य विषयाकारेण परिणामोऽवश्यंभावी। विषयाकारपरिणतेरेव ज्ञानत्वात्। परिणामित्वस्य यद्यत्परिणामि तत्तद् दृश्यमिति व्याप्तेर्दृश्यत्वसिद्धौ द्रष्टृत्वं न स्यात्। तथा च साक्षित्वं न संभवति। ननु ज्ञानं नाम न विषयाकारपरिणामः। किं तु विषयेन्द्रियसंबन्धादिनात्मन्युत्पद्यमानो गुणविशेष इति तार्किकमतानुसारेण नात्मनः परिणामित्वापत्तिरिति चेन्न। तथापि निर्गुणसगुणावस्थाभेदेन भिन्नस्यात्मनः परिणामावश्यंभावात्। उपयन्नपयन्धर्मो विकरोति हि धर्मिणमिति न्यायात्। उपयन्नुत्पद्यमानः। अपयन्विनश्यमानः। विकरोत्युत्पत्तिविनाशभाजं करोति। तथा चावस्थाभेदेनापि यत्र भेदो नास्ति तादृशस्यापरिणामिनः कूटस्थस्यैव सर्वसाक्षित्वमभ्युपेयं न तु दृश्यस्येति।

नन्वेक इति। याज्ञवल्क्यस्मृतौ साक्षिप्रकरणे—

त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ( याज्ञ-स्मृ. २।६९ )

इत्युक्तम्। तथा चात्र तद्विरुद्धं कथमेकस्य निर्धर्मकस्य साक्षित्वमुच्यते। तथा तदुत्तरश्लोके कूटकृद्विकलेन्द्रियाः ( याज्ञ. स्मृ. २।७० ) इति कूटकृतः साक्षित्वं निषिद्धम्। अत्र तु तद्विरुद्धं कूटस्थस्यैव साक्षित्वमुच्यते। तथा चेदं न प्रमाणपदवीमारोहतीत्याशयः। प्रमाणेषु मूर्धाभिषिक्ता श्रुतिरेवात्र प्रमाणमित्याह—तमेवेति। याज्ञवल्क्योक्तिस्तु व्यवहारविषयेति न तद्विरोधः। किं च याज्ञवल्क्येन यत्कूटकृतः साक्षित्वं निषिध्यते तत्कपटकारिणः। आत्मा तु न तथा। आत्मा कूटस्थ इति यदुच्यते तत्र कूटस्थशब्दस्य निर्विकारैकरूपेण सदा वर्तमान इत्यर्थः।

एकरूपतया तु यः कालव्यापी स कूटस्थः ( अम. को. ३।१।७३ )

इत्यमरः। एकरूपतया एकेनैव स्वरूपेण। कालव्यापी त्रैकालिको नित्यः।

---

१ ख ङ—नो। २ च—चेन्न। माता च मानं च मितिश्च मेयं च तानि दृश्यानि। दृश्यस्य। ३ ग—त्वानुपपत्तेः प्रमा। ४ क—टस्थस्य सर्वं। ५ ख ङ च छ ज झ—त्। एकः।

का. २।२ )। न दृष्टेर्द्रष्टारं पश्येः ( बृ. ३।४।२ )। अदृष्टो द्रष्टा ( बृ. ३।७। २३ ) । नान्योतोस्ति द्रष्टा ( बृ. ३।७।२३ ) इत्यादि वदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात् ।

ननु महदेतदिन्द्रजालं प्रमाश्रयानकूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति। बाढमिन्द्रजालमेवैतत्। स्वप्नवदविद्याविलसितत्वात्। तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमिति चेन्न। दर्पणादिवत्स्वच्छत्वेन चित्प्रतिबिम्बग्राहकत्वाच्चित्तादात्म्याध्यासाद्वा।

कूटो निश्चलः। कूटोस्त्री निश्चले राशौ ( मे. को. ) इति मेदिनीकोशः। निश्चलः संस्तिष्ठतीति कूटस्थ इति तदर्थः। तमेवेत्यादिश्रुतेस्त्वयमर्थः। इदं सर्वं सूर्यचन्द्रविद्युदादिकं न स्वतो विभाति। सूर्यादीनां स्वतःप्रकाशनसामर्थ्याभावात्। किं तु तमेव भान्तं प्रकाशमानं परमात्मानमनुभाति। परमात्मानुग्रहेण भाति। तस्य परमात्मनो भासा दीप्त्येदं सर्वं सूर्यादिकं जगद्विभाति। तथा च परमात्मनो भारूपत्वमवगम्यते। न हि स्वतोऽविद्यमानभासनशक्तिरन्यस्यावभासनं कर्तुं शक्नोति कश्चित्। लोके घटादीनामन्यावभासकत्वादर्शनात्। भारूपाणां च सूर्यादीनां तद्दर्शनात्। तथा च सर्वसाक्षित्वं परमात्मनः सिद्धम्। दृष्टेः लौकिक्याश्चक्षुरादिगताया दर्शनशक्तेर्द्रष्टारमन्तर्यामिरूपेण व्यापारं परमात्मानं न पश्येः। परमात्मा लौकिकदृष्टेर्विषयो न भवति। लौकिकदृष्टिसाक्षित्वात्तस्य। तेन च सर्वसाक्षित्वं परमात्मनः सिद्धम्। अदृष्टो लौकिकदृष्टेरविषयः परमात्मा स्वयं द्रष्टा सर्वसाक्षित्वात्। अतः परमात्मनः सकाशादन्यः कोपि द्रष्टा नास्ति। तथा च सर्वसाक्षित्वं परमात्मनः सिद्धम्।

ननु महदिति। प्रमाश्रया यथार्थज्ञानवन्तः। अकूटस्था अकपटकारिणः। एतादृशानेव राजा लोके साक्षित्वेनाङ्गीकरोति। परमात्मा तु तद्विपरीतः। न प्रमाश्रयः। अबाधितविषयाकारान्तःकरणवृत्तिर्हि प्रमेत्युच्यते। तदाश्रयमन्तःकरणमेव। परिणामित्वात्। न त्वपरिणामी परमात्मा। कूटस्थत्वाच्च नाकूटस्थः। पुनः शङ्कते-तथापि दृश्यस्येति। प्रमा हि ज्ञानविशेषः। अन्तःकरणवृत्तेः प्रमात्वं त्वौपचारिकम्। ज्ञानं च चैतन्यमेवेति प्रमा चेतनस्यैव धर्मो भवितुमर्हति नाचेतनस्यान्तःकरणस्येत्याशयः। चित्प्रतिबिम्बेति। वस्तुतश्चैतन्यानाश्रयमप्यन्तःकरणं चित्प्रतिबिम्बग्राहकत्वाच्चैतन्याश्रयमुच्यते। अथवा अचेतनस्याप्यन्तःकरणस्य चेतनेनात्मना सह भेदाग्रहादन्तःकरणं चैतन्याश्रयमुच्यते। चैतन्याश्रयत्वमेव च तस्य प्रमाश्रयत्वम्।

१ घ च-श्यस्यान्तः करणस्य। २ ङ-चेत् दर्प। ३ ङ-न बिम्बग्राह। ४ घ ङ-न चिद्बिम्बग्राह। ४ च-त्वाच्चैतन्यतादा। ५ च-सात्। ननु।

ननु नीरूपस्य निरवयवस्यात्मनः कथं प्रतिबिम्ब इति चेत् कात्रानुपपत्तिः। विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य नीरूपस्य निरवयवस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्। शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्। तयोः संप्रतिपन्नप्रतिबिम्बवैलक्षण्यानिरूपणात्। तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेन्न। व्यभिचारात्। अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्याप्याकाशस्य जलादौ प्रतिबिम्बोपलम्भात्। अन्यथा जानु-

जपाकुसुमस्येति। जपाकुसुमसंनिहिते स्फटिके केवलं रक्तिमा दृश्यते न तु तत्र जपाकुसुमं दर्पणे मुखमिव समुपलभ्यते। रक्तिमा च न रूपवान्नापि सावयव इति भावः। ननु विषमो दृष्टान्तः। स्फटिके दृश्यमानस्य रक्तिम्नः प्रतिध्वनेश्च प्रतिबिम्बत्वाभावादिति चेत्तत्राह–तयोरिति। संप्रतिपन्नं सर्वसंमतं दर्पणे समुपलभ्यमानं मुखादिप्रतिबिम्बम्। तत्सदृश एव स्फटिकगतरक्तिमा प्रतिध्वनिश्च। अन्यसंबन्धेनान्यत्रोपलभ्यमानत्वस्याविशेषात्। अन्यसंबन्धेनान्यत्रोपलभ्यमानमेव हि प्रतिबिम्बमिति भावः। पुनः शङ्कते–तथापीति। आत्मन इन्द्रियग्राह्यत्वाभावात्तस्य न प्रतिबिम्बं संभवतीत्याशयः। अनिन्द्रियग्राह्येति। आकाशस्य यज्ज्ञानं जायते तन्न घटादिप्रत्यक्षवत्प्रमातृप्रत्यक्षम्। आकाशे रूपाद्यभावेन चक्षुरादीन्द्रियसंचाराभावात्। नाप्यनुमानादिकम्। तत्कारणीभूतव्याप्तिज्ञानादेरननुभवात्। तथा च तत्र प्रमाणसंचाराभावेन नान्तःकरणस्य तदानीमाकाशाकारा वृत्तिः। प्रमाणजन्यमनोवृत्तावेव मनसः परिणामित्वनियमात्। अत एव शुक्तौ रजताभासे रजताकारा मनोवृत्तिर्न व्यावहारिकस्य मनसः परिणामः। किं तु सा मनोवृत्तिरविद्याकल्पितेति साक्षिभास्यमेव तद्रजतम्। तथा चाकाशस्य साक्षिप्रत्यक्षविषयत्वं सिद्धम्। अतोऽनिन्द्रियग्राह्यस्याकाशस्येवात्मनोऽपि प्रतिबिम्बसंभव इति भावः। नन्वाकाशस्येन्द्रियग्राह्यत्वाभावेन नैव तस्य जलादौ प्रतिबिम्बसंभवः। जलान्तराकाशोपलम्भस्तु जलावच्छिन्नाकाशस्यैव न प्रतिबिम्बभूताकाशस्येति चेत्तत्राह–अन्यथा जानुमात्र इति। जलावच्छिन्नाकाशस्य गाम्भीर्याभावात्। नन्वस्तूक्तरीत्याकाशस्य जले प्रतिबिम्बोपलम्भः। साधनं तु तस्य चक्षुरेवापेक्ष्यते। अन्धस्य तथाननुभवात्। अतो बिम्बाकाशोपलम्भसाधनमपि तदेव स्वीकार्यम्। बिम्बप्रतिबिम्बयोः समानसामग्रीवेद्यत्वनियमात्। तथा चाकाशं न साक्षिमात्रप्रत्यक्षं किं तु चक्षुरिन्द्रियग्राह्यमितीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति नियमस्य न व्यभिचार इति चेन्न। आकाशस्य रूपवत्त्वाभावेन तस्य तत्प्रतिबिम्बस्य च चाक्षुषप्रत्यक्षविषयत्वासंभवात्। आकाशे चाक्षुषत्वप्रत्ययस्तु भ्रम एव। किमर्थं तर्हि बिम्बस्य प्रतिबिम्बस्य चाकाशस्य प्रत्यक्षे चक्षुरपेक्ष्यत इति चेत्–उच्यते। आकाशप्रदेशे यः पृथिव्यादीनामभावस्तादृशाभावग्रहणार्थं हि चक्षुर्व्याप्रियते। पृथिव्याद्यभाव आकाशश्चेत्यनयोर्द्वयोः

१ ग–वस्य कथं। २ ग–पस्यापि। ३ च–न्नबिम्ब।

मात्रेऽप्युदकेऽतिगम्भीरप्रतीतिर्न स्यात्। आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेऽपि सालोकस्य साभ्रस्य च प्रतिबिम्बितत्वात्तद्ग्रहणार्थमधिष्ठानग्रहणार्थं च चक्षुषोपेक्षणात्। एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ। तत्र सालोकस्याकाशस्याधिष्ठानत्वात्। तस्माच्चाक्षुषप्रतिबिम्बमेव रूपसापेक्षं नान्यदित्यवधेयम्।

तथाप्यात्मनः प्रतिबिम्बे किं मानमिति चेच्छृणु। रूपं रूपं प्रति-

---

समनियतत्वम्। तत्र पृथिव्याद्यभावग्रहणपूर्वकमेवाकाशग्रहणम्। तथैवानुभवात्। समनियतत्वादेव च भ्रमेण बौद्धा आकाशमतिरिक्तं नाङ्गीकुर्वन्ति। तथा च तत्र तादृगाकाशप्रदेशगतः पृथिव्याद्यभाव एव चाक्षुषो न तु तादृशाभावस्याधिकरणं भावरूपमाकाशमपि चाक्षुषमित्याकाशस्य साक्षिमात्रप्रत्यक्षविषयत्वं सिद्धम्। किं च प्रतिबिम्बाकाशग्रहणसमये प्रतिबिम्बोपाधिभूतस्य जलादेरधिष्ठानस्य ग्रहणार्थं चक्षुरपेक्ष्यते। तदाह—आकाशप्रतिबिम्बस्येति। ननु नीलं नभ इति प्रतीतिश्चक्षुष्मत एव भवति नान्धस्य। तत्र चक्षुःसत्त्वे तादृशप्रतीतिसत्त्वमित्यन्वयः। चक्षुरभावे तादृशप्रतीत्यभाव इति व्यतिरेकः। प्रतीतिश्चेयं यदि सत्या तर्ह्येतावन्वयव्यतिरेकावुपपन्नौ। किं त्वाकाशस्य रूपवत्त्वं स्यात्। अथ सा प्रतीतिर्न सत्या किं तु भ्रमस्तर्ह्यप्यारोपितस्य नीलरूपस्य ज्ञानार्थं चक्षुषोपेक्षेत्यन्वयव्यतिरेकावुपपन्नौ। किं त्वेकरूपवत्येव रूपान्तरभ्रमो यथा श्वेते शङ्खे पीतरूपभ्रम इत्याकाशस्य रूपवत्त्वं दुर्वारम्। उभयथापि रूपवत्त्वादिन्द्रियग्राह्यत्वं स्यादिति चेत्—उच्यते। सा प्रतीतिर्भ्रम एव। आरोपितस्य च तस्य नीलरूपस्य न केवलमाकाशमधिष्ठानं येन तस्य रूपवत्त्वं स्वीकार्यं स्यात्। किं त्वालोकसहितमाकाशमधिष्ठानम्। आलोकस्य च रूपवत्त्वात्तत्र नीलरूपभ्रम उपपद्यते। तदेतदाह—एतेनेति। यथा न केवला रज्जुः सर्पभ्रमस्याधिष्ठानं किं त्वन्धकारावृतैव तथात्र सालोकमाकाशमधिष्ठानमिति तादृशाधिष्ठानान्तर्गतालोकज्ञानार्थमारोपितनीलरूपज्ञानार्थं च चक्षुरपेक्षेत्यन्वयव्यतिरेकौ नानुपपन्नौ नाप्याकाशस्य रूपवत्त्वप्रसङ्ग इति भावः। तस्मादिति। रूपवत एव प्रतिबिम्बमिति नियमश्चाक्षुषप्रतिबिम्बविषयक एव न सर्वविधप्रतिबिम्बविषयक इत्यर्थः।

शङ्कते—तथाप्यात्मन इति। यद्यप्युक्तरीत्यात्मनो रूपवत्त्वाभावेऽपीन्द्रियग्राह्यत्वाभावेऽपि च तत्प्रतिबिम्बं संभवतीति प्रतिबिम्बरूपेण मनसि तस्य सबन्धयोग्यता साधिता तथापि मनस्यात्मप्रतिबिम्बमस्त्येवेति न निश्चयः। यतः संभवो न निश्चायकं प्रमाणम्। न हि वने दूरतो दृश्यमाने वस्तुनि स्थाणुर्वा पुरुषो वेति संशये सति वनेऽत्र भिल्लानां संचारः संभवतीत्येतावतायं पुरुष एवेति

---

१ झ—मात्र उदके। २ छ झ—स्यात्। तर्ह्यन्धस्य जले प्रतिबिम्बप्रतीतिः कुतो न स्यात्। आकाश।; ज—स्यात्। तर्ह्यन्धस्य जले प्रतीतिः कुतो न जायत इति चेत्। आकाश। ३ ग च छ ज झ—त्वेऽधिष्ठानग्रहणार्थं चक्षु। ४ ग—किं प्रमाणमि।

रूपो बभूव। तदस्य रूपं प्रतिचक्षणाय (बृ. २।५।१९) एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[1] (ब्रह्मबिन्दू० १२)। मायाऽऽभासेन जीवेशौ करोति इत्यादिश्रुतिः स एषु इह प्रविष्टः (बृ. १।४।७)। स एतमेव सीमानं विदार्य तया द्वारा प्रापद्यत (ऐ. ३।१२)। तत्सृष्ट्वा तदेवानुप्राविशत् (तै. २।६।१) इत्यादिप्रवेशश्रुत्यर्थो-न्यथानुपपत्तिः[2]। आभास एव च (ब्र. सू. २।३।५०)। अत एव चोपमा सूर्यका-

निश्चयो जायते। तथा चात्र चित्प्रतिबिम्बसंबन्धान्मनसः प्रमातृत्वमिति कथं निश्चय इत्याशयः। रूपं रूपमिति। रूप्यतेनेन तद्रूपं मनः। व्यवहारार्थकाद्रूप-धातोः करणे घञ्प्रत्ययः। आत्मा हि मनसैवाहमिति व्यवह्रियते। प्रतिरूपशब्दः प्रतिबिम्बार्थकः। परमात्मा मनसि मनसि प्रतिबिम्बरूपेणाविशदिति तात्पर्यम्। तदस्येति। प्रतिचक्षणं व्यवहारविशेषः। अस्य परमात्मनस्तद्रूपं मनसि प्रविष्टं प्रति-बिम्बस्वरूपमहमिति व्यवहारायाचार्यशिष्यादिरूपेणाध्यापनाध्ययनादिव्यवहा-राय च पर्याप्तमित्यर्थः। मायेति। आभासः प्रतिबिम्बम्। माया परमात्मशक्तिर-विद्याख्या स्वाश्रयमेकमपि परमात्मानं स्वस्मिन्स्वकार्ये च प्रतिबिम्बवशाज्जीवे-शभेदेन विभक्तं करोतीत्यर्थः। एकधेति। एकधा स्वभावत एकस्वरूपोपि परमात्मा जलप्रतिबिम्बितचन्द्रवन्मनसि मनसि प्रविश्य बहुस्वरूपो दृश्यत इति स्मृत्यर्थः। एवं परमात्मनः प्रतिबिम्बे श्रुतिस्मृतिरूपं शब्दप्रमाणं प्रदर्श्यार्थापत्तिप्रमाणं प्रद-र्शयति–स एष इति। स एष परमात्मेह कर्मफलाश्रयेष्वशनायादिमत्सु ब्रह्मादि-स्तम्बपर्यन्तेषु देहेषु प्रविष्ट इत्यर्थः। स एतमिति। स परमात्मैतमेव मूर्धमध्यभा-गमेव कपालसंधिरूपं सीमानं स्थानविशेषं विदार्य तेन द्वारेण देहे प्राविशदित्यर्थः। तत्सृष्ट्वेति। परमात्मा तत्कार्यजातं सृष्ट्वोत्पाद्य स्वेनो-त्पादिते तत्र स्वयं प्राविशदित्यर्थः। आसु श्रुतिषु देहादौ परमात्मनः प्रवेशः प्रतिपादितः। स च यथा बहिःस्थितो देवदत्तो गृहं प्रविशति तथात्र न संभवति। सर्वव्यापिनः परमात्मनः क्वापि बहिःस्थितत्वासंभवात्। तथा च श्रुतिप्रतिपादितस्य प्रवेशस्यान्यथानुपपत्त्या परमात्मनः प्रतिबिम्बं कल्पते। यथा मुखं दर्पणे प्रतिबिम्बितं सत्प्रविष्टमिव भवति तद्वत्। प्रतिबिम्बं चेद स्वच्छेन्तःकरणादौ व्यक्तं भवति। तदेव च जीवशब्देन व्यपदिश्यते। आभास इति। एष जीवः परमात्मन आभासो जलसूर्यकादिवत्प्रतिबिम्बभूत एव प्रत्ये-तव्यः। न परमात्मैव साक्षान्नापि वस्त्वन्तरमिति सूत्रार्थः। अत एवेति। आत्मैक्यादेव च जीवस्य श्रुतौ सूर्यकादिवदित्युपमोपादीयत इति सूत्रार्थः। यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्। उपाधिना-क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा इति श्रुतिः। यथायं ज्योतिर्मयः

१ ग–चन्द्रवदिति स्मृतिः। स एष। २ ग ङ–त्यर्थापत्तिः।, च छ ज ञ–न्यन्यथा।

दिवत् (ब्र. सू. ३।२।१८) इत्यादि[1]पारमर्षसूत्राणि च तत्र मानानि।

तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः। मिथ्यात्वमेवेत्याभासवादिनः। स्वरूपे तु[2] न विवाद इत्यन्यत्[3]। अचेतनविलक्षणत्वं तु[4] तस्य श्रुतिसिद्धं

---

सूर्यः स्वत एकोपि घटादिभेदेन भिन्नो अपोनुगच्छन्बहुधा क्रियते एवमजोयमात्मा देवः स्वप्रकाश एकोप्युपाधिना मायया क्षेत्रेष्वनुगच्छन्भेदरूपो भातीति श्रुत्यर्थः। याज्ञवल्क्यस्मृतिरपि–

आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥ (याज्ञ. स्मृ. ३।१४४)

इति। यथैकमेवाकाशं घटादिभेदेन भिन्नमिवानुभूयते यथा च सूर्य एकोपि भिन्नेषु जलपात्रेषु भिन्न इवानुभूयते तथैकोप्यात्मान्तःकरणोपाधिभेदेन भिन्न इव प्रतीयत इत्यर्थः।

तस्य चेति। विवरणकाराः संक्षेपशारीरककाराश्च प्रतिबिम्बवादिनः। जीवश्चित्प्रतिबिम्बरूप इति तेषां मतम्। लोके दर्पणादिस्वच्छपदार्थसंनिधाने मुखादिकं धर्मिभूतं बिम्बमेवान्यत्वेन दर्पणाद्यन्तर्गतत्वेन चेति धर्मद्वयेन केवलमवभासते न तु वस्तुतस्तदन्यत्नापि दर्पणादिस्थम्। तथा च न प्रतिबिम्बस्य बिम्बापेक्षया पृथगस्तित्वम्। नापि तस्य मिथ्यात्वम्। बिम्बरूपेण सत्यत्वात्। अस्मिन्मते दर्पणादेरीदृशी शक्तिर्यत्स दर्पणादिः सत्ये बिम्ब एवान्यत्वकल्पनपूर्वकं स्वान्तर्गतत्वमात्रं कल्पयति। सत्ये शङ्खे पित्तमिव पीतिमानमिति तदाशयः। मिथ्यात्वमिति। वार्तिककारा आभासवादिनः। जीवश्चिदाभासस्वरूप इति तेषां मतम्। लोके बिम्बभूतमुखाद्यपेक्षया दर्पणादौ दृश्यमानं प्रतिबिम्बभूतं मुखादिकं बिम्बसदृशमन्यदेव। तच्च मिथ्याभूतं प्रातिभासिकसर्पवदनिर्वचनीयं समुत्पद्यते। अस्मिन्मते दर्पणादेरीदृशी शक्तिर्यत्स दर्पणादिर्बिम्बसदृशमन्यत्स्वान्तर्गतं प्रतिबिम्बं कल्पयतीति तदाशयः। तथा चोक्तमतभेदेन प्रतिबिम्बस्य सत्यत्वं वास्तु मिथ्यात्वं वास्तु प्रतिबिम्बस्वरूपे न विवादः। तथा च मनसि यच्चित्प्रतिबिम्बं तत्संबन्धेन जडस्यापि मनसः प्रमातृत्वमुपपद्यते। यथा जले पतितं सूर्यप्रतिबिम्बं चकास्ति तत्प्रतिबिम्बसंबन्धेन च जलमपि तच्चकास्तीत्येवं जलस्य प्रकाशसंबन्धो दृश्यते तथात्र मनसः स्वान्तर्गतचित्प्रतिबिम्बसंबन्धेन प्रकाशसंबन्धः। प्रकाश एव च ज्ञानमिति चैतन्यमिति च व्यवह्रियते। अतो मनसो ज्ञातृत्वमुपपद्यते। चितः प्रतिबिम्बं हि चित्सदृशं बोधरूपम्। तादृशबोधरूपप्रतिबिम्बाश्रयत्वादन्तःकरणं बोद्धृ प्रमात्रिति चोच्यते। ननु प्रतिबिम्बमचेतनमिति तस्यैव ज्ञानस्वरूपत्वं नास्ति कुतस्तत्संबन्धेन मनसो ज्ञातृत्वमिति चेत्तत्राह–अचेतनविलक्षणत्वमिति। योयं विज्ञानमयः प्राणेषु (बृ. ४।४।१) इति श्रुतौ जीवस्य विज्ञा-

---

[1] ग–दिसू। [2] ख–तु निर्विवाद्। [3] ज–न्यदेतत्। चेतनाचेतनविल। [4] ग–तु श्रुतिसिद्धमनुभवसिद्धं च।

प्रत्यक्षसिद्धं च । तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम् ।

नन्वध्यासोपि नोपपद्यते । तथा हि । आत्मनि वा अनात्माध्यस्यते अनात्मनि वात्मा । नाद्यः । तस्य निःसामान्यविशेषत्वेन सर्वदा भासमानत्वेन सादृश्यादिरहितत्वेन चाधिष्ठानत्वासंभवात् । नापि द्वितीयः ।

---

नमयत्वोक्त्या चेतनत्वं सिध्यति । किं च जीवे चैतन्य प्रत्यक्षमहं चेतन इत्येवं प्राणिमात्रप्रसिद्धमेव । ननूक्तश्रुतिप्रत्यक्षाभ्यां जीवस्य चेतनत्वं सिध्यति । रूपं रूपमित्यादिप्रागुक्तश्रुत्यादिप्रमाणैर्जीवस्य प्रतिबिम्बत्वमुच्यते । तदेतदुभयं मिथो विरुद्धम् । जीवश्चेतनश्चेन्न प्रतिबिम्बः । प्रतिबिम्बश्चेन्न चेतन इति । सेयमुभयतस्पाशा रज्जुरिति चेत्-अत्रेदं तत्त्वम् । प्रतिबिम्बवादिनां मते प्रतिबिम्बस्यापि जीवस्य बिम्बादनन्यत्वाच्चेतनत्वमस्त्येव नाचेतनत्वम् । आभासवादिनां तु मते प्रतिबिम्बस्य बिम्बादन्यत्वेपि अनिर्वचनीयस्य प्रातिभासिकस्य तस्योत्पत्तौ बिम्बमविद्या चेत्येतदुभयस्योपादानकारणत्वाङ्गीकारेण तत्र बिम्बगतचैतन्यसंबन्धसंभवात् । तथा च यथा चित्रस्थः सूर्यो निस्तेजस्को दृश्यते न तथा जलस्थः । तादृशजलस्थसूर्यवच्चित्प्रतिबिम्बो जीवो नाचेतनः । तथा चाद्यमते प्रतिबिम्बभूतो जीवश्चेतनः द्वितीयमते तु चेतनाचेतनविलक्षण इति सर्वथा तस्याचेतनविलक्षणत्वं सिद्धम् । उपसंहरति-तस्मादिति । प्रतिबिम्बाध्यासेति द्वन्द्वः । अन्तःकरणे चित्प्रतिबिम्बसत्त्वेनात्मानात्मनोश्चिदन्तःकरणयोरैक्याध्यासेन चान्तःकरणस्य प्रमातृत्वं प्रतिबिम्बद्वाराध्यासद्वारा चेति प्रकारद्वयेनापि युगपत्सिद्धं भवति । न तु प्रतिबिम्बद्वारा प्रमातृत्वपक्षेध्यासो नास्तीति भ्रमितव्यम् ।

अथाध्यासद्वारान्तःकरणस्य प्रमातृत्वमाक्षिपति–नन्वध्यासोपीत्यादिना सौगतमतापत्तिरित्यन्तेन । ऐक्यवादिनः सिद्धान्तिन आत्मानात्मरूपं द्वयं सत्यतयानभिमतमेव । तथा च तयोर्मध्येन्यतरस्यान्यत्रारोपोवश्यं वाच्यः । स च प्रकारद्वयेन संभवतीत्याशयेन विकल्पयति–तथा हीति । तस्य निःसामान्येति । तेजस्तिमिरयोः संधौ वस्तुतो विद्यमाना शुक्तिर्यदा रजतरूपेणावभासते तदा तत्राधिष्ठानभूता शुक्तिर्जडत्वेन परप्रकाशा तेजःसंबन्धादिदंत्वेन द्रव्यत्वेन रजतसदृशचाकचक्यादिरूपेण चेति सामान्यरूपेणावभासते । विशेषरूपेण शुक्तित्वेन तिमिरसंबन्धान्नावभासते । दूरे विद्यमाना त्वन्धकाराभावेपि दूरत्वदोषवशाद्विशेषरूपेण नावभासते । अतस्तत्र रजतारोपो भवितुमर्हति । समीपे स्पष्टालोके च विद्यमाना तु शुक्तिः शुक्तित्वेन विशेषरूपेणाप्यवभासत एवेति न तत्र रजतारोपः । तथा गाढान्धकारे विद्यमाना शुक्तिः सामान्यरूपेणापि नावभासत इति न तत्राप्यारोपः । तथा चाधिष्ठानभूतं वस्तु सामान्यविशेषधर्माश्रयं परप्रकाशमारोप्यवस्तुसदृशं चापेक्ष्यते । आत्मा तु निर्धर्मकः स्वप्रकाशो न

---

१ ख ङ च–षयस्येन । २ छ–न वाधिष्ठा ।

तस्य मिथ्यात्वाभ्युपगमात्। मिथ्यावस्तुनोधिष्ठानत्वे शून्यवादप्रसङ्गात्। तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च। न हि सत्यं क्वचिन्निवर्तते। निवर्त्यमानं वा ज्ञानेन।

श्रुतयश्च—भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ (मु. २।२।८)

---

केनापि सदृश इति च न तत्रानात्मनामन्तःकरणादीनामारोपः संभवतीत्याशयः। तस्य मिथ्यात्वेति। अनात्मनोन्तःकरणादेर्मिथ्यात्वस्याद्वैतवादिभिरवाङ्गीकारात्। मिथ्याभूतं च न भ्रमाधिष्ठानं भवति। न ह्यसत्यां शुक्तौ रजतभ्रमसंभवः। ननु प्रातिभासिकेपि सर्पे वर्णविशेषारोपो दृश्यते। अधिष्ठानास्तित्वकालेप्यारोपितस्य विनाशसंभवात्तस्मिन्वर्णविशेषे स्वप्नस्थस्वप्नदृष्टगजादाविव प्रातिभासिकसर्पापेक्षयापि मिथ्यात्वातिशयः स्यादिति त्वन्यदेतत्। तथा चारोपितं मिथ्याभूतेप्यनात्मन्यस्त्वात्मारोपः का हानिरिति चेत्तत्राह—मिथ्यावस्तुन इति। यथान्धकारापसरणे मिथ्याभूतः सर्पस्तत्रारोपितो वर्णविशेषश्च निवर्तते तथा मोक्षकाले मूलाविद्याया अपसरणे मिथ्याभूतमनात्मवस्तु तत्रारोपित आत्मा च निवर्ततेति शून्यवादप्रसङ्गः। अथैतद्दोषपरिहारायानात्मभूतमन्तःकरणादिकं सत्यमेवाभ्युपेयते न मिथ्येति चेत्तत्राह—तस्य चेति। सत्यस्य वस्तुनः कदापि कथमपि विनाशो न भवतीत्यन्तःकरणादिकस्य प्रपञ्चस्य निवृत्त्यसंभवान्मोक्षासंभवः स्यात्। द्वैतभानस्य मोक्षावस्थायां त्वयानङ्गीकारात्। न हीति। सत्यस्य कालत्रयाबाध्यत्वादिति भावः। ननु वैशेषिकरीत्या सत्यस्यापि घटादेर्दण्डादिना विनाशो दृश्यते तद्वदत्रानात्मभूतस्यान्तःकरणादेः सत्यस्यापि मोक्षावस्थायां विनाशः स्यादिति चेत्-किमत्रान्तःकरणादिद्वैतप्रपञ्चस्य विनाशकम्। ज्ञानमेव विनाशकं चेदत्यन्तापरिदृष्टकल्पना स्यात्। नहि सत्यस्य वस्तुनः क्वापि ज्ञानेन विनाशो दृश्यते। तदाह—निवर्त्यमानं वेति। न हि सत्यं क्वचिदित्यनुषज्यते। दृश्यत इति शेषः। सत्यं वस्तु ज्ञानेन निवर्त्यमानं क्वचिन्न दृश्यत इत्यर्थः।

अथ ज्ञानादन्यद्विनाशकं चेत्किं तदन्यत्। आत्मैव चेत्सोध्यस्त एवेति न तेनानात्मनां सत्यानां विनाशः संभवति। मोक्षस्य तत्त्वज्ञानैकसाध्यत्वप्रतिपादकश्रुतिविरोधश्च। अथानात्मनां सत्यत्वे श्रुतिविरोधं दर्शयति-श्रुतयश्चेति। भिद्यत इति। परं प्रकृष्टं सर्वप्रपञ्चाधिष्ठानभूतं सूक्ष्मम्। तदेव स्थूलप्रपञ्चरूपेणावभासमानमवरम्। तादृशे तस्मिन्ब्रह्मणि दृष्टे साक्षादहमस्मीत्येवं प्रत्यभिज्ञाते हृदयग्रन्थिरविद्यावासनाप्रचयो बुद्ध्याश्रयो विनाशं याति। सर्वज्ञेयविषयाः संशया गङ्गाप्रवाहवदामरणान्तं प्रवृत्ता विच्छेदं यान्ति। संचितानि कर्माणि च क्षीयन्त इत्यर्थः। तमेवेति। अतीत्युपसर्गो व्यवहितेनैतीत्यनेन संबध्यते।

---

१ ङ—सङ्गात्। न हि।; झ—सङ्गः। न हि। २ च छ—निवर्तमानं।; ज झ—निवर्तमानं वा ज्ञानेनानुभूयते श्रु।

तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ( श्वे. ३।८ ) तरति शोकमात्मवित् ( छा.७।१।३ ) इत्याद्या ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्त्य-स्तस्य मिथ्यात्वं सूचयन्ति । एकमेवाद्वितीयम् ( छा. ६।२।१ )। अतोऽन्यदा-र्तम् ( बृ. ३।४।२ )। नेह नानास्ति किंचन ( बृ. ४।४।१९ )। अथात आदेशो नेति नेति( बृ. २।३।६ ) इत्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति । दृश्यत्वेन शुक्तिरजतादिवन्मिथ्यात्वानुमानाच्च ।

---

अत्येति अतिक्रामति । मृत्योरतिक्रमणं च मोक्ष एव । तत्साधनीभूतमात्मज्ञानं तत्पूर्वकालिकक्रियाबोधकेन क्त्वाप्रत्ययान्तेन विदित्वेत्यनेन सूच्यते । एवकार-स्तमित्युत्तरं निर्दिश्यमानोऽपि विदित्वेत्यनेनैव संबध्यते । तद्व्यावर्त्यत्वेन नान्यः पन्था इत्युत्तरत्र मोक्षे साधनान्तरस्य प्रतिषेधप्रदर्शनात् । अयनं मोक्षः । तरतीति । आत्मज्ञानी शोकं तरति मुक्तो भवतीत्यर्थः । एतासु श्रुतिषु तस्मिन्दृष्टे तमेव विदित्वा आत्मविदित्येवमात्मज्ञानमनूद्य हृदयग्रन्थिभेदसंशयच्छेदकर्मक्षयमृ-त्यूल्लङ्घनशोकतरणादिकं विधीयते । तच्च संसारनिवृत्तिद्वारैव । सति संसारे हृदयग्रन्थिभेदादीनामसंभवात् । आत्मज्ञानाज्जायमाना संसारनिवृत्तिश्च संसा-रस्य मिथ्यात्वे सत्येव संभवति नान्यथा । सत्यस्य ज्ञानेनानिवृत्तेरनुपदमेवोक्त-त्वात् । तथा चाभिः श्रुतिभिः संसारस्य मिथ्यात्वं सूचितं भवति । मिथ्यात्वं च बाधबुद्धिविषयत्वम् । अथ साक्षान्मिथ्यात्वप्रतिपादिकाः श्रुतीर्दर्शयति—एकमे-वेति । पुरो दृश्यमानमिदं सर्वमुत्पत्तेः प्रागेकमेवासीन्न तु द्वितीयं किंचिदपीत्यर्थः । अतोऽन्यदिति । अत एतस्मादात्मनः सकाशादन्यत्सर्वमार्तं मिथ्येत्यर्थः । नेहेति । इह मनसा द्रष्टव्ये ब्रह्मण्यनेकं किंचिदपि नास्तीत्यर्थः । अथात इति । अथ सत्य-स्वरूपनिर्देशानन्तरं यस्मात्सत्यस्य सत्यमेवावशिष्यतेऽत आदेशो ब्रह्मनिर्देशो नेति नेतीति । पुरो दृश्यमानमिदं सर्वमुपस्थितत्वात्तच्छब्दार्थेन संबध्यते । नकारद्वयेन वीप्सा द्योत्यते । यद्यत्प्राप्तं तत्तत्सर्वं निषिध्यते । निषेधमुखेनैव ब्रह्मणो निर्देश इति तात्पर्यम् । आसु श्रुतिषु नशब्देनार्तशब्देन चात्मव्यतिरिक्तस्य मिथ्यात्वं स्पष्टमेव प्रतिपाद्यते ।

अथानात्मनो मिथ्यात्वमनुमानेनापि साधयति—दृश्यत्वेनेति । तथा च प्रयोगः । घटपटादिकं मिथ्या दृश्यत्वात्प्रातिभासिकरजतवदिति । इत्थं चानिर्मोक्षप्रसङ्गापादनेन मिथ्यात्वसूचकश्रुतिविरोधोद्भावनेन साक्षान्मिथ्या-त्वप्रतिपादकश्रुतिविरोधोद्भावनेनानुमानेन चानात्मनः सत्यत्वं दूषयित्वा-नात्मन्यात्माध्यास इति द्वितीयपक्षे शून्यवादप्रसङ्गरूप उक्तो दोषः समर्थितः । नन्वेवमनात्मनो मिथ्यात्वमस्तु । न तु सर्वथा शशशृङ्गवदत्यन्तासत्त्वम् ।

---

१ ख ङ च छ ज—यन्ति तस्य । ; झ—यन्तो तस्य मिथ्यात्वं सूचयति । २ ख ज झ—त्याद्याश्च श्रु ।

[1]आत्मन्यध्यस्ततयैवानात्म[2]नि सिद्धे तत्रात्माध्यासः। अनात्माध्यासेन चा-त्मनो दोषसादृश्यादिसंभवात्तत्र[3]ानात्माध्यास इत्यात्माश्रया[4]द्यन्यतमदोषप्रसङ्गात्।

एतेनात्मानात्माध्यासस्या[5]विद्यकत्वान्न विकल्पावसर इत्यपास्तम्।

---

मिथ्यात्वं च प्रातिभासिकमिति तादृशस्य प्रातिभासिकस्यानात्मनो यदधिष्ठानं किंचित्तदवशिष्टं स्यादिति न शून्यवादप्रसङ्गः। यथा प्रातिभासिके मृगजले चलनवहनादिकाः क्रिया आरोप्यन्ते। तत्र तत्त्वज्ञानेन चलनवहनादिक्रियाणां तदधिष्ठानभूतस्य जलस्य च प्रातिभासिकत्वाद्विनाशेपि तादृशजलाधिष्ठानभूत-मूषरमवशिष्यत एव तद्वत्। तथा च नोक्तदोष इत्यत आह–आत्मन्यध्यस्ततयेति। आत्माध्यासस्याधिष्ठानार्थं यदनात्मभूतं वस्त्वध्यासेन कल्पनीयं तदनात्मभिन्न आत्मरूप एव वस्तुनि कल्पनीयं भवति। स्वस्य स्वस्मिन्नेवाध्यासासंभवात्। तथा चात्माश्रयदोष इत्याह–अनात्माध्यासेन चेति। योयमात्मन्यनात्माध्यासः स आत्मनि दोषसादृश्याद्यसंभवेन नोपपद्यत इत्यनुपदमेवोक्तमिति तत्र तदुपप-त्तयेनात्माध्यासेन स्वेनैव स्वाधिष्ठानस्य मालिन्यं संपादनीयं भवति। अतोना-त्माध्यासस्यानात्माध्यासापेक्षत्वादात्माश्रयदोषः। अथवात्मन्यनात्माध्यासोप-पत्तये ह्यात्मनि दोषसादृश्यादीनामध्यासः। अयं दोषसादृश्यादीनामध्यास-श्चानात्माध्यास एव। दोषादीनामात्मभिन्नत्वात्। तथा चानात्मा-ध्यासस्यानात्माध्यासापेक्षेत्यात्माश्रयदोषः। ननु यद्यप्यात्मन्यध्यस्ता अन्तः-करणादयोप्यनात्मानः दोषसादृश्यादयोपि चानात्मान एव तथाप्यनात्म-भूतव्यक्तिभेदेन नात्माश्रय इति चेन्न। दोषसादृश्याध्यासोपि स्वच्छ आत्मनि नोपपद्यत इति तत्र मालिन्यसंपादनाय दोषसादृश्याध्यासस्यावश्यमपेक्षणीय-त्वेनात्माश्रयदोषतादवस्थ्यात्। अथात्मन्यनात्मनामन्तःकरणादीनामध्या-सार्थं ये प्रथमे दोषसादृश्यादयोध्यस्यन्ते त एव न तादृशप्राथमिकदोषसादृ-श्याध्यासोपपादका येनात्माश्रयः स्यात्। किं तु द्वितीया इमे प्राथमिकेभ्योन्य एव दोषसादृश्यादय इति चेदेतादृशद्वितीयदोषसादृश्याध्यासोपपादकास्त्व तृतीयाः कल्पनीयाः। तत्र तृतीयाः प्राथमिकापेक्षया न भिद्यन्त उत भिद्यन्ते। आद्येन्योन्याश्रयः। अन्त्ये तृतीयाध्यासोपपादनाय चतुर्थाः कल्पनीयाः स्युः। ते च चतुर्थाः प्राथमिकापेक्षया न भिद्यन्त उत भिद्यन्ते। आद्ये चक्रकम्। अन्त्ये तदर्थं पुनरन्ये पञ्चमास्तदर्थं पुनः पूर्ववत्षष्ठाः कल्पनीया इत्युक्तरीत्या-नवस्था स्यादिति बोध्यम्।

एतेनेति। द्विविधस्याप्यध्यासस्यासंभवेनेत्यर्थः। आत्मानात्माध्यास-स्याविद्यकत्वान्न विकल्पावसर इति अद्वैतवादिन उक्तिः। तस्यायं [illegible]। अध्यासो ह्यविद्यापरिणामः। अविद्या च स्वयमनिर्वचनीया न केनापि [illegible] निर्वक्तुं शक्यते। स्वरूपमेव च तस्या एतादृशम्। तथा च [illegible]

---

१ ग ङ छ–आत्माध्यस्त। २ छ–त्मनि दोष। ३ ग–तत्र [illegible]। ४ [illegible]–[illegible]दिदोष। ५ ग ज–स्याविद्यात्मकत्वा।

स्वप्रकाशात्मन्यविद्याया अप्यनुपपत्तेः। तथाहि। साध्यस्तानध्यस्ता वा। तत्राद्ये कथं नात्माश्रयाद्यन्यतमदोषप्रसङ्गः। अन्त्ये तस्या अनुच्छेदादनिर्मोक्षप्रसङ्गः। सर्वस्याध्यासमूलत्वे भ्रमप्रमादिव्यवस्था च न स्यात्। एकस्यैवात्मनः प्रमाणप्रमेययमध्यासोऽपि निर्वक्तुमशक्य एव। यश्चार्थो निर्वक्तुं शक्यो भवति तद्विषय ईदृशो वा तादृशो वेति विकल्पो युज्यते न त्वनिर्वचनीये। तथा चात्मनि वानात्माध्यस्यतेनात्मनि वात्मेत्यादिविकल्पस्य नानिर्वचनीयेध्यासेवकाश इति। परं त्वेतन्न युक्तम्। असंभवदुक्तिकेऽर्थे स्वभाववादाभ्युपगमेन समाधानस्यानुचितत्वात्। स्वप्रकाशात्मनीति। प्रदर्शिताद्वैतवादियुक्तिर्न समीचीना। अविद्यासिद्ध्युत्तरं हि स विचारः। अविद्यैव तु न सिध्यति। स्वप्रकाश आत्मनि सूर्येन्धकारसम्बन्धस्येवाविद्यासंबन्धस्य दुरुपपादत्वात्। कथं नात्माश्रयेति। स्वप्रकाशस्यात्मनः प्रकाशस्येषदपि तिरोधानं स्याच्चेत्तर्ह्येव तत्राविद्याध्यासः संभवति। स्फुटालोके कार्त्स्न्येन प्रकाशितायां शुक्तौ रजताध्यासस्यासंभवात्। प्रकाशतिरोधानं चाविद्याध्यासेनैव संपादनीयमित्यविद्याध्यासस्याविद्याध्यासापेक्षत्यात्माश्रयः। अथ यद्यन्तःकरणाद्यध्यासकारणीभूता अविद्या भिन्ना प्रकाशतिरोधायिका त्वविद्या ततो भिन्ना द्वितीया स्वीक्रियत इत्युच्यते तर्हि तादृशद्वितीयाविद्याध्यासार्थं प्रकाशतिरोधानं यस्या अविद्याया अध्यासेन संपादनीयं सा किं द्वितीयाविद्यास्वरूपात प्रथमाविद्यास्वरूपाथ वा ताभ्यां द्वाभ्यां भिन्ना तृतीयैवेति त्रयः कल्पाः। आद्य आत्माश्रयः। द्वितीयेन्योन्याश्रयः। तृतीये कल्पे तादृशतृतीयाविद्याध्यासार्थं प्रकाशतिरोधानं यस्या अविद्याया अध्यासेन भवेत् साविद्या किं तृतीयाविद्यास्वरूपोत द्वितीयाविद्यास्वरूपाथ वा प्रथमाविद्यास्वरूपाहोस्वित्ताभ्यस्तसृभ्योप्यविद्याभ्यो भिन्ना चतुर्थ्येवेति चत्वारः कल्पाः। आद्य आत्माश्रयः। द्वितीयेन्योन्याश्रयः। तृतीये चक्रकम्। चतुर्थे तु कल्पे तादृशचतुर्थाविद्याध्यासार्थं प्रकाशतिरोधानं पुनरन्यया अविद्यया संपादनीयम्। तत्रापि पुनः पूर्ववद्विकल्प इत्येवमनवस्था दुरुद्धरा स्यात्। अनिर्मोक्षेति। अविद्याया अनध्यस्तत्वे तस्या आत्मन इव पारमार्थिकसत्यत्वावश्यंभावात्तत्त्वज्ञानेऽपि पारमार्थिकसत्यस्याविनाशाद् द्वैतस्य तदवस्थत्वेन मोक्षासंभव इत्याशयः। सर्वस्येति। सत्यायाः शुक्तेर्ज्ञानं प्रमा। तत्रैवासत्यस्य रजतस्याध्यासेन जायमानं ज्ञानं भ्रम इति व्यवस्था लोके संदृश्यते। सर्वस्य जगतोऽविद्याध्यासमूलकत्वे तु शुक्तेरपि रजतस्येवासत्यत्वेनेदं ज्ञानं यथार्थमिदमयथार्थमित्येवं व्यवस्था न स्यात्। विरुद्धेति। न हि क्रियैव कारकम्। द्वैतवादिनां तार्किकादीनां मते तु प्रमितिर्ज्ञानविशेषः। ज्ञानं च मानसी क्रिया। तत्साधनमिन्द्रियादिकं प्रमाणम्। ज्ञानविषयीभूतं शब्दस्पर्शादिकं प्रमेयम्। ज्ञानाश्रय आत्मा प्रमाता। अद्वैतवादिभि-

१ ग च छ—साप्यध्यस्ता।; ङ—स्ता न वा। २ ग ङ—यादि दोष। ३ ग छ—तस्यानुच्छे।
४ ङ च छ ज—त्वे च भ्रमप्रमादिव्यवस्था न। ५ झ—स्यैव प्रमाण।

प्रमितिप्रमातृरूपता[1] च विरुद्धा। अविरोधाभ्युपगमे[2] वा सौगतमतापत्तिरिति[3]।

अत्रोच्यते। अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिस्तावत्सर्वजनप्रसिद्धा[4]। सा च न स्मृतिः। अपरोक्षावभासत्वाद्भेदाग्रहपूर्वकत्वाच्च। नापि प्रमा। श्रुति-

स्त्वेकं चैतन्यमेव प्रमाणं प्रमेयं प्रमातृ प्रमितिश्चेति यदुच्यते तद्विरुद्धं भवति। ननु चैतन्य एकस्मिन्नप्यौपाधिकभेदं परिकल्प्याविरोधः संपाद्यत इति चेत्तत्राह-अविरोधेति। सौगतेति। सौगतो विज्ञानवादी बौद्धः। तन्मत आत्मा मन इन्द्रियाणि विषयाः सुखादिकं च न किमपि ज्ञानातिरिक्तम्। ज्ञानमेव तेन तेन रूपेणावभासते। तथा च विज्ञानवादिबौद्धमतमेवाद्वैतवादिना स्वीकृतं भवतीत्याशयः।

समाधत्ते-अत्रोच्यत इति। पूर्वपक्षिणा हि मायावादमसहमानेनाध्यास आक्षिप्तः। आक्षेपहेतुत्वेन चाध्यासस्य विकल्पासहत्वप्रदर्शनपूर्वकमसंभवदुक्तिकत्वं प्रदर्शितं न त्वध्यासस्यानावश्यकत्वमाक्षेपहेतुत्वेन प्रदर्शितम्। तथा चाध्यासस्यावश्यकत्वे साधिते पूर्वपक्षिणा गृहीते च सति तस्याध्यासस्यासंभवदुक्तिकता पूर्वपक्षिणापि निरसनीया स्यादित्यालक्ष्य सिद्धान्ती प्रथमतोऽध्यासस्यावश्यकत्वं साधयति-अहं मनुष्य इत्यादिना। अहं मनुष्य इत्यादिप्रतीतेर्निरूढायाः प्रथमतो भ्रमरूपत्वमनेन ग्रन्थेन प्रदर्श्यते। भ्रमत्वे च साधिते तस्याध्यासाङ्गीकारमन्तरेणानुपपत्त्याध्यासो गले पतित एव भवति। अन्यथानुपपत्त्या वस्तुसाधने हीतराणि विरुद्धानि बहून्यपि प्रमाणानि निरसितुं शक्यन्ते। तदुक्तम्-

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्ट्यदृष्टिवैमत्यं सैव सर्वबलाधिका॥

इति। अदृष्टिवैमत्यमन्यत्र क्वाप्यदर्शनमूलिका विरुद्धा मतिः। तथा च यथान्यत्र क्वाप्यदर्शनरूपं विरुद्धं हेतुं चूर्णीकृत्यान्यथानुपपत्तिर्बलिष्ठत्वाद्वस्तु साधयति तथात्रापि सा विकल्पासहत्वादीन्दोषांश्चूर्णीकृत्याध्यासं साधयेदेवेति भावः। सा चेति। ज्ञानं द्विविधम्-स्मृतिरनुभवश्च। अनुभवोपि द्विविधः-प्रमाभ्रमभेदात्। अत्र चाहं मनुष्य इति ज्ञानस्य भ्रमरूपत्वं साधनीयम्। अतस्तस्य स्मृतित्वं प्रमात्वं च निरसनीयं भवति। तत्र स्मृतित्वं न संभवति। प्रत्यक्षज्ञानत्वात्। परोक्षापरोक्षभेदेनानुभवात्मकज्ञानस्य द्वैविध्येपि स्मरणात्मकज्ञानस्य परोक्षैकरूपत्वमेवेति नियमात्। भेदाग्रहेति। सत्यरजते मिथ्यारजते चेदं रजतमिति प्रत्यक्षं भवति। तत्र पुरोवस्थिते वस्तुनि रजतभेदाग्रहः कारणम्। सत्यरजते रजतभेदस्यासत्त्वात्तदग्रहः। मिथ्यारजते तु रजतभेदस्य सत्त्वेपीन्द्रियादिदोषात्तदग्रहः। प्रकृतेहं मनुष्य इत्यादिप्रतीतौ त्वात्मनि मनुष्यभेदाग्रहः कारणं भवति। स्मृतौ तु भेदाग्रहस्य न क्वचिदपि कारणत्वं दृश्यते इत्यतोहं मनुष्य इत्यादिप्रतीतिर्न स्मृतिरूपेत्यर्थः। प्रमात्वं निरस्यति-नापीति। श्रुतीति। आत्मनि भौतिकशरीरविशेषरूपमनुष्यत्वस्य कर्तृत्वस्य

१ छ-तृस्वरू। २ छ ज-मे च सौ। ३ झ-ताभ्युपगमापत्ति। ४ ग-नसिद्धा।

युक्तिबाधितत्वात् ।

तथा च श्रुतयः । योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ( बृ. ४।३।७ ) । अयमात्मा ब्रह्म ( बृ. २।५।१९ ) । सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) । विज्ञानमानन्दं ब्रह्म ( बृ. ३।९।२८ ) । य आत्मापहतपाप्मा ( छा. ८।७।१ ) । यत्साक्षादपरोक्षाद्ब्रह्म । य आत्मा सर्वान्तरः ( बृ. ३।४।१ ) योशनायापिपासे शोकं मोहं जरां मृत्युमत्येति( बृ. ३।५।१ ) ।

भोक्तृत्वस्य च श्रुतिविरुद्धत्वाद्युक्तिविरुद्धत्वाच्चेत्यर्थः ।

तथा च श्रुतय इति । अकर्त्रभोक्तृब्रह्मरूपतामात्मनो दर्शयन्तीत्यत्रास्यान्वयः । यतश्चैतासु श्रुतिषु जीवात्मा अकर्त्रभोक्तृब्रह्मरूप इत्युच्यते ततोहं मनुष्यः कर्ता भोक्तेत्येवं जीवात्मनि मनुष्यत्वं कर्तृत्वं भोक्तृत्वं च प्रतीयमानं मिथ्यैवेति सिध्यति । योयमिति । कतम आत्मेति प्रश्नस्योत्तरमेतत् । प्राणेषु मध्ये योयं विज्ञानमयः ज्ञानस्वरूपः । न तु मनुष्यत्वादिधर्मविशिष्टो भौतिकः । हृद्यन्तःकरणम् । तच्च लौकिकज्ञानकाले विषयाकारेण परिणामं प्राप्य विषयं प्रकाशयति । आत्मा त्वयं तादृशस्य विषयप्रकाशकस्याप्यन्तःकरणस्यान्तर्ज्योतिःप्रकाशनशक्तिदाता । तथा च नायं केनापि प्रकाश्य इति भौतिकजडदेहरूपत्वं निरस्तम् । अयमात्मेति । अयं जीवात्मा ब्रह्मैव न तु तदन्यः । ब्रह्म च सत्यं ज्ञानमिति श्रुतौ विज्ञानमानन्दमिति श्रुतौ च वर्णितम् । सत्यं न तु मिथ्या । ज्ञानं न तु जडम् । अनन्तं न तु विनाशि । आनन्दरूपं न तु कदाचिदपि दुःखीति तदर्थः । तथा च मिथ्याभूतो जडो विनाशी दुःखी च देहो न ब्रह्मरूप इति न स आत्मा । ब्रह्मणः सकाशादात्मनो भेदाभावादिति तात्पर्यम् । य आत्मेति । पातकवाचिना पापशब्देनात्र पुण्यमप्युपलक्ष्यते । आत्मनः पापपुण्यरहितत्वोक्त्या कर्तृत्वं निरस्तम् । कर्तृत्वे पापपुण्ययोरवर्जनीयत्वात् । तथा तयैव भोक्तृत्वमपि निरस्तम् । कारणाभावे कार्यानुदयात् । भोगस्य हि पापं पुण्यं च हेतुः । यत्साक्षादिति । अपरोक्षात् अपरोक्षं प्रत्यक्षमिति यावत् । यो हि लोके घटादिरर्थः प्रत्यक्ष इत्युच्यते स न स्वरूपतः प्रत्यक्षः । जडत्वेनाप्रकाशत्वात् । किं तु चित्तादात्म्येनैव स प्रत्यक्ष इत्युच्यते । तथा च घटाद्यर्थो न साक्षात्प्रत्यक्षः । किं तु चिद्द्वारा । ब्रह्म तु साक्षादेव प्रत्यक्षमित्यर्थः । सर्वान्तर इत्यत्र सर्वशब्दस्यासंकोचेन प्रवृत्तत्वादान्तरत्वेन लोके प्रसिद्धा येन्तःकरणादयोर्थास्तेषामप्यान्तर आत्मेत्युक्तं भवति । साक्षात्प्रत्यक्षब्रह्मरूपः सर्वान्तरश्च य आत्मा तं मे व्याचक्ष्वेति श्रुत्यर्थः । तथा च घटादिवज्जडत्वेनान्यद्वारा प्रत्यक्षो बाह्यश्च मनुष्यत्वादिविशिष्टो देहो नात्मेति सिध्यति । योशनायेति । अशनाया बुभुक्षा । पिपासा तृषा । एतौ प्राणधर्मौ । शोकमोहा-

स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः ( बृ. ४।३।१५ ) इत्याद्या अकर्त्रभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्ति ।

युक्तयश्च—विकारिणः परिच्छिन्नत्वेनानात्मत्वापत्तेः स्वेनैव स्वस्य ग्रहणे कर्तृकर्मभावविरोधाद् दृग्दृश्यसंबन्धानुपपत्तेः भेदेनाभेदेन वा धर्मिधर्म-

---

वन्तःकरणधर्मौ । जरामृत्यू देहधर्मौ । अत्येति अतिक्रामति । अत्रात्मनोऽशनायादिधर्मरहितत्वोक्त्या तस्य प्राणमनोदेहरूपत्वं निरस्तम् । स यत्तत्रेति । स आत्मा यत्तत्र स्वप्ने हस्त्यश्वादिकं किंचित्पश्यति तेन वस्तुतोऽनन्वागतोऽसंसृष्टो भवति । यतोऽयं पुरुष आत्मा असङ्गः संबन्धसामान्यरहित इत्यर्थः । एतेनात्मनि कर्तृत्वं निरस्तम् । कर्तृत्वस्य क्रियादिसंबन्धाधीनत्वात् । कर्तृत्वे च निरस्ते भोक्तृत्वमप्यर्थादेव निरस्तं भवति ।

युक्तयश्चेति । सुखात्मक एवात्मेत्याद्या इत्यनेनान्वयः । अकर्त्रभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्तीत्यनुषज्यते । अनुमानमनुकूलतर्कश्च युक्तिशब्देनोच्यते । विकारिण इति । अहं मनुष्य इति प्रतीतेः प्रमात्वे मनुष्यस्य देहविशेषरूपस्यात्मत्वमभ्युपेयम् । तच्च न संभवति । देहस्य विकारित्वात् । विकारिणश्च परिच्छिन्नत्वमवश्यंभावि । विकारिणो विनाशावश्यकत्वेन कालपरिच्छेदस्यावर्जनीयत्वात् । विकारश्च वृद्धिक्षयरूपो व्यापकस्य न संभवतीत्यव्यापकत्वं तस्य वाच्यम् । अनुभूयते चाव्यापकत्वं देहस्य । अतो देशतः परिच्छेदोऽपि तस्यास्त्येव । तथा वस्तुतः परिच्छेदोऽपि घटादिभ्यो भिन्नत्वाद्देहस्यैव । परिच्छिन्नस्य च नात्मत्वम् । तथा च प्रयोगः । देहो नात्मा परिच्छिन्नत्वाद्घटादिवदिति । न च देहात्मवादिनश्चार्वाकस्य मत आत्मनः परिच्छिन्नत्वमिष्टमेव । उक्तमनुमानं त्वहं मनुष्योऽहं गौर इत्यादिप्रतीतिविरुद्धत्वाद्बाधितमेवेति वाच्यम् । तथा सति कृतनाशाकृताभ्यागमप्रसङ्गात् । स्वभाववादेन समाधानं तु न मध्यस्थसंतोषावहम् । अभ्युपेत्याप्याह-स्वेनैव स्वस्येति । अहं मनुष्य इत्यादिप्रतीतिसाक्षी च देहात्मवादिनो मते देह एव । तद्व्यतिरिक्तस्य साक्षिणस्तेनानभ्युपगमात् । तथा च देह एव द्रष्टा । तादृशप्रतीतिरूपायां दृशिक्रियायां दृश्यत्वेन देहस्य तस्यैव संबन्धो वाच्यः । स च न संभवति । दृशिकर्तृदृशिकर्मत्वासंभवात् । कर्ता च स्वातन्त्र्येण विवक्षितोऽर्थः । कारकान्तराणि च तत्पारतन्त्र्येण विवक्षितानि । एकस्यैव स्वातन्त्र्येण पारतन्त्र्येण च युगपद्विवक्षा न संभवति । ननु मनुष्यत्वादिधर्मविशिष्टो देहो दृश्यः केवलश्च द्रष्टेति न विरोध इति चेत्-तथापि दृशिक्रियाया ज्ञानरूपाया अंजसैव एव देहे । भेदेनाभेदेनेति । ज्ञानस्य देहधर्मत्वं भेदेनाभेदेन च न संभवतीत्यर्थः । अयं भावः । देहात्मवादिनो मते दृशिर्नात्मस्वरूपभूता । वैलक्षण्यात् । दृशिर्ह्यमूर्ता मानसी

---

१ ग च छ ज झ—र्मविरो । २ ङ झ—धर्मधर्मिभा ।

भावानुपपत्तेश्च ज्ञानानित्यत्वपक्षे तत्तव्द्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवादेकत्वाभ्युपगमे चातिलाघवात् घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः[1] स्वतस्तु ज्ञानं ज्ञानमित्येकरूपावगमात्[2] तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्प्यविषयसंबन्धविषयतयाप्युपपत्तेरुपाधिपरामर्शमन्तरेण स्वत एव घटाद्घटान्तरस्य भेदप्रतीतेस्तत्प्रतिबन्दिग्रहासंभवादाकाशकालदिशामपि नानात्वापत्तेश्च कर्तृत्वादेर्वास्तवत्वे अनिर्मोक्षप्रसङ्गात्स्वप्र-

---

क्रिया ज्ञानरूपा। देहश्च स्थूलो मूर्तः। तथा च न दृशिरूपस्य धर्मस्य धर्मिण आत्मनः सकाशाद्भेदः। भेदश्चेत्कः संबन्धस्तयोः। संयोगश्च द्रव्ययोरेव। अथ समवायोन्यो वा कश्चन कल्प्यत इति चेत्स पुनः संबन्धिभ्यां भिन्नः अभिन्नो वा। तत्राभेदो न संभवति। तथात्वे धर्म्यभिन्नः संबन्धः संबन्धाभिन्नश्च धर्म इति ज्ञानदेहयोर्धर्मधर्मिणोरप्यभेद एव वक्तव्यः स्यात्। स चान्तरबाह्यमूर्तामूर्तादिवैलक्षण्येन न संभवति। संबन्धः संबन्धिभ्यां भिन्नश्चेत्पुनस्तत्र संबन्धान्तरं कल्पनीयमित्यनवस्था। न च यथा दीपः प्रकाशरूपत्वात्प्रकाशान्तरानपेक्षस्तथा समवायः स्वयं संबन्धरूपत्वान्न संबन्धान्तरापेक्ष इति कल्प्यत इति वाच्यम्। वैषम्यात्। दीपो हि प्रत्यक्षतस्तथानुभूयत इति तत्र तथास्तु नाम। न हि दृष्टेनुपपन्नं नामेति न्यायात्। अत्र तु समवायोन्यत्राप्यदृष्टपूर्वः कल्प्यः। तस्य च संबन्धिभ्यां भिन्नस्यापि विनैव संबन्धान्तरेण संबद्धत्वमनुपपद्यमानं कल्पनीयं स्यादिति। तथा च ज्ञानात्मनोर्धर्मधर्मिभावो द्विधापि नोपपद्यत इति। ननु देहातिरिक्तात्मवादिनस्तव मतेपि कथं ज्ञानात्मनोर्धर्मधर्मिभावः। भेदेन चेत्त्वदुक्त एवानवस्थादोषः। अभेदस्तु न संभवति। नित्यानित्ययोस्तदयोगात्। आत्मा तु नित्यस्त्वयाङ्गीक्रियते। ज्ञानं त्वनित्यं प्रत्यक्षत एवानुभूयत इति चेन्न। ज्ञानस्य नित्यत्वात्। तदेव साधयन्ज्ञानानित्यत्वपक्षे दोषमुद्भावयति–ज्ञानानित्यत्वपक्ष इति। ज्ञानस्यानित्यत्वाङ्गीकारे तस्य नानात्वमवश्यमभ्युपेयम्। विनष्टानां विद्यमानानामुत्पत्स्यमानानां च ज्ञानव्यक्तीनामैक्यासंभवात्। तथा च ज्ञानव्यक्तिनानात्वाङ्गीकार एकं गौरवम्। प्रतिव्यक्ति प्रागभावप्रध्वंसौ तथाऽनेकज्ञानव्यक्तिष्वेका ज्ञानत्वजातिस्तस्याः स्वाश्रयेण सह समवाय इत्यादि कल्प्यमित्यपरं गौरवम्। अतिलाघवादिति। अथैवं घटपटादीनामप्यैक्यमस्तु लाघवात्। तथा मिथोविरुद्धयोरपि तेजस्तिमिरयोः शीतोष्णयोः सुखदुःखयोश्चैक्यमस्तु। किं बहुना पञ्चमहाभूतानामपि पञ्चेन्द्रियाणामपि च पञ्चत्वकल्पना गौरवग्रस्तत्वान्न कार्येति प्रतिबन्द्युपादानेन कश्चिद्

---

१ ख–तेर्वस्तुतस्तु। २ ग–कस्वरूपा। ३ ङ–माद्युत्प। ४ झ–विषयितया। ५ च छ ज–घटान्तराद्घटान्त। ; झ–टान्तरात्पटान्तरस्य। ६ ङ–रभेद। ७ ग झ–बन्दीग्रहा। ; ज–बन्धिग्रहा।

काशानभ्युपगमे च जगदान्ध्यप्रसङ्गात्परमप्रेमास्पदत्वेन च तस्यानन्दरूपत्वान्निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मेत्याद्याः।

तस्मात्परिशेषाद्भ्रान्तिरियमिति स्थिते तत्कारणमपि योग्यं किंचित्कल्पनीयम्। कल्प्यमानं च तदात्मन्यध्यस्ततयैव धर्मिग्राहकमानेन सिध्यतीति न जानामीति साक्षिप्रतीतिसिद्धमनिर्वाच्यमज्ञानमेव तत्।

---

ब्रूयाच्चेत्तत्रेत्थं वक्तव्यम्। यत्र परस्परवैलक्षण्येन स्वरूपतो भेदः प्रत्यक्षमनुभूयते तत्रानुभवानुसारेणाङ्गीकार्यमेव न तत्र गौरवं दोषाय। कल्पनीयेऽर्थे हि लाघवगौरवचर्चा न प्रत्यक्षे। यद्यपि घटज्ञानं पटज्ञानमिति भेदः प्रतीयते तथापि स न स्वरूपतः। किं तु घटपटाद्युपाधितः। तथा चोपाधिभेदेनोपपन्ने ज्ञाने भेदस्य कल्पनीयत्वात्तत्र लाघवगौरवचर्चाया अवसरः। अत एव घटमठाद्युपाधिभेदेऽप्याकाशभेदो न स्वीकृतस्तार्किकैः। तथा च विषयभेदेप्याश्रयभेदेऽपि लाघवाज्ज्ञानमेकमेवास्थेयम्। ननु घटज्ञानं नष्टं पटज्ञानमुत्पन्नमिति प्रतीतेर्ज्ञानानामनेकत्वमास्थेयमिति चेन्न। ज्ञानस्य घटपटादिविषयेण सह यः संबन्धस्तद्विषयिणी सा प्रतीतिः। तादृशसंबन्धगतावुत्पत्तिविनाशौ ज्ञान उपचर्येते इति यावत्। तथा च सिद्धं ज्ञानस्यैकत्वं नित्यत्वं चेत्येकेनात्मना सह ज्ञानस्य नाभेदानुपपत्तिः। अभेदेन धर्मधर्मिभावे चाश्रयस्य निर्धर्मकत्व एव पर्यवसानं भवतीत्यात्मा निर्धर्मकः सिद्धः। कर्तृत्वादिनापि नात्मनः सधर्मकत्वम्। कर्तृत्वादेरस्वाभाविकत्वात्। अन्यथा संसारस्यापरिहार्यत्वेन मोक्षो दुरुपपादः स्यात्। परमप्रेमेति। तथा चोक्तं पञ्चदश्याम्—

मा न भूवं हि भूयासमिति प्रेमात्मनीक्षते।
तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि।
अतस्तत्परमं तेन परमानन्दतात्मनः॥ (पं. द. १।९) इति।

एतावता ग्रन्थसंदर्भेणात्रत्यः पूर्वपक्षी वेदान्तवादरूपस्वमतात्प्रच्यावितः। तथा च तेनाप्यहं मनुष्य इति प्रतीतेर्भ्रान्तिरूपत्वमवश्याभ्युपेयम्। तदाह—तस्मादिति। तत्कारणमपीति। अहं मनुष्य इत्याद्याकारकं यद्भ्रान्तिज्ञानं तस्योपादानकारणं तद्योग्यं किंचित्कल्पनीयम्। शुद्धं चैतन्यं तु निर्विकारत्वान्न तद्योग्यम्। तच्चोपादानकारणमनुमानप्रमाणेन सिध्यति। तद्यथा—भ्रान्तिज्ञानं भावरूपोपादानकारणकम् जन्यभावत्वाद्घटवदिति। अनेन चानुमानेन सिध्यदुपादानकारणं भ्रान्तिज्ञानरूपकार्याश्रयीभूत आत्मन्येव सिध्यति। वैयधिकरण्ये कार्यकारणभावायोगात्। तथा च धर्मिभूतस्योपादानकारणस्य ग्राहकं यत्कार्यकारणभावमूलकमुक्तमनुमानं तदेव तादृशधर्मिगतस्यात्मवृत्तित्वरूपधर्मस्य ग्राहकं भवति। भ्रान्तिज्ञानस्य च मिथ्यात्वा-

---

१ ख—दत्वात्तस्य चानन्द। २ ख—त्मैक ए। ३ ख—त्मेत्यौपनिषदपक्ष एवाभ्युपेयः। तस्मा।; च ख—त्मेत्यादयः। त। ४ ग क च ज—तदद्वितीयात्मन्य।

न चेदमभावरूपम् । ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरुक्तत्वात् । धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेः ।

तद्योग्यं तदुपादानकारणमपि मिथ्याभूतमेव योग्यम् । कार्यस्योपादानकारणेन सह साजात्यनियमात् । आत्मनि वस्तुतः कस्यापि वस्तुनोऽसत्त्वाच्च । एवं चात्मन्यध्यस्तमेव किंचिद्भ्रान्तिज्ञानोपादानकारणं सिद्धम् । तच्च ज्ञानाभावादतिरिक्तं भावरूपमनाद्यज्ञानं न जानामीति प्रत्यक्षप्रतीतिविषयीभूतम् । एतच्चाज्ञानं न सत् । अद्वितीयत्वप्रतिपादकश्रुतिविरोधात् । 'नेह नानास्ति किंचन' इति श्रुतौ निषेधाच्च । ज्ञानिदृष्ट्या तस्याप्रतीतत्वाच्च । नाप्यसत् । भावरूपकार्योपादानकारणत्वात् । न जानामीति प्रतीतिविषयत्वाच्च । अतोऽनिर्वचनीयत्वं तस्य सिद्धं भवति ।

इदमभावरूपमिति । अहमात्मानं न जानामि अहमज्ञ इत्यादिप्रत्यक्षप्रतीतिविषयीभूतं न भावरूपमनिर्वाच्यमज्ञानम् । किं तु ज्ञानाभावः । तथा च न भावरूपमज्ञानं प्रत्यक्षप्रमाणसिद्धं भवतीत्याशयः । किंत्वित्थं वदन्वादी प्रष्टव्यः-किं ज्ञानसामान्याभावो ज्ञानविशेषाभावो वा न जानामीति प्रत्यक्षप्रतीतिविषयत्वेनाभिमतः । नाद्यः । तादृशप्रत्यक्षप्रतीतेरेव ज्ञानरूपायाः सत्त्वेन तत्र ज्ञानसामान्याभावस्य वक्तुमशक्यत्वात् । एकघटसत्त्वे तदितरेषां सकलघटानां तत्राभावेऽपि घटसामान्याभावप्रतीतेस्तत्रादर्शनात् । न द्वितीयः । ज्ञाने स्वतो भेदाभावेन ज्ञानैक्यस्यानुपदमेव साधितत्वेन ज्ञानविशेष एव दुर्वचो दूरे तदभावः । एकं च तज्ज्ञानं नित्यमेवेति तदभावस्यानुपपत्तेश्च । तदाह-ज्ञानस्य नित्यत्वेनेति । एतेनोभयोः संमतेन ज्ञानाभावेनैवाहमज्ञ इत्यादिप्रत्यक्षप्रतीत्युपपत्तौ तदतिरिक्तभावरूपाज्ञानकल्पना गौरवग्रस्तत्वान्न कार्येत्यपास्तम् । ज्ञानस्य नित्यत्वेन तदभावस्यास्माभिरनङ्गीकारात् । तर्हि 'अस्य ग्रामीणस्य गवयज्ञानं नास्ति' इत्येवं प्रतीयमानस्य ज्ञानविशेषनिषेधस्य का गतिरिति चेत्-इत्थम् । तज्ज्ञानीयविषयता गवये नास्तीति तत्तात्पर्यात् । घटमहं न जानामीत्यादावपि मज्ज्ञानीयविषयता घटे निषिध्यत इति बोध्यम् । न जानामीति प्रत्यक्षस्य ज्ञानाभावविषयकत्वे दोषान्तरमाह-धर्मिप्रतियोगीति । अहं न जानामीति ज्ञानाभावविषयकप्रत्यक्षानुभवकाले ज्ञानाभावधर्मित्वेनाऽऽत्मनः प्रत्यक्षज्ञानमस्ति न वा । तथा तदानीं ज्ञानभावप्रतियोगित्वेन ज्ञानस्य स्मरणात्मकं ज्ञानमस्ति न वा । विकल्पद्वयेऽप्याद्ये धर्मिज्ञानस्य प्रतियोगिज्ञानस्य च सत्त्वेन तदानीं ज्ञानाभावस्यासत्त्वात्कथं तद्विषयकः प्रत्यक्षानुभवः । विषयासत्त्वे तद्विषयकप्रत्यक्षानुदयात् । अन्त्ये कथं ज्ञानाभावप्रतीतिः । अभावानुभवस्य धर्मिप्रतियोगिज्ञानापेक्षत्वात् ।

१ ङ—न ज्ञानाभावा । २ ग—चोरित्युक्त ।

नापि भ्रमसंशयतत्संस्कारपरंपरारूपम् । अपरोक्षत्वात् । अतीतानागतभ्रमसंशयतत्संस्कारा[2]णां च परोक्षत्वेन ज्ञातुमशक्यत्वात् । आवरणात्मकत्वाद्[3]भ्रमोपादानत्वाच्च आत्मनो निर्विकारत्वादन्तःकरणादे[4]श्च तज्जन्यत्वात् । देवात्मशक्तिं स्वगुणैर्निगूढाम् ( श्वे० १।३ ) इति गुणवत्त्वश्रुतेश्च

नापि भ्रमेति । भ्रमपरंपरा संशयपरंपरा भ्रमसंशयान्यतरसंस्कारपरंपरा चेति परंपराचतुष्टयान्यतमं किंचिदपि अहमज्ञ इत्याकारकप्रत्यक्षप्रतीतिविषयीभूताज्ञानस्वरूपं नेत्यर्थः । परंपरा प्रवाहः । प्रवाहघटकैकैकव्यक्तिस्तु न तादृशाज्ञानस्वरूपत्वेनापादिता । अहमज्ञ इत्याकारस्य चिरकालवर्तिन एकाज्ञानस्य प्रत्यभिज्ञानात् । अतः परंपरोपादानम् । अपरोक्षत्वादिति । अहमज्ञ इति ज्ञानस्य प्रत्यक्षत्वाच्च तद्विषयीभूताज्ञानस्वरूपत्वं भ्रमादिपरंपराया इत्यर्थः । तस्याः परोक्षत्वात् । तत्र परंपराघटकानां संस्काराणां प्रत्येकमपि न प्रत्यक्षविषयत्वं किमु तत्परंपरायाः । भ्रमस्य संशयस्य च वर्तमानस्य यद्यपि प्रत्यक्षयोग्यत्वं तथापि भूतानां भ्रमाणां संशयानां तथा भविष्यतां भ्रमाणां संशयानां च न प्रत्यक्षयोग्यत्वमिति परंपरायाः प्रत्यक्षायोग्यत्वमेव । परोक्षत्वेनेति । इदं ज्ञातुमशक्यत्वादित्यत्र हेतुत्वेनान्वेति । अपरोक्षत्वेनेति पाठे ज्ञातुमित्यत्रान्वयः । अपरोक्षरूपेण यज्ज्ञानं तदशक्यमित्यर्थः । आवरणात्मकत्वादिति । अहमज्ञ इति प्रत्यक्षप्रतीतौ यो विषयः स स्वविषयज्ञानात्मस्वरूपावरकतया भासते । भ्रमसंशययोस्तु मनोवृत्तिरूपलौकिकज्ञानविशेषरूपत्वान्नावरकत्वम् । नापि संस्कारस्य । तस्य मनोवृत्तिविशेषजनकत्वात् । नापि ज्ञानाभावस्य । अभावस्यावरकत्वेन क्वाप्यदर्शनात् । न च तेजोऽभावरूपस्यान्धकारस्य घटाद्यावरकत्वं दृष्टमिति वाच्यम् । वेदान्तिमतेऽन्धकारस्याभावरूपत्वाभावात् । अन्धकारो हि नीलरूपाश्रयीभूतं द्रव्यमेव । भ्रमोपादानत्वादिति । तथा चाहं मनुष्य इत्यादिभ्रमोपादानं तत्सजातीयं भावरूपमज्ञानमेवाहमज्ञ इति प्रत्यक्षप्रतीतिविषयत्वेनास्थेयं भवति । आत्मा तु न तादृशभ्रमोपादानमित्याह—आत्मन इति । नाप्यन्तःकरणादिकम् । तस्याप्यनिर्वचनीयस्य जन्यत्वेन किं तस्योपादानकारणमिति पर्यालोचनायामुक्तं भावरूपमज्ञानमेव पर्यवसितं भवति । अन्तःकरणादीनामज्ञानकार्याणां त्रिगुणात्मकत्वात्तत्कारणीभूतमज्ञानमपि त्रिगुणात्मकमेव स्वीकार्यम् । एवं युक्त्या भावरूपमज्ञानं प्रसाध्य तदुपोद्बलकश्रुतीर्दर्शयति—देवात्मशक्तिमित्यादिना । देवस्य स्वप्रकाशचिद्रूपस्य ईश्वरस्यात्मशक्तिं स्वकीयां शक्तिं स्वाश्रयां स्वविषयिकां च शक्तिं ते ध्यानयोगानुगता मुनयोऽपश्यन् । सा च शक्तिः स्वगुणैः स्वकीयैः सत्त्वरजस्तमोभिस्त्रिभिर्गुणैर्निगूढा घटिता । स्वगुणैरित्यत्र स्वशब्देनात्मशक्तिः परामृश्यते ।

१ च—यसंस्का । २ ग ङ—णां चापरो । ३ ङ—भ्रमाद्युपादा । ४ च ङ—श्च पाम्य ५ ङ—इत्यादिगुण ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ( श्वे० ४।१० ) । इन्द्रो मायाभिः पुरुरूप ईयते ( बृ. २।५।१९ ) । अनृतेन हि प्रत्यूढाः ( छा. ८।३।२ ) । नीहारेण प्रावृताः ( तै० सं० ४।६।२।२ ) । भूयश्चान्ते विश्वमायानिवृत्तिः ( श्वे० १।१० ) इत्यादिश्रुतिभ्यश्च माया अविद्या अनिर्वाच्यमनृतं तत्त्वज्ञाननिवर्त्यं चाज्ञानमेव स्वपराध्यासे कारणम् । न चात्माश्रयादिदोषप्रसङ्गः । अनादित्वेनोत्पत्त्यभावात् । स्वप्रकाशात्मन एव तज्ज्ञप्तिरूपत्वात् ।

तेनाज्ञानाध्यासविशिष्टचैतन्येहंकाराध्यासस्तद्विशिष्टे च कामसं-

---

शक्तिश्च कार्यजननसामर्थ्यम् । अत्र च यात्मशक्तिरुच्यते तदेव भावरूपमनाद्यज्ञानम् । गुणवत्त्वोक्तेस्तस्याभावरूपमिति भावः । मायां त्विति । महेश्वरस्य या मायानिर्वचनीया कार्यजननशक्तिस्तामेव जगतो मूलप्रकृतिं विद्यादित्यर्थः । इन्द्र इति । इन्द्र—आत्मैकोपि मायाभिर्बहुरूपो ज्ञायत इत्यर्थः । अनृतेनेति । अनृतेनाज्ञानेन प्रत्यूढा व्याप्ताः प्रजा मूलकारणं न विन्दन्तीत्यर्थः । नीहारेणेति । नीहारेण नीहारसदृशेन भावरूपेणानाद्यज्ञानेन प्रावृता आच्छादिता यूयं य इमाः प्रजा जजान तं न विदाथ न जानीथ । यथा नीहारो नात्यन्तमसन् । दृष्टेरावरकत्वात् । नाप्यत्यन्तं सन् । काष्ठपाषाणादिरूपान्तरेण संबन्धुमयोग्यत्वात् । एवमज्ञानमपि नात्यन्तमसत् । ईश्वरतत्त्वावरकत्वात् । नापि सत् । बाधमात्रनिवर्त्यत्वात् । ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृता इत्यर्थः । भूयश्चेति । भूयः पुनरर्थे । परमात्मनोऽभिध्यानात्प्रारब्धभोगान्ते पुनर्विश्वमायानिवृत्तिर्भवति । मायाया विश्वत्वमनेकविधत्वम् । तच्चावरणविक्षेपशक्तिभेदात् । आवरणशक्तेरप्यसत्त्वापादकत्वेनाभानापादकत्वेन च द्वैविध्यं बोध्यम् । मायाऽविद्येति । मायाऽविद्यादिरूपमित्यर्थः । विचित्रसृष्टिकरत्वं मायात्वम् । ज्ञानविरोधित्वमविद्यात्वम् । सदसद्विलक्षणत्वमनिर्वाच्यत्वम् । अध्यस्तत्वमनृतत्वम् । स्वपराध्यास इति । यथाऽन्धकारादिना रज्ज्वाः स्वरूपं किंचिदाच्छादितं चेत्तर्ह्येव तस्याः सर्पाध्यासाधिष्ठानत्वं संभवति तथा स्वच्छस्यात्मनोऽज्ञानाध्यासाधिष्ठानत्वायापेक्षणीयं यन्मालिन्यं तत्तेनाज्ञानाध्यासेन स्वयमेव संपादितमिति स्वाध्यासे स्वयमेवाज्ञानं कारणम् । अज्ञानाध्यासविशिष्टात्मनश्चाहंकाराद्यध्यासाधिष्ठानत्वात्पराध्यासे च तत्कारणं भवति । स्वस्मात्स्वयं कथं जातमित्यात्माश्रयस्तु नोद्भावनीयः । अज्ञानस्यानादित्वेनोत्पत्त्यभावात् । तथा चाज्ञानं जातमिति न वक्तव्यं किं त्वस्तीत्येव । नापि ज्ञप्तावात्माश्रयः । तज्ज्ञानरूपस्यात्मनो नित्यत्वात् । अज्ञानं हि साक्षिप्रतीतिविषयतया भासते ।

अहंकाराध्यास इति । तथा च प्रतीतिरज्ञोहमिति । नन्वस्यां प्रतीतावधि-

---

१ ख–वृत्ताः । अनीशया शोचति । भूय । २ छ ज–श्रुतेभ्य । ३ ग ङ च छ ज–त्वेन तन्निरासात् । अनादित्वेनोत्प । ; ख–त्वेन तन्निरासात् । स्वप्रका । ४ ख ङ च–शिष्टे चैत ।

कल्पादीनामहंकारधर्माणामिन्द्रियधर्माणां च काणत्वबधिरत्वादीनामध्यासः । इन्द्रियाणां[3] तु परोक्षत्वान्नापरोक्षधर्म्यध्यास इति सिद्धान्तः । तद्विशिष्टे च स्थूलदेहाध्यासो धर्मपुरस्कारेणैवाहं मनुष्य इत्याकारः । न च स्वरूपतोहं देह इत्यध्यासः । तथा प्रतीत्यभावात् । तद्विशिष्टे च स्थौल्यादीनां देहधर्माणामध्यासः । तद्विशिष्टे च बाह्यानां पुत्रभार्यादीनां साकल्यवैकल्यादिधर्माध्यासः ।

---

ष्ठानस्याज्ञानविशिष्टचैतन्यस्य कथमभासः । नाहि रजताध्यासमूलक इदं रजतमिति प्रत्यये शुक्तिर्भासत इति चेत्सत्यम् । अन्योन्याध्यासाङ्गीकारेणादोषात् । तथा चाज्ञानाध्यासविशिष्टे चैतन्येऽज्ञानपरिणामभूताहंकाराध्यासोत्तरमध्यस्ते तस्मिन्नहंकारेऽज्ञानाध्यासविशिष्टचैतन्यस्याध्यासः । एवं चाध्यासद्वयमूलिका समूहालम्बनात्मिकाऽज्ञोऽहमिति प्रतीतिः । रङ्गरजतयोरिमे रजतरङ्गे इतिवत् । इयांस्तु विशेषः । रङ्गरजतयोर्द्वयोरधिष्ठानभूतयोः पृथक्सत्यत्वादध्यस्तयोर्द्वयोर्भेदेनावभासः । अत्र तु द्वितीयाध्यासाधिष्ठानस्याहंकारस्याज्ञानाध्यासविशिष्टचैतन्य एवाध्यस्तत्वेन पृथक्सत्ताया अभावान्न पार्थक्येनावभास इति । एवं शुक्ताविदं रजतमित्यत्रापि शुक्तौ रजताध्यासः । अध्यस्ते च तादृशे रजते शुक्तिगतेदंताया अध्यासः । तथा चेदं रजतमिति प्रतीतिः । तद्विशिष्टे च कामेति । अहंकाराध्यासविशिष्टचैतन्ये चेत्यर्थः । अहमिच्छामीत्यादिप्रत्ययान्नानध्यस्ताहंकारं चैतन्यं कामादिधर्माध्यासाधिष्ठानं भवितुमर्हति । किंतु तादात्म्येनाहंकाराध्यासविशिष्टमेव । तदेव चेन्द्रियधर्माध्यासाधिष्ठानम् । न त्विन्द्रियाध्यासविशिष्टम् । चक्षुरहं काण इत्यादिप्रतीत्यभावात् । नन्विन्द्रियतादात्म्यानापन्नं न काणत्वादिधर्माध्यासयोग्यमधिष्ठानमितिचेन्न । इन्द्रियाणां सामान्यरूपेणेन्द्रियत्वेन विशेषरूपेण चक्षुरादिना चाहंकारविशिष्टे स्वरूपतोनध्यासेपि संसर्गतोऽध्याससत्त्वात् । इन्द्रियवानहं चक्षुष्मानहमित्यादिप्रतीतेः । अज्ञानविशिष्टे चैतन्ये स्वरूपेणापि तेषामध्याससत्त्वाच्च । भूतभौतिकनिखिलप्रपञ्चस्य तत्रैव कल्पितत्वात् । स्थूलदेहाध्यास इति । मनुष्यत्वादिधर्मपुरस्कारेण ( वैशिष्ट्येन ) देहस्य मनुष्यादिविशेषस्वरूपेण तादात्म्येनाध्यासः । अहं मनुष्य इति प्रतीतेः । न च स्वरूपत इति । देहत्वधर्मवैशिष्ट्येन देहस्य देहसामान्यस्वरूपेण तादात्म्येन नाध्यासः । देहस्य संसर्गतोऽध्यासस्त्वहंकारविशिष्टे वर्तत एव । अहं देहीति प्रत्ययात् । मनुष्यादिविशेषस्वरूपेण देहाध्यासविशिष्टे स्थूलत्वादिधर्माणां भेदेनाध्यासः । न त्वध्यस्ताहंकारेप्यनध्यस्तदेहे चैतन्ये । तस्यामूर्तस्य स्थौल्यादिमूर्तधर्माध्यासाधिष्ठानान-

---

१ ज-णामध्यासः । तद्विशिष्टे इन्द्रिय । २ इ-रत्वक्लीबत्वादी । ३ ङ क-णां च परो । ४ छ ज-धर्माध्यास । ५ ग-धर्मिपुर । ६ ज झ-त्यायाकारः । ७ छ-स्वरूपतस्तु नाहं । ८ झ ज झ-न तु स्व ।

एवं चैतन्यस्याप्यहंकारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः। अध्यास-व्यवधानतारतम्याच्च प्रेमतारतम्यम्। तदुक्तं वार्तिकामृते—

वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम्।
इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रियः॥

इति। पिण्डः स्थूलशरीरम्। प्राणोऽन्तःकरणम्। देहापेक्षया चेन्द्रियाणां प्रियत्वं शस्त्रवृष्ट्यादिधारापाते चक्षुषोर्निमीलनदर्शनादनुभवसिद्धम्। तेनान्यो-न्याध्यासाच्चिदचिद्ग्रन्थिरूपोध्यासः। एकतरस्याध्यासाङ्गीकारेन्यतरस्या-भानप्रसङ्गात्। अध्यस्तस्यैव भ्रमे भाननियमात्। इमे रङ्गरजते इति समूहा-लम्बनभ्रमवदवश्यमितरेतराध्यासः।

सर्वबाधावधिभूतचैतन्यपरिशेषेण च न शून्यवादापत्तिः। सत्यानृत-

---

हेत्वात्। अध्यासो हि प्रतीत्यनुरोधेन योग्यताबलाच्च स्वीकार्यो भवति।

सर्वत्र च पूर्वोक्तरीत्यान्योन्याध्यासोस्तीत्याह-एवं चैतन्यस्यापीति। ननु चैतन्यस्याध्यासाङ्गीकारेऽध्यस्तस्य मिथ्यात्वाच्चैतन्यस्य मिथ्यात्वे शून्य-वादप्रसङ्ग इति चेन्न। चैतन्याध्यासो हि शुक्तौ रजतस्येव न स्वरूपतः। किं तु संसर्गतः। संसर्गः संबन्धः। तथा चाहंकारादिषु चैतन्यसंबन्धस्याध्यास इति स संबन्धोऽध्यस्तो भवतु नाम मिथ्याभूतो न तु चैतन्यं कथमपि मिथ्येति बोध्यम्। नन्वात्मा प्रिय इति तत्राध्यस्तं सर्वमात्मवत्प्रियं स्यान्न तु तेषु प्रेमतारतम्यमि-त्यत आह- अध्यासव्यवधानेति। वित्तात्पुत्र इति। ननु देहाध्यासविशिष्टे चैतन्ये पुत्रस्य वित्तस्य च संसर्गतोऽध्यास इति कथं तत्र व्यवधानतारतम्यम्। न हि वित्तसंसर्गाध्यासाधिष्ठानभूतस्याहमर्थस्य पुत्रवत्त्वेनोल्लेखनियमः। तथा सति हि पुत्रवानहं वित्तवान् इत्येव प्रतीयेत न त्वहं वित्तवानिति चेत्सत्यम्। बहुवित्तव्ययेनापि पुत्रसंरक्षणदर्शनात्पुत्रवत्त्वेनोल्लेखाभावेपि अध्यस्तपुत्रसंसर्गे एवाधिष्ठाने वित्तसंसर्गाध्यासकल्पनात्। प्रायोदर्शनानुसारेण चेदम्। तेन क्षुद्राणां क्वचिद्विपरीतप्रवृत्तिदर्शनेपि न क्षतिः। तेनेति। अध्यस्तेष्वहंकारादिषु चैतन्यस्य संसर्गतोध्यासेनेत्यर्थः। यथा द्वयो रज्ज्वोर्दृढो ग्रन्थिर्भवति तथा चिदचितोरयमनादिर्दृढो ग्रन्थिरवश्यं स्वीकार्यो भवति। विपक्षे बाधकमाह-एकतरस्येति। अध्यस्तस्यैवेति। तदुक्तं संक्षेपशारीरके-अध्यस्तमेव हि परि-स्फुरति भ्रमेषु (सं० शा० १।३६) इति। यथेदं रजतमित्यत्र शुक्तावध्यस्तं रजतम्। तत्र च रजतेध्यस्तः शुक्तिगत इदमंशः। तथा चान्योन्याध्यासात्स-मूहालम्बनज्ञान इव द्वयं भासते तद्वदेव सर्वत्राध्यासे बोध्यम्।

चैतन्यपरिशेषणेति। अन्योन्याध्यासेऽपि चैतन्येऽध्यस्तेष्वहंकारादिषु

---

१ ज—प्राणमेव प्रिय। २ ग—चक्षुरादीनां मीलन। ३ इ—तेनपरस्पराध्यासादध्यासश्चि-दचिद्ग्रन्थिरूपः। एक। ४ ग—नवद्। ; ज—नमत्ययवद्

संभेदावभासत्वादध्यासस्य । तस्मात्पूर्वपूर्वाध्यासमूल एवायमुत्तरोत्तराहंकाराद्यध्यासो बीजाङ्कुरवदनादिः । अविद्याध्यासश्चैक एवानादिः ।

नन्वेवविद्याध्यासस्यानादित्वे स्मृतिरूपः परत्र पूर्वदृष्टावभासोध्यास इति वदता भाष्यकारेण स्मृतिरूपत्वेन संस्कारजन्यत्वमुक्तं विरुध्येतेति चेत् न । कार्याध्यासाभिप्रायत्वात्तस्य । परत्र परावभासोध्यास इत्येतावन्मात्रस्यैवोभयानु-

---

यश्चैतन्यस्याध्यासः स न स्वरूपतः किंतु संसर्गत इत्युक्तम् । तथा चाध्यस्तस्य चैतन्यसंबन्धस्य मिथ्यात्वाद्बाधेपि स्वरूपेणानध्यस्तस्य चैतन्यस्याबाधान्न शून्यवाद इति भावः । अत एव सत्यानृतसंभेदावभासत्वरूपमध्यासलक्षणं भाष्योक्तमुपपद्यते । चैतन्यस्य स्वरूपेणाध्यासे तु तत्राधिष्ठानभूतोहंकारादिरनृतः । तत्राध्यस्तं चैतन्यमप्यध्यस्तत्वादनृतमेवेति भाष्योक्तलक्षणासंगतिः । चैतन्यस्य संसर्गतोध्यासे तु चैतन्यं सत्यमेवेति लक्षणसंगतिः । तदाह—सत्यानृतेति । संभेदः संबन्धः । सत्यानृतयोर्यः संबन्धोथ वा सत्यस्यानृतेन सह यः संबन्धस्तस्यावभासः सत्यानृतसंभेदावभासः । तस्य भावस्तत्त्वं तस्मादित्यर्थः-तस्मादिति । प्रतीत्यनुसारेणाध्यासकल्पनादित्यर्थः । ननु पूर्वं रजतं दृष्टं चेत्तत्संस्कारवशाच्छुक्तौ रजताध्यासो भवति । तथा चाहंकारः पूर्वं क्वानुभूत इति चेन्न । कल्पान्तरे तदनुभवसत्त्वात् । यद्यपि सोनुभवोऽयथार्थ एव तथापि तस्य संस्कारजनकत्वमक्षतम् । चित्रस्थमेव केवलं सर्पं दृष्टवतोपि रज्ज्वां सर्पभ्रमसंभवात् । प्रथमतो धूमदर्शनं धूलिकदम्ब एव यस्य जातं तस्यापि धूमसंस्कारो भवत्येव । ननु कल्पान्तरीयोनुभवोऽयथार्थोपि संस्कारमुत्पादयतु नाम । किंतु सोपि भ्रम एवेति तदर्थं ततः पूर्वं कथं संस्कार इति चेत्—ततः प्राक्कल्पीयानुभवादित्यवेहि । यद्यप्येवं संस्काराध्यासयोरन्योन्याश्रयस्तथापि बीजाङ्कुरन्यायेन स परिहार्यः । अविद्याध्यासस्तु न संस्कारजन्यः । कल्पभेदेप्यविद्याभेदाभावात् । तथा च स एकोध्यासोनादिरेव स्वीकार्यो भवति ।

विरुध्येतेति । अनादेरविद्याध्यासस्य संस्कारजन्यत्वाभावात्तत्र भाष्योक्तमध्यासलक्षणं न संभवतीत्यव्याप्तिरित्याशयः । कार्याध्यासेति । अविद्याध्यासव्यतिरिक्ता अविद्याध्यासमूलका येऽहंकाराद्यध्यासास्तेषामेव भाष्यकारैः स्मृतिरूप इत्यादि लक्षणं कृतं नाध्याससामान्यस्य । सामान्यलक्षणमाह—परत्रेति । एतच्च लक्षणं कारणाध्यासशब्दितेऽविद्याध्यासे कार्याध्यासशब्दितेष्वहंकाराद्य-

---

१ छ—सत्त्रस्त एवा । २ ग—राध्यासो । ३ ग ङ च छ ज—न्वध्यास । ४ ख च छ ज झ—ध्येत् । न ५ । ग च छ ज झ—भास इ । ६ ङ—इत्येव सिद्धान्त ।

गतलक्षणत्वात् । यद्वा सत्यानृते मिथुनीकृत्येति भाष्यवचनात्सत्यमिथ्यावस्तु-संभेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणम् । तेन कारणाध्यासेऽपि न लक्षणाव्याप्तिः । कार्याध्यासस्य च प्रवाहरूपेण बीजाङ्कुरवदनादित्वाभिधानान्न कोपि दोषः ।

एवमध्यासे सिद्ध एकस्याप्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते । तथाहि । अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नस्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमीश्वर इति च कथ्यते ।

ध्यासेषु चानुगतं भवति । लक्षणान्तरमाह—यद्वेति । कारणाध्यास इति । अनादिरविद्याध्यासः कारणाध्यासः । कारणीभूतः कारणस्य वाध्यासः कारणाध्यासः । अहंकाराद्यखिलप्रपञ्चस्याविद्याध्यासः कारणं भवति । अविद्यापि तत्र कारणं भवत्येव । एवं द्विविधविग्रहेपि अविद्याध्यासस्य कारणाध्यासत्वमुपपन्नम् । एवं कार्याध्यास इत्यत्रापि । अहंकाराद्यध्यासः कार्याध्यासः । स चाविद्याध्यासमूलकत्वात्कार्यभूतोध्यासः । अहंकारादीनामविद्याकार्यत्वात्कार्यस्याध्यासश्च भवति । बीजाङ्कुरवादिति । अनुपदमेवोपपादितम् ।

अध्याससाधनफलमाह—एवमिति । अयं जीवोयमीश्वर इत्येकस्मिन्नेवात्मनि भेदव्यवस्थोक्ताध्यासमूलिकैव । तथा कदाचिदेव केनचिदेव किंचिदेव प्रमीयते न तु सर्वदा सर्वैः सर्वं ज्ञायत इति मानमेयादिप्रतिकर्मव्यवस्था चोक्ताध्यासमूलिकैव । तत्रादौ जीवेश्वरादिव्यवस्थामुपपादयति—तथा हीत्यादिना सम्यगुपपद्यते व्यवस्थेत्यन्तेन । अज्ञानोपहित इति । अयं भावः—अद्वैतमत एक एवात्मा सत्यः । न तु तदतिरिक्तं किंचिदपि । तथा च स वस्तुतो नान्तर्यामी न साक्षी नापि जगत्कारणम् । बहिर्यदि किंचिदन्यत्स्यात्तर्ह्ययं तस्यान्तर्यामी भवेत् । तथा साक्ष्यं यदि किंचिदन्यत्स्यात्तर्ह्ययं तस्य साक्षी भवेत् । तथा जगद्यदि स्यात्तर्ह्ययं तत्कारणं भवेत् । बहिःश्च साक्ष्यं जगच्चोपाधिकल्पितम् । उपाधिभूतं चानाद्यज्ञानम् । तादृशोपाधिभूताज्ञानयोगे चाज्ञानयुक्ता चित्तस्मिन्नुपाधौ पुनराभासते । यथा जपाकुसुमरक्तिमा स्फटिक आभासते तद्वत् । स चाज्ञानरूपोपाधिगतश्चिदाभास उपाध्यन्तर्गतत्वादन्तर्यामी भवति । उपाधेर्दृश्यत्वेन तत्साक्षी च भवति । तथोपाधेर्जगद्रूपेण परिणामे कारणं च भवति । उपाधियुक्तश्चिदात्मा तु न वस्तुतोन्तर्यामी साक्षी जगत्कारणं च । यद्यप्येवं तथाप्ययमात्मा स्वस्य यश्चिदाभासस्तेन सहा-

१ ग—तस्य लक्ष । २ छ—वस्त्वसंभ । ३ ग—ङ्कुरादिवद् । ४ ग—स्यात्मनो । ५ ज—ते । प्रथममाभासवादेन दर्शयति । तथाहि । ६ ङ ज—हितात्मा । ७ ग ज—पन्नः स्वचि । ८ ङ—साविविक्तोन्तर्या । ९ ग ङ च छ ज झ—णमिति ।

बुद्ध्युपहितश्च तत्तादात्म्यापन्न[1]स्वचिदाभासा[2]विवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यत इति वार्तिकका[3]रपादाः। प्रतिदेहं च बुद्धीनां[4] भिन्नत्वात्तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्वत्राभिन्नत्वात्तद्गतचिदाभासभेदाभावात्तदविविक्तसाक्षिचैतन्यस्य न क[5]दाचिदपि भेदभानमिति।

अस्मिंश्च पक्षे तत्त्वमादिपदे जहल्लक्षणैव। साभासस्योपाधे[6]र्वाच्यार्थस्य

विवेकादन्तर्याम्यादिभिश्चिदाभासशब्दैः कथ्यते। आविवेको भेदाग्रहः। उपाधियुक्तश्चिदात्मोपाधिगतश्चिदाभासश्चेत्यनयोर्भेदो न गृह्यते। तत्र बीजं त्वज्ञानरूपोपाधिगतश्चिदाभासोऽज्ञानतादात्म्यापन्नः। यथा स्फटिकगतो रक्तिमा स्फटिकतादात्म्यापन्नः स्फटिकाद्भेदेन न गृह्यते तद्वत्। उपाधिभूतमज्ञानं च चिदात्मनि तादात्म्येनाध्यस्तं शुक्तौ रजतवत्। तथा चोपाधिभूतस्याज्ञानस्य चिदात्मना सह चिदाभासेन च सह तादात्म्यमिति चिदात्मचिदाभासयोर्भेदाग्रहः सिद्धः। एवं चान्तर्याम्यादिशब्दानां वाच्योर्थश्चिदाभास एव। तत्राप्यन्तर्यामिशब्देन साक्षिशब्देन च केवलश्चिदाभास एवोच्यते। जगत्कारणेशादिशब्दैस्तूपाधिविशिष्ट उच्यत इति विशेष इत्यन्यत्। तादृशचिदाभासाविवेकाच्चिदात्मा यद्यपि तैः शब्दैः कथ्यते तथापि स तेषां शब्दानां गौणोर्थः। एवमज्ञानकार्यभूता या बुद्धिस्तादृशबुद्धिरूपोपाधियुक्तः स एव चिदात्मा बुद्धितादात्म्यापन्नचिदाभासाविवेकाज्जीवकर्तृभोक्तृप्रमातृशब्दैर्यद्यपि कथ्यते तथापि स भेदाग्रहनिबन्धनो जीवादिशब्दानां गौणोर्थः। वाच्योर्थस्तु तेषां जीवादिशब्दानां बुद्धिगतो बुद्धिविशिष्टश्चिदाभास एव। बुद्धिरहंकारः। केचित्त्वीदृश एव तेषां शब्दानां वाच्योर्थ इत्यत्र न प्रमाणम्। किं त्वज्ञानगतश्चिदाभासश्चिदात्मा चेति द्वयं मिथोऽविविक्तं समुदितमेवान्तर्याम्यादिशब्दानां वाच्योर्थः। तथा बुद्धिगतश्चिदाभासश्चिदात्मा चेति द्वयं मिथोऽविविक्तं समुदितमेव जीवादिशब्दानां वाच्योर्थ इत्याहुः। एतच्च मतान्तरं मूलेऽथ वा (पृ० ४५ प० ७) इत्यादि ग्रन्थेन वक्ष्यते। प्रतिदेहमिति। यद्यप्येक एव चिदात्मा तथापि बुद्धीनां नानात्वात्तद्गतचिदाभासानामपि नानात्वात्तादृशचिदाभासाविवेकेन गृहीतश्चिदात्मापि नानेव प्रतीयत इत्यर्थः।

अस्मिंश्च पक्ष इति। तत्त्वमसीत्यत्र तच्छब्देन पूर्वोक्तो जगत्कारणीभूतो ब्रह्मेशादिपदवाच्योऽज्ञानगतश्चिदाभासः परामृश्यते। त्वंशब्देन च बुद्धिगतश्चिदाभासो जीवपदवाच्यः परामृश्यते। तयोश्चैक्यं न संभवतीति शब्दद्वयेनापि लक्षणया चिदात्मोच्यते। तथा च लक्ष्यस्य चिदात्मनो वाच्यार्थानन्तर्ग-

१ ग ज—पन्नः स्वाचि। २ ङ—साविविक्तो जीवः। ३ च—कारः। प्रति।; छ—कारच-रणाः प्रति।; ख—काराः। प्रति। ४ च—नां भेदात्तद्गत। ५ ख ङ च छ—कदापि। ६ ख ङ च—र्वाच्यांशस्य।; ज—र्वाच्यार्थांशस्य।

हानात् । आभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात् । तदुक्तं संक्षेपशारीरके—

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहं-

शब्दोहंकारवाची भवति तु जहती लक्षणा तत्र पक्षे ( सं० शा० १।१६९ ) इति ।

तत्वाद्वाच्यार्थस्य च सर्वथा त्यागाज्जहल्लक्षणैव गङ्गायां घोष इतिवत् । ननु चिदाभासो हि चित्सादृश्यान्न जडः किं तु चेतनः । चेतनश्च सर्वत्रैक एवेति किमर्थं वाच्यार्थान्तर्गतस्य चिदाभासस्य त्यागः । वाच्यार्थान्तर्गतस्योपाध्यंशमात्रस्य त्यागे तत्त्वमर्थयोरैक्यं संभवतीति नेयं जहल्लक्षणा । किं तु वाच्यार्थैकदेशयोरुपाधिचिदाभासयोरेकस्य त्यागादपरस्य चात्यागाज्जहदजहल्लक्षणा स्यात् । यथा सोयं देवदत्त इत्यत्र तत्पदवाच्यैकदेशस्य तद्देशस्थत्वस्य तत्कालस्थत्वस्य च त्यागः । अयंपद च वाच्यैकदेशस्यैतद्देशस्थत्वस्यैतत्कालस्थत्वस्य च त्यागः । वाच्यैकदेशस्य शरीराद्यंशस्य तूभयत्रापि न त्याग इति जहदजहल्लक्षणा भवति तद्वदिति चेत्तत्राह–आभासस्यापीति । चिदाभासो हि यद्यपि न जडस्तथापि चेतनोपि न । चित आभासो हि स न तु चिदेव । अत एव तस्योपाधितन्त्रत्वमनुभूयते । तथा च स जडाजडविलक्षण एवेति तत्त्वमसीति वाक्यप्रतिपाद्यस्यैक्यस्योपपत्तये वाच्यार्थैकदेशभूतमुपाध्यंशमिव तदेकदेशभूत चिदाभासांशमपि त्यक्त्वा वाच्यार्थानन्तर्गतश्चिदात्मा लक्षणीय इति जहल्लक्षणैव। अनिर्वचनीयत्वात् । वार्तिकमते तस्य मिथ्यास्वरूपत्वस्वीकारात् । साभासाज्ञानेति । जीवेशयोरैक्यबोधकेहं ब्रह्मास्मीति वाक्ये यदि ब्रह्मशब्दः साभासाज्ञानवाची भवति तथा तत्रत्योहंशब्दोपि साभासाहंकारवाची भवति तदा तत्र जहल्लक्षणा । अयमाशयः–वस्तुतत्त्वस्य शुद्धस्य चिदात्मनो वाच्यवाचकसर्वव्यवहारातीतत्वात्साभासाज्ञानादेश्च व्यवहार्यत्वात्तत्रैव शब्दवायोगोपपत्तेः साभासाज्ञानस्य साभासाहंकारस्य च शब्दवाच्यत्वम् । तदुभयाभिन्नत्वेनानुगततया तत्संबन्धिनि चिदात्मनि ब्रह्मशब्दोहंशब्दश्च जहल्लक्षणया वर्तत इति । यदि भवतीति यदिशब्देनारुचिः सूचिता । तद्बीजं तु शुद्धस्य चिदात्मनः स्वरूपेणाव्यवहार्यत्वेपि अज्ञानाहंकारादिद्वारा व्यवहार्यत्वं संभवति । तथा च केवलस्य चिदात्मनो ब्रह्मादिशब्दवाच्यत्वासंभवेप्युपाधितद्गतचिदाभासविशिष्टस्य चिदात्मनः शब्दवाच्यत्वान्न जहल्लक्षणा । किं तु वाच्यैकदेशयोरुपाध्यंशचिदाभासांशयोस्त्यागाद्वाच्यैकदेशस्य चिदंशस्यात्यागाज्जहदजहल्लक्षणेयमिति । एतच्चानुपदमेव मूलेऽथ वेत्यादिना स्फुटीभविष्यति ।

---

१ ग–स्तदाहं ।

न चाभासस्यैव बद्धत्वात्केवलचैतन्यस्य च मुक्तत्वाद्बन्धमोक्षयोर्वैयधिकरण्यं स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम्। केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात्। तदुक्तं वार्तिककारपादैः—

अयमेव हि नोनर्थो यत्संसार्यात्मदर्शनम् ( वा० )

इति। तेन शुद्धचैतन्यस्याभास एव बन्धस्तन्निवृत्तिश्च मोक्ष इति न किंचिदसमञ्जसम्।

अथ वा चिदाभासाविविक्तचैतन्यमपि तत्त्वमादिपदवाच्यम्। तेन वाच्यैकदेशस्यात्यागादस्मिन्पक्षे जहदजहल्लक्षणैवेति न कोपि दोषः। अयमेव च पक्ष आभासवाद इति गीयते।

---

न चाभासस्यैवेति। कर्तृत्वादिसांसारिकधर्मवान्बद्धः। स च चिदाभासो जडाजडविलक्षणोऽनिर्वचनीयः। मुक्तस्तु तत्त्वज्ञानाभिव्यक्तपूर्णानन्दस्वरूपः। स च चिन्मात्रस्वरूपो न तु चिदाभासः। तथा च यो बद्धः स न मुक्तो भवति किं त्वन्य एव मुक्त इति वैयधिकरण्यं दोषः। किं च यो बद्धश्चिदाभासः स तत्त्वज्ञानेनोपाधिनाशान्नष्ट एव भवति। तथा च स्वनाशार्थं कथं तस्य प्रवृत्तिः स्यादित्याशयः। केवलेति। न चिदाभासो बद्ध इत्युच्यते। किं तु चिदात्मैव चिदाभासद्वारा बद्ध इति। तथा च न बन्धमोक्षयोर्वैयधिकरण्यम्। नापि स्वनाशार्थं प्रवृत्तेरनुपपत्तिः। चिदात्मनो हि वास्तवं शुद्धं मुख्यं स्वरूपम्। तस्यैव च कल्पितं गौणं चिदाभासरूपं द्वितीयं स्वरूपं जीवशब्दवाच्यम्। तथा च मुख्यस्वरूपेणैव सदावस्थितये स्वकीयस्यापि गौणस्वरूपस्य नाशार्थं प्रवृत्तिर्न दोषाय। गौणस्वरूपनाशार्था प्रवृत्तिश्चेयं गौणस्वरूपेणैव संपाद्यत इत्यन्यत्। कण्टकेनैव हि कण्टकः शोधनीयो भवति। अयमेवेति। स्वस्य गौणरूपेण दर्शनमेव संसार्यात्मदर्शनम्। तादृशदर्शनस्यानर्थत्वोक्त्या तादृशदर्शनमूलभूतं यदज्ञानं तस्य चिदात्मनि संबन्ध एव बन्धस्तद्वियोगो मोक्ष इति सिद्धम्।

एवमाभास एव तत्त्वंपदवाच्य इति मतं समर्थ्याभासातिरिक्तं चैतन्यमपि तत्त्वंपदवाच्यमिति मतं प्रदर्शयति—अथ वेति। अनुपदमेवैतदुपपादितम्। आभासवाद इति। अयं भावः। जपाकुसुमसंनिहितस्फटिके दृश्यमानो रक्तिमा प्रायो रक्तिमाभास इत्युच्यते। दर्पणे दृश्यमानं मुखं प्रायो मुखप्रतिबिम्बमित्युच्यते। क्वचित्तु स्फटिके रक्तिमा प्रतिबिम्बते दर्पणे मुखमाभासत इत्यपि प्रयुज्यत इत्यन्यत्। तत्राभासग्राहकोपाधिः स्वसमीपवस्तु-

---

१ ख—न्यस्यैव मुक्त। २ ग च छ ज—स्य मुक्त। ३ ग ङ च छ ज ख—वाभासा। ४ ग—त्वमासि। ५ ख ङ च छ ज ख—शस्य त्यागात् अस्मि। ६ ख ङ च छ ज ख—स्मिन्नपि पक्षे।

अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवं[1] इति विवरणकाराः[2] । अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । अज्ञानानुपहितं[3] [4] तु बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककाराः ।

गतं गुणमेव केवलं स्वास्मिन्प्रदर्शयति । प्रतिबिम्बग्राहकोपाधिस्तु स्वाभिमुखं गुणविशिष्टं यद्वस्तु तदेवान्यादिव स्वान्तःस्थतया प्रदर्शयति । चैतन्यं तु ज्ञानमेव न तु तदन्यस्तस्याश्रयः कश्चित् । तथा च बुद्ध्युपाधौ दर्पण इव स्फटिक इव वा प्रतीयमाने चैतन्ये न कश्चित्ताद्दशो विशेषः । किंतु यथा प्रतिबिम्बस्थले वस्तुतो विचारे क्रियमाण आदर्शस्यान्तर्न किमपि मुखादिकं वर्तते । किंतु दर्पणप्रतिहतपरावृत्तैश्चाक्षुषैः किरणैर्बिम्बभूतमेव मुखादिकमन्यादिव दृश्यते । तस्य च बिम्बरूपेण सत्यत्वं प्रतिबिम्बरूपेणासत्यत्वम् । तथा च बिम्बभूता स्वरूपतः सत्या चिदेव बुद्ध्युपाधिसंनिधानादसत्यप्रतिबिम्बरूपेण दृश्यमाना जीवशब्दवाच्येति प्रतिबिम्बवादिनां मतम् । अस्मिन्मते तत्त्वमसीत्यत्र जहल्लक्षणा नैव संभवति । आभासवादे तु यथा स्फटिके प्रतिहतैः परावृत्तैश्च चाक्षुषैः किरणैर्जपाकुसुमगतो रक्तिमा न प्रदर्श्यते तत्र किरणानां परावृत्त्यभावात् । किंतु जपाकुसुमगतरक्तिमसदृशोन्य एव रक्तिमा स्फटिके दृश्यते । स च स्वरूपेणासत्यः । तथा बुद्ध्युपाधिगतः स्वरूपेणासत्यो यश्चिदाभासः स एव जीवशब्दवाच्यः । अस्मिन्मते तत्त्वमसीत्यत्र जहल्लक्षणा संभवति । बुद्ध्युपाधिगताश्चिदाभासस्तस्माद्भिन्नापि बिम्बभूता चिच्चेत्येतत्समुदितं जीवशब्दवाच्यं चेज्जहदजहल्लक्षणापि स्यादिति चेवस्तु ।

अथ प्रतिबिम्बवादं प्रदर्शयति–अज्ञानोपहितमिति । अज्ञानानुपहितं तु शुद्धमेव । ईश्वरस्य बिम्बचैतन्यरूपत्वेऽपि जीवस्य प्रतिबिम्बरूपत्वादेतद्विवरणकारमतं प्रतिबिम्बवाद इत्युच्यते । अन्तःकरणेति । अन्तःकरणं च तत्संस्कारश्चेत्येतदन्यतरावच्छिन्नं यदज्ञानं तत्प्रतिबिम्बितं चैतन्यं जीवः । तत्र सृष्टावज्ञानमन्तःकरणावच्छिन्नं प्रलये तत्संस्कारावच्छिन्नमिति विवेकः । अन्तःकरणानां तत्संस्काराणां चानेकत्वात्तादृशोपाधिभेदेनैकस्याप्यज्ञानस्य घटाकाशादिवन्नानात्वात्तत्प्रतिबिम्बितस्य चैतन्यस्यापि नानात्वमित्येकाविद्यापक्षेपि नानाजीववादः समर्थितः । शुद्धमिति । जीवेशोभयानुस्यूतं साक्षिरूपम् । एतत्संक्षेपशारीरककारमते जीवेशयोरुभयोरपि प्रतिबिम्बरूपत्वात्स्पष्ट एवायं प्रतिबिम्बवादः । समष्ट्यज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । व्यष्ट्यज्ञानकार्यभूतास्वनेकासु बुद्धिषु प्रतिबिम्बितचैतन्यरूपा जीवाः ।

---

१ ज झ– जीवः । अज्ञानानुपहितं चैतन्यं शुद्धमिति विवरण । २ ख ङ–रणाचार्याः । ३ ग च छ ज झ–अज्ञानोपहितं बिम्ब । ४ ङ च छ– तं बिम्ब ।

अनयोश्च पक्षयोर्बुद्धिभेदाज्जीवनानात्वम् । प्रतिबिम्बस्य च पारमार्थिकत्वाज्जहदजहल्लक्षणैव तत्त्वमादिपदेषु । इममेव च[१] प्रतिबिम्बवादमाचक्षते ।

अज्ञानविषयीभूतं[२] चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं[३] च जीव इति वाचस्पतिमिश्राः । अस्मिंश्च पक्षे अज्ञाननानात्वाज्जीवनानात्वम् । प्रतिजीवं च प्रपञ्चभेदः । जीवस्यैवा[४]ज्ञानोपहिततया जगदुपादान[५]त्वात् । प्रत्यभिज्ञा[६] चाति[७]सादृश्यात् । ईश्वरस्य च सप्रपञ्च[८]जीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति । अयमेव चावच्छेदवादः ।

---

बुद्धिभेदादिति । बुद्धिरन्तःकरणम् । आद्ये पक्षे बुद्धिभेदात्तत्संस्कारभेदः । तद्भेदाच्च तदवच्छिन्नाज्ञानभेदः । तद्भेदाच्च तत्प्रतिबिम्बितचैतन्यभेद इति जीवनानात्वम् । अन्त्ये तु बुद्धिभेदात्तत्प्रतिबिम्बितचैतन्यभेद इति जीवनानात्वम् । पारमार्थिकत्वादिति । प्रतिबिम्बं च न बिम्बादन्यत्किंचिदित्युपक्रमेवोक्तमिति बिम्बरूपेण पारमार्थिकमेव तत् ।

अथ वाचस्पतिमिश्राभिमतमवच्छेदवादं प्रदर्शयति—अज्ञानविषयीभूतमिति । भावरूपाज्ञानसंबन्धात्स्वेनैव स्वस्य रूपं न ज्ञायते । तत्र यन्न ज्ञायते तेन रूपेण तस्यैवेश्वरत्वम् । यच्च न जानाति तेन रूपेण तस्यैव जीवत्वम् । अज्ञानस्य चानादित्वादेतादृश्यवस्थितिरनादिरेव । अज्ञानं च नानाविधम् । तदपेक्षयान्या माया तु नास्त्येव । अज्ञानान्येवेश्वरोपाधिभूतानि । तानि च स्वविषयतयेश्वरस्वरूपावच्छेदकानि । आश्रयतया च जीवस्वरूपावच्छेदकानि । तथा च यथालोके तुलाविद्यामूलकरजताभासस्थलेऽविद्याविषयीभूता शुक्तिर्न रजतमुत्पादयितुं प्रभवति किंत्वविद्या यमाश्रित्य वृत्याति स जीव एव तादृशाविद्यासहायेन रजतं प्रकल्पयति । तथा चेतनोपीश्वरो मूलाज्ञानविषयत्वान्न जगदुत्पादयितुं प्रभवति । किं तु जीवा एव स्वस्वाविद्यासहायेन जगत्प्रकल्पयन्ति । यच्चान्यैर्व्यवहारसिद्ध्यर्थं कूटस्थब्रह्मजीवेशभेदेन चिच्चातुर्विध्यं प्रकल्पितं यच्चापरैर्व्यवहारसिद्ध्यर्थं जीवेशशुद्धभेदेन चित्त्रैविध्यं प्रकल्पितं तदस्मिन्मते न प्रकल्प्यते । किं तु जीवेशभेदेन द्वैविध्यमेव चितः । ईशः शुद्धश्चैक एव निरुपाधिकः । जगदुत्पादनार्थं हि शुद्धचिदपेक्षयान्यो मायोपाधिक ईशः कल्प्यते । तच्च जगदुत्पादनमस्मिन्मते जीवकृतमेव । तथा च शुद्धा चिदेवेशपदेनोच्यते । सा च नानाविधा जीवास्तदविद्याश्च नानाविधास्तत्कार्यभूता नानाविधाः प्रपञ्चाश्चेत्येषां सर्वेषामधिष्ठानभूतेत्येतावतेशस्य जगत्कारणत्वोक्तिर्योजनीया । नानाविधानां जीवानां प्रत्येकं प्रपञ्चकल्पकत्वा-

---

१ च ज झ—च बिम्बप्रतिबिम्ब । २ ग—यीकृतं । ३ ज—भूतं चैतन्यं च जीव । ४ ग छ च छ ज झ—स्यैव स्वाज्ञानो । ५ ज—नत्वम् । प्रत्य । ६ ग—चापि सा । ७ च छ ज झ—च साद् । ८ झ—पपञ्चाविद्याजीवाधि ।

अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अज्ञानप्रतिबिम्बितं चैतन्यं जीव

त्पत्तिर्जीवं प्रपञ्चो भिन्नः । चैत्रीयाज्ञानकल्पितः प्रपञ्चो न मैत्रस्य प्रत्यक्षो भवति नहि चैत्रस्येदं रजतमित्यवभासे सति तद्रजतं तदितरेषां सर्वेषां प्रत्यक्षं भवति । स्वाज्ञानकल्पित एव स्वस्य प्रत्यक्षो भवति । यत्र चैकमेव घटं बहवश्चैत्रादयः पश्यन्तीत्यनुभूयते तत्रापि वस्तुतो नैको घटः किं तु बहव एव । एकैको द्रष्टा एकैकमेव घटं पश्यति । य एव घटश्चैत्रेण दृष्टः स एव मैत्रेण दृष्ट इति प्रत्यभिज्ञा तु साजात्येनोपपादनीया । तदेवौषधमित्यादिप्रत्यभिज्ञावत् । केचित्तु यत्र दशभिरेको घटो दृष्टस्तत्र तेषां दशानां द्रष्टॄणां दशभिरज्ञानैर्मिलित्वा स घट उत्पादितः । तथा चोक्ता प्रत्यभिज्ञाऽक्लेशेनोपपद्यत इत्याहुः ।

एवं वार्तिककारोक्त आभासवादः संक्षेपशारीरककारोक्तः प्रतिबिम्बवादो वाचस्पतिमिश्रोक्तोऽवच्छेदवादश्च प्रदर्शितः । एषु च पक्षेषु कः पक्षो युक्ततरः । तथा माया चाविद्या चैकैवेति मायाविद्ययोरभेदवादो माया चाविद्या च भिन्नैवेति मायाविद्ययोर्भेदवादः । अनयोः को युक्ततरः । तथैकैवाविद्या सैव च जीवत्वप्रापकोपाधिरिति पक्ष एकजीववादः । एकैवाविद्याऽन्तःकरणतत्संस्कारावच्छिन्ना जीवोपाधिरिति पक्षे नानैवाविद्या जीवोपाधिभूता इति पक्षे च नानाजीववादः । अनयोश्च कः पक्षो युक्ततरः । तथा माया आश्रयत्वेनेशोपाधिरिति पक्षे ईशसृष्टं जगत् । मायाविषयत्वेनेशोपाधिरिति पक्षे जीवसृष्टं जगत् । अनयोश्च मध्ये किं युक्ततरम् । तथा जीवकर्तृकं जगदिति पक्षे दृष्टिसृष्टिवादः । ईश्वराश्रितं मायानिर्मितं जगत् इति पक्षे साधारणसृष्टिवादः । दृष्ट्यनुरोधेन सृष्टिरिति यो वादः स दृष्टिसृष्टिवादः । यथा स्वप्ने येन यावद् दृष्टं तावदेव तत्रोत्पन्नं नान्यत् । प्रमाणाभावात् । यथा वा नैयायिकनये घटद्वयगतं द्वित्वं यदा ज्ञायते तदैव द्रष्टृगतापेक्षाबुद्ध्या तत्र द्वित्वमुत्पद्यते न तु ततः पूर्वमेकघटसंनिहितघटान्तरस्य बहुकालमवस्थानेऽपि । यथा च जीवाश्रितया तूलाविद्यया निर्मितं प्रातिभासिकं रजतं द्रष्टुर्यावद्दर्शनं सृष्टं भवति न तु ततः पूर्वमनन्तरं वा तद्वत् । व्यावहारिकं हि वस्तु ज्ञातमज्ञातं वा कार्यकारि भवति । यथाग्निर्ज्ञातोऽज्ञातो वा दाहं जनयत्येव । प्रातिभासिकं तु न कदाप्यज्ञातं कार्यकारि भवति । अज्ञातस्य ह्यस्तित्वमेव नास्ति तत्कथं कार्यकारि भवेत् । तथा च ज्ञानकाल एवास्तित्वमिति दृष्टिसृष्टिवादबीजम् । दृष्टमदृष्टं वा सर्वमेव स्वस्वकारणसामग्रीत उत्पद्यते न तु दर्शनकाल एव । तस्य दर्शनं च यदा कदापि भवत्विति यो वादः स साधारणसृष्टिवादः । अनयोश्च कोऽत्र युक्ततरः । एवं बहुविधाः संशयाः प्रादुर्भवन्ति ।

अत्र युक्ततरं सिद्धान्तं प्रदर्शयति—अज्ञानोपहितमिति । अयं भावः । यथाकाशं चतुर्विधम् । मूलभूतं निरुपाधिकं महाकाशमेकम् । जलाद्युपाधिसंनिहितं सोपाधिकं द्वितीयम् । जलान्तर्गतं जलाद्यवच्छिन्नं तृतीयम् । जले प्रतिबिम्बितं चतुर्थम् । तथा चैतन्यं चतुर्विधम् । मूलभूतं निरुपाधिकं शुद्ध-

१ ग—र्तिबिम्बचै । २ ङ—तं जीव ।

[1]इति वा अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः अज्ञानोपहितं च जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः । इममेव च [2]दृष्टिसृष्टिवादमाचक्षते । अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशा[3]ज्जगदुपादानं निमित्तं च । दृश्यं च सर्वं

---

चैतन्यमेकम् । अविद्योपाधियुक्तं सोपाधिकं द्वितीयम् । अविद्यावच्छिन्नमविद्यान्तर्गतं तृतीयम् । अविद्याप्रतिबिम्बितं चतुर्थम् । अत्र प्रतिबिम्बवादे चोक्तं चतुर्थं जीवस्वरूपं द्वितीयं चेशस्वरूपम् । तृतीयमीशस्वरूपमिति तु कल्पयितुं न शक्यते । ईशो हि जीवानां नियन्ता । प्रतिबिम्बं हि बिम्बतन्त्रमिति उपाधिबहिर्भूतं बिम्बचैतन्यमेव तस्य नियामकं न तूपाध्यन्तर्गतं चैतन्यम् । अवच्छेदवादे चतुष्टये तृतीयं जीवस्वरूपम् । प्रथमं चेशस्वरूपम् । अत्र द्वितीयमीशस्वरूपमिति कल्पयितुं न शक्यते । तस्योपाधिबहिर्भूतत्वेनोपाध्यन्तर्गतचैतन्यं प्रत्यनियामकत्वात् । उपाध्यन्तर्गतचैतन्यस्वरूपजीवस्य नियामकं तु सर्वव्यापकं शुद्धं चैतन्यम् । एवं प्रतिबिम्बवादेनावच्छेदवादेन चेति प्रकारद्वयेन जीवेशयोः स्वरूपमत्र सिद्धान्त इति निर्दिष्टम् । आभासवादस्य तु नात्रोल्लेखः । तद्बीजं त्वाभासवाद उपाधिविशिष्टश्चिदाभासो हि जीवः । तत्र चोपाध्यंश आभासांशश्चेति द्वयमपि मिथ्येति मोक्षे जीवस्वरूपविनाश इति मोक्षे प्रवृत्तिर्न स्यात् । शुद्धं चैतन्यं मोक्षभागित्वेनावतिष्ठत इति चेत्किं तेन । तस्य जीवः शब्दवाच्यकोटावप्रवेशात् । यदुक्तमयमेव हि नोनर्थो यत्संसार्यात्मदर्शनमिति । तत्र तादृशं संसार्यात्मदर्शनं किं चित उत तदाभासस्य । आद्ये न बद्धो जीवः । संसार्यात्मदर्शनरूपबन्धस्य चिदाभासरूपे जीवेऽसत्त्वात् । अन्त्ये न स मुक्त इति बन्धमोक्षयोर्वैयधिकरण्यं तदवस्थमेव स्यादिति । माया चाविद्या चैकैव लाघवात् । व्यवहारसिद्ध्यर्थं हि सर्वेयं कल्पना । व्यवहारश्च मायाऽविद्ययोरभेदेऽप्युपपद्यते । मायाऽविद्ययोरभेदे सिद्धेऽर्थादेवाविद्याया न नानात्वम् । सा चैकाविद्या स्वरूपेणैव जीवत्वप्रापकोपाधिरिति जीवोऽप्येक एव । जीवभेदप्रत्ययस्तु देहभेदमूलको भ्रम एव । सुखदुःखाद्युपलब्धिभेदस्तु अन्तःकरणभेदादप्युपपद्यते । कर्तृत्वभोक्तृत्वप्रापकोपाधित्वं त्वन्तःकरणानाम् । अत एकजीववादे सर्वशरीरेषु क्रियासाम्यं भोगसाम्यं च स्यादिति नापादनीयम् । अथ यदि मायाऽविद्या चैका सा च जीवत्वप्रापकोपाधिस्तर्हीशस्यापीशत्वप्रापकोपाधिः सैव वाच्या । अन्यस्य कस्याप्यभावात् । तथा चोपाध्यैक्ये कथं जीवेशयोर्भेद इति चेत्—उच्यते । यद्यप्येकैवोभयोपाधिस्तथापि सा नैकेनैव प्रकारेणोभयोरुपाधिः । किं तु विषयत्वेनेशोपाधिराश्रयत्वेन च जीवोपाधिः । ईश्वरः केवलमविद्याया विषय एव न त्वाश्रयः । किं तु तदाश्रयो जीव एव । अविद्याश्रयत्वाभावाच्च नेशो जगत्सृजति किं तु जीव

१ ज—इति अज्ञाना । २ झ—दृष्टसृष्टि । ३ छ—जगत उपा ।

प्रातीतिकम् । देहभेदाच्च जीवभेदभ्रान्तिः । एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः । शुकादीनां मोक्षश्रवणं चार्थवादः । महावाक्ये च तत्पदमनन्तसत्यादिपदवदज्ञानानुपहितचैतन्यस्य

---

एव स्वाश्रिताविद्यया जगत्प्रकल्पयति स्वाप्निकहस्त्यश्वादिवत् । तथा चार्थादेव दृष्टिसृष्टिवादः फलितो भवतीति सर्वे दृश्याः पदार्थाः प्रातिभासिका एवेति सिद्धान्तरहस्यम् । एकस्यैव चेति । एकजीववादे च कल्पद्वयम्—किमयमेको जीवः सर्वाणि शरीराण्यविशेषेणाधितिष्ठति अथवा यत्किंचिदेकमेव शरीरमधितिष्ठति । तत्राद्यकल्पो न युक्तः । शरीरान्तरस्थसुखादेः शरीरान्तरेनुसंधानप्रसङ्गात् । शरीरभेदो नियामक इति कल्प्यते चेत्कायव्यूहे शरीरान्तरस्थसुखादेः शरीरान्तरेनुसंधानाभावप्रसङ्गः । अतश्चान्त्यकल्प एव युक्तः । यद्यप्यस्मिन्कल्पमुकमेव शरीरं जीवेनाधिष्ठितमिति विशेषतो निश्चेतुं न शक्यते तथापि किंचिदेकमधिष्ठितमित्येवास्माभिरुच्यते । तत्किमपि भवान्गृह्णातु नास्माकं तत्र लेशतोप्याग्रहः । केवलं यदधितिष्ठति तत्र स एको जीवो मुख्यः । इतरे सर्वे मिथ्याभूता जीवाभासास्तेन कल्पिता एव सर्वे देवदत्तादयः । अतस्तदितरे ते सर्वे मिथ्याभूता एव । यथा नानाजीववादेपि यज्ञदत्तेन स्वप्ने कल्पिता देवदत्तादयो मिथ्याभूता एव भवन्ति तद्वत् । गुरुशिष्यभावः शास्त्राद्युपबृंहणं श्रवणमननादिकं च सर्वं तेनैकशरीरस्थेन कल्पितम् । तथा च यदि कदाचिदात्मसाक्षात्कारान्मोक्षः स्याच्चेत्तस्यैवैकस्य । न त्वन्यस्य कस्यापि । अन्यस्य जीवस्यैवाभावात् । तथा च शुकवामदेवादयोनेके मुक्ता इति यदुच्यते तत्प्ररोचनमेव केवलं न तु वस्तुस्थितिः । न च य एको मुख्यो जीवः स एव कदाचिच्छुकः स्यादिति शुको मुक्त इति व्यवहारः समीचीन एवेति वाच्यम् । तावतापि शुकवामदेवादीनामनेकेषां मुक्त्यसंभवात् । वस्तुतोऽनेकेषां जीवानामभावात् । किं च योसावेको मुख्यो जीवः स यदि शुकः स्यात्तर्हि तस्य मोक्षे तत्कल्पितस्य सर्वस्यैवास्य प्रपञ्चस्य विलयः स्यात् । यथा स्वप्ने कल्पितानां गजाश्वादीनां सर्वेषामेव स्वप्नद्रष्टुर्जागृतौ विलयो भवति तद्वत् । ततश्च नेदानीं जगद् दृश्येत । अतः स मुख्य एको जीवः शुको नेत्यवश्यं कल्पनीयमिति शुको मुक्त इति व्यवहारः केवलमर्थवाद एव । एकश्चायं मुख्यो जीवो यच्छरीरमधितिष्ठत्तच्छरीरं तदितराणि सर्वाणि च शरीराणि तेषु च विद्यमानान्यन्तःकरणादीनि सर्वाणि च व्यावहारिकसत्यान्येव । जीवाः परमितरेषु शरीरेषु प्रातिभासिका मिथ्याभूता इति बोध्यम् । ननु तत्त्वमसीति महावाक्यं तत्पदं पूर्वप्रकृतस्य जगत्कारणस्य परामर्शकम् । तच्च जगत्कारणं जीवश्चेत्तस्य त्वंपदवाच्ये संबोध्ये जीवेऽभेदान्वयसंभव इति नेदं ब्रह्मप्रतिपादकं महावाक्यं स्यादित्यत आह—महावाक्ये चेति । उद्दालको हि श्वेतकेतुं प्रत्या-

---

१ क—प्रातिभासिकं । २ ग—नां च मोक्षश्रवणमर्थं । ३ ङ—वदुपहि ।

लक्षणयोपस्थापकमित्याद्या अवान्तरभेदाः स्वयमूहनीयाः।

ननु वस्तुनि विकल्पासंभवात्कथं परस्परविरुद्धमतप्रामाण्यम्। तस्मात्किमत्र हेयं किमुपादेयमिति चेत्-क एवमाह वस्तुनि विकल्पो न संभवतीति। स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादिविकल्पस्य वस्तुन्यपि दर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिमात्रप्रभवा। इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्थेति चेत्- नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिमात्र-

---

त्मतत्त्वमुपदेष्टुं प्रवृत्तः। तथा च प्रकरणानुरोधेन ब्रह्मपरेयं श्रुतिरिति निश्चिते तात्पर्यानुपपत्त्या तत्पदस्य निरुपाधिके चैतन्ये लक्षणा स्वीक्रियते। त्वंपदस्यापि तत्रैव लक्षणा स्वीक्रियत इति श्रुतितात्पर्योपपत्तिः।

ननु वस्तुनीति। सिद्धस्य वस्तुनो हि किंचिदेकविधमेव स्वरूपं स्यान्न तु तत्र तद्वस्त्वीदृशमपि स्यात्तादृशमपि स्यादित्येवमनेकप्रकारकं तद्वक्तुं शक्यते। उच्यते चेत्तत्र य एकः प्रकारो विद्यते तदुक्तेः प्रामाण्यमन्यासामप्रामाण्यमेव। तथा चात्र परस्परविरुद्धजीवस्वरूपप्रतिपादकानां वार्तिककारसंक्षेपशारीरककारवाचस्पतिमिश्राणां मध्ये एकस्यैव कस्यचिद्यथार्थववतृत्वमित्यतस्तदुक्तमुपादेयमितरन्न हेयमेव स्यादित्याशयः। शास्त्रीयेति। शास्त्रं हि तत्त्वावेदकम्। तत्रत्या चेयं जीवेश्वरस्वरूपविभागव्यवस्था मुमुक्षुभिर्जिज्ञासुभिः प्रमाणत्वेन ग्राह्या भवतीत्याशयः। सोपहासं दूषयति-नूनमिति। शास्त्रे ये ये विषयाः प्रतिपादितास्तेषु मुख्यं प्रमेयमित्यमुकं प्रतिपादितं तदङ्गतया तत्साक्षात्कारोपयोगित्वेन ज्ञेयमित्यमुकं प्रतिपादितमिति निर्धारणाभावः शङ्काकृत उपहासे बीजम्। शास्त्रे चाद्वितीयात्मतत्त्वं मोक्षसाधनतया जिज्ञापयिषितमिति तदेव मुख्यं प्रमेयम्। सा चात्मतत्त्वप्रमितिर्येन येन मार्गेण सुलभा स्यात्तादृशा अनेके मार्गा निबन्धकारैः स्वस्वबुद्ध्यनुसारेण प्रकल्प्य प्रदर्शिताः। कल्पितं च वस्तु कदाचित्सत्यमपि भवतीत्यतो निबन्धकारप्रदर्शितष्वेतेषु मार्गेषु कदाचित्कश्चिदेको मार्गः सत्योऽपि स्यात्। मिथो विरुद्धत्वान्नानेकेषां मार्गाणां सत्यत्वं संभावनागन्धमर्हति। कदाचित्सर्वेऽप्येते प्रदर्शिता मार्गा असत्याः स्युरिति त्वस्ति संभवः। कथमप्यस्तु मुख्यप्रमेयावगत्युपकारकत्वं कस्यापि मार्गस्य लेशतोऽपि न हीयते। अतो नाप्रामाण्यशङ्कावकाशं लभते। यथा श्रुतावपि किंचिदर्थवादवाक्यं सर्वथाऽविद्यमानमर्थं प्रतिपादयदपि विधिप्ररोचनरूपं मुख्यं कार्यं साध-

१ ख ङ च छ ज झ-त्या यद्वा। २ च छ ज-भेदा ऊह। ३ च ज-मवहेयं।; छ-किं हेयं।; झ-किमु हेयं। ४ छ ज झ-चेन्न। क एव। ५ छ-नात्। नन्वतात्त्वि। ६ झ-षमात्र। ७ ग-द्धिप्रभ। ८ झ-श्वरादिक।; ९ च-स्तु बुद्धि। १० ग-द्धिप्रभ।

प्रभवा अपि शास्त्रेणानूद्यन्ते । तत्त्वज्ञानोपयोगित्वात् । फलवत्संनिधावफलं तदङ्गमिति न्यायात् । भ्रमसिद्धस्यापि श्रुत्यानुवादसंभवात् । एतेन द्वैतज्ञानेनाद्वैतज्ञानस्य बाधो निरस्तः । घटादि[1]द्वैत[2]निश्चयस्याप्य[3]द्वैत[4]सन्मात्रांशे अज्ञाते प्रामाण्या[5]भ्युपगमाच्च । ज्ञानाज्ञानयोः समानाश्रयविषयत्वनियमात् । जडे च प्रमाणप्रयोजनाभावेनाज्ञाना[6]नङ्गीकारा[7]त् । सर्वप्रमाणानां चाज्ञातज्ञापकत्वेन प्रामाण्यात् । तदवच्छिन्नचैतन्याज्ञानादेव तत्राप्यज्ञा[8]तव्यवहारोपपत्ते[9]ः । प्रामाण्यस्य चाज्ञातज्ञापकरूपत्वात् । अन्यथा स्मृतेरपि तदापत्तिरिति[10] ।

यत्येवेत्यतावता तस्य नाप्रामाण्यं तद्वत् । किं च कल्पितं प्रतिबिम्बादिजीवस्वरूपं सत्यमेवेति यद्यपि न निश्चयस्तथापि तदसत्यमेवेत्यपि न निश्चय इति कथं तदुक्तेरप्रामाण्यमाशङ्क्यते । अथासत्या अप्येते मार्गा मुख्यमुद्दिष्टं साधयन्तु नाम । परं तु रूपं रूपं प्रतिरूपो बभूव इत्यादिश्रुतिषु कथं तदुक्तिरिति चेत्तत्राह-भ्रमसिद्धस्यापीति । यथा स्वाप्नप्रपञ्चोऽसत्योपि श्रुत्यानूद्यते तद्वत् । एतेनेति । जीवेश्वरविभागद्वैतप्रपञ्चप्रतीतिमूलभूताज्ञानसाधनेनोक्तरीत्याऽद्वितीयात्मतत्त्वज्ञानस्य परमपुरुषार्थसाधनत्वेन चेत्यर्थः । अद्वितीयात्मतत्त्वज्ञानस्य हि फलवत्त्वादज्ञातविषयकत्वाच्च सर्वतो बलवत्त्वमिति तदेव प्रमाणं न तु द्वैतज्ञानं प्रमाणम् । तस्याध्यासमूलकत्वेन दुर्बलत्वात् । घटादिद्वैतज्ञानेनाद्वैतज्ञानस्य बाधाभावे हेत्वन्तरमाह-घटादीति । विरोधे हि बलवता दुर्बलस्य बाधो बाधितस्य चाप्रामाण्यं स्यात् । अत्र तु विरोध एव नास्ति । घटोस्तीत्यत्र घटांशः सदंशश्चावभासते । तत्र सदंशेन तु नाद्वितीयात्मतत्त्वज्ञानस्य विरोधः । स्वस्य स्वेनैव सह विरोधाभावात् । अद्वितीयात्मतत्त्वमेव हि सदंशः । तथा च विरोधाभावाद् घटज्ञानस्य सदंशेन प्रामाण्यमेव । अथ घटांशेन विरोध इति ब्रूषे चेत्-उच्यते । आदौ तावद् घटांशो ज्ञात एव न भवति दूरे तेन सह विरोधः । घटः प्रकाशत इति व्यवहारस्तु घटाधिष्ठानभूतचिदंशाभिप्रायेणोपपद्यते । अवश्यं चैतदेवं विज्ञेयम् । इतरथा घटः स्वरूपतो जडः प्रकाशविरुद्धस्वभावः स कथं स्वरूपतः प्रकाशितः स्यात् । तथा च चितो घटरूपेण स्फुरणाच्चिद्गतप्रकाशस्य घट आरोप इति घटः प्रकाशत इति व्यपदेशो गौण एव । किं चाज्ञानस्य य आश्रयः स एव ज्ञानस्याश्रयो न तु कदाचिदप्यचेतनः पाषाणादिरित्येवं यथा ज्ञानाज्ञानयोः समानाश्रयत्वनियमस्तथा य एवाज्ञानस्य विषयः स एव ज्ञानस्येत्येवं ज्ञाना-

१ झ—दिज्ञानस्याप्यज्ञाते सन्मात्रांशेऽद्वैते प्रामाण्या । २ ग ङ च छ ज—तज्ज्ञानस्या । ३ च छ ज—प्यज्ञातसन्मात्रांशेऽद्वैते प्रामा । ४ ख ङ—द्वैते स । ५ ङ—ण्यात् । ज्ञाना । ६ ग—नानभ्युपगात् । तद । ७ च छ ज झ—रात् । तदवच्छिन्न । ८ ङ—ज्ञानव्य । ९ ग—त्तेः सर्वप्रमाणानां चाज्ञातज्ञापकत्वेनैव प्रामाण्यात् । अन्यथा । ; ङ ज झ—त्तेः । प्रमाणस्य । १० ङ—त्तेः । एवं वेदा ।

एवं वेदान्तेषु सर्वत्रैवंविधे विरोधेयमेव परिहारः। तदाहुर्वार्तिककारपादाः
'यथा[1] यथा भवेत्पुंसो व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥' (वा.)

इति। श्रुतितात्पर्यविषयीभूतार्थविरुद्धं च[2] हेयमेवेति शतश उद्घोषितमस्माभिः। तस्मान्न[3] किंचिदेतत्। तदेवं जीवस्योपाधिनाभिभूतत्वात्संसारोपलब्धिः। परमेश्वरस्य[4] तूपाधिवशित्वात्सर्वज्ञत्वादिकमिति सम्यगुपपद्यते व्यवस्था।

---

ज्ञानयोः समानविषयत्वनियमोपि विद्यते। घटश्च नाज्ञानस्य विषय इति स ज्ञानस्यापि न विषय इति घटांशो ज्ञात एव न भवतीति सिद्धम्। ननु घटो न ज्ञायत इत्येवमज्ञानविषयत्वं व्यपदिश्यत इति चेन्न। घटाधिष्ठानभूतचिदंशाज्ञानेनैव तादृशव्यवहारोपपत्तेरतिरिक्तघटविषयकाज्ञानकल्पने प्रमाणाभावात्। गौरवग्रस्तत्वाच्च। चिदंशाज्ञानप्रयोजनापेक्षया स्वातन्त्र्येण घटविषयकाज्ञानस्य प्रयोजनाभावाच्च। तथा च चिदंश एवाज्ञात इति तदंशज्ञापकत्वेनैव घटोस्तीति ज्ञानस्य प्रामाण्यं न घटांशज्ञापकत्वेन। घटांशस्याज्ञानविषयत्वानभ्युपगमात्। प्रमाणं ह्यज्ञातज्ञापकमेव। अन्यथा ज्ञातज्ञापिकायाः स्मृतेरपि प्रामाण्यप्रसङ्ग इति।

एवं वेदान्तेष्विति। यथा जीवस्वरूपविषयेनेकैर्निबन्धकारैः प्रकल्पिता आभासादयो वादा मिथो विरुद्धा अपि नाग्राह्या भवन्ति। अद्वितीयात्मतत्त्वरूपमुख्यप्रमेयज्ञापनस्य मुख्योद्दिष्टस्य सर्वेषामविशिष्टत्वात्। तदर्थमेव तेषां कल्पितत्वात्। तथा च मुख्यप्रमेयावगत्युपकारकत्वेन सर्वेषामविरोध इत्यतस्ते ग्राह्या एव भवन्ति तथैव स्थलान्तरेपि बोध्यम्। यथा तत्त्वमसीति महावाक्यं जीवात्मैक्यप्रतिपत्तिकरमित्येवं तत्तात्पर्यमविशेषेण सर्वैरप्यद्वैतवादिभिरङ्गीकृतमेव। तच्च कैश्चिद्वार्तिककारानुसारिभिर्जहल्लक्षणया साधितम्। संक्षेपशारीरककारानुसारिभिर्वाचस्पतिमिश्रानुसारिभिश्चाजहल्लक्षणयोपपादितम्। धर्मराजाध्वरीन्द्रैर्लक्षणामन्तरेणैव समर्थितम्। एवमापाततो मुखे विरोधे भासमानेपि पार्यन्तिके जीवात्मैक्यप्रतिपत्तिकरत्वेऽविरोध एवेति। यथा यथेति। पुंसो मुमुक्षोः पुरुषस्य प्रत्यगात्मनि व्युत्पत्तिरात्मतत्त्वावबोधो यया यया प्रक्रियया भवेत्सा सानेकविधापि प्रक्रिया साध्वी ज्ञेया सा चानवस्थिताऽनिश्चितैकप्रकारा भवतु नाम न तत्र काचिद्धानिरित्यर्थः। मुख्यतात्पर्यविषयीभूतार्थविरुद्धं तु नैव ग्राह्यम्। यथा तत्त्वमसीत्यत्र तस्य त्वं तत्त्वमित्येवं तत्त्वमित्येकं समस्तं पदमताविति वा पदच्छेद इत्यादि।

एकस्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चेति

---

१ ङ छ—यथा यथा भ। २ झ—द्धं चावहेय।; स ङ च छ ज—द्धं त्वपहेय। ३ झ—तन्न किं। ४ छ—रस्योपाधि।

ननु भवत्वविद्यावशाज्जीवेश्वरविभागव्यवस्था। मानमेयादिप्रतिकर्मव्यवस्था तु कथमिति चेत्-उच्यते। दृश्यत्वाज्जडत्वाद्विनाशित्वाच्च परिच्छिन्नाप्यविद्या अनिर्वचनीयत्वेन विचारासहा आवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति। अङ्गुलिरिव नयनपुरःस्थिता सूर्यमण्डलम्। तत्र चक्षुष

द्वयमध्यासस्साधनफलत्वेन पूर्वं (पृ. ४२-प. ५) प्रतिज्ञातम्। तत्र जीवेश्वरविभागव्यवस्था प्रदर्शिता। इदानीं मानमेयादिप्रतिकर्मव्यवस्थां प्रदर्शयति-नन्वित्यादिना। न सर्वदा सर्वैः सर्वं ज्ञायते किं तु कदाचिदेव केनचिदेव किंचिदेव ज्ञायते इत्येवं या व्यवस्था सा मानमेयादिप्रतिकर्मव्यवस्था। सा च व्यवस्थेश्वरे न दृश्यते। तस्य सदैव सर्वविषयकज्ञानसत्त्वात्। किं तु जीव एवोक्तव्यवस्था दृश्यते। तत्रोपपत्तिमाह-दृश्यत्वादिति। दृश्यस्य द्रष्ट्रपेक्षयान्यत्वाद्वस्तुपरिच्छेदः। जडस्य चिति कल्पितत्त्वेन चिद्व्यापकत्वाद्देशपरिच्छेदः। विनाशिनश्चान्तवत्त्वात्कालपरिच्छेदः। एवं च दृश्या जडा विनाशिनी चाविद्या त्रिविधपरिच्छेदयुक्ता भवति। अथ वा दृश्यत्वादिहेतुत्रयेण देशपरिच्छेद एव साध्यते। दृश्यं हि घटादि देशतः परिच्छिन्नं नियमेन भवति। तथैव जडं तथैव विनाशि च। देशतः परिच्छिन्नमव्यापकम्। एतादृशीयमविद्यानादिः। अस्याश्चिदात्मना सह संबन्धश्चानादिः। संबन्धश्च न कात्स्न्र्येन। किंतु यथाल्पोऽपि घटो महत्याकाशे क्वचिद्भागे संयुक्तो भवति तद्वदियं क्वचित्संयुक्ता भवति। सा च न सती। बाधायोगात्। बाधश्च मोक्षसिध्यर्थमवश्यमेव स्वीकार्यः। नाप्यसती। अहमज्ञ इति प्रतीतिसद्भावात्। अतस्तृतीयकोटिप्रविष्टेयमनिर्वचनीया कापि। अनिर्वचनीयत्वमेव चास्याः स्वरूपम्। अत ईदृशी वा तादृशी वेति विचारोऽत्र नावकाशं लभते। एतेन 'साध्यस्तानध्यस्ता वा' इति प्रागुक्त-(पृ. ३०-प. १) विकल्पो निरस्तः। अस्याश्चाविद्याया आवरणशक्तिर्विक्षेपशक्तिश्चेति शक्तिद्वयं कार्यानुसारेण कल्प्यते। तत्रावरणशक्त्याऽखण्डपरमानन्दसाक्षात्कारस्वरूपं चिदात्मानमावृणोति। अत एवात्मा स्वप्रकाशस्वरूपोऽपि तेन रूपेण नावभासते। विक्षेपशक्त्या च वियदादिप्रपञ्चमुद्भावयति। यत्र क्वचित्स्थितयानया सर्वगतस्य चिदात्मनः कथमावरणमिति चेत्तत्र दृष्टान्तमाह-अङ्गुलिरिवेति। नन्वङ्गुलिः सूर्यमण्डलमेवावृणोति न चक्षुरिन्द्रियमावृणोतीत्यत्र किं नियामकम्। सूर्यमण्डलादर्शनं त्वन्यतरावरणेनाप्युपपद्यते इति चेत्तत्राह-तत्र चक्षुष इति। चक्षुरिन्द्रियस्यावरणाङ्गीकारे तेनाङ्गुलिरपि न दृश्येत। अतः सूर्यमण्डलमेवावृतमिति कल्पनीयं भवति। ननु नाङ्गुलिः सूर्यमण्डलमावृणोति नापि चक्षुरिन्द्रियम्। किं तु केवलं मध्ये व्यवधानमुत्पादयति। तेन च सूर्यमण्डलस्य

१ छ ज-त्वाद्विना। २ ङ-व परः। ३ ग-नसीनीहना।

एवावरणेऽङ्गुलेरप्यभानप्रसङ्गात् । अधिष्ठानावरणमन्तरेण विक्षेपानुपपत्तेश्च । ततश्च सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती निखिलजगदाकारेण परिणमते । सा च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव । तथा च चैतन्यस्य दीपवत्स्वसंबद्धसर्वभासकत्वाज्जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत्सर्वज्ञं भवति । तेन तत्र न मानमेयादिव्यवस्था । किं तु जीवे । तस्य बुद्ध्यवच्छिन्नत्वेन परिच्छिन्नत्वात् ।

चक्षुःसंनिकर्षो विनष्टो भवति । तावतैव चाङ्गुलिः सूर्यमण्डलमावृणोतीति व्यवहार इति चेत्—अत्राप्यविद्याकृतमावरणं तथैवास्तु न काचित्क्षतिः । नन्वेवमपि नोपपद्यते । दृष्टान्तो ह्यसंभवं निवर्त्य 'संभवत्ययमर्थः' इत्येवं संभवमात्रं प्रदर्शयति । न तु क्वचित्कंचिदर्थं निश्चाययति । यथा पर्वतेऽग्न्यनुमाने महानसं दृष्टान्ततयोपादीयते । तत्र दृष्टान्ताद्धूमाग्न्योर्व्याप्तेः संभवमात्रम् । व्याप्तिनिश्चयस्तु कार्यकारणभावाधीनः । तथा महानसवत्पर्वतस्य पार्थिवत्वात्तत्र तद्दृष्टान्तात्पर्वतेऽग्नेः संभवमात्रम् । निश्चयस्तु धूमज्ञानाधीनः । तद्वन्महतोऽप्यल्पेनावरणं संभवतीत्येवं संभवमात्रमङ्गुलिदृष्टान्तादस्तु नाम । निश्चयस्त्वविद्यया चिदात्मावृत एवेत्ययं कथं जात इत्यत आह—अधिष्ठानावरणमिति । यथा शुक्तौ रजतावभासस्थले शुक्त्यंशोऽनावृतश्चेद्रजतावभासो नैव भवति तथा चिदात्माऽनावृतश्चेत्प्रपञ्चावभास एव न स्यात् । तथा च तदन्यथानुपपत्त्यैव चात्राविद्यया चिदात्मावृत इति निश्चितं भवति । सा चेति । अविद्यायाः स्वगतचिदाभासेन सह तादात्म्यम् । चिदाभासश्च मुख्यचिदपेक्षया नातिरिक्त इति तस्य चित्तादात्म्यम् । तथा चार्थादेवेयमविद्या चित्तादात्म्यापन्नेत्यविद्योपादानकः सर्वोऽयं प्रपञ्चश्चित्तादात्म्यापन्न एव । चिदेव चेशपदवाच्येत्ययमीशः स्वभावत एव दीपवत्स्वसंबद्धाखिलवस्तुग्राहकः । स्वभावसिद्धेश्चात्र नान्यस्य कस्यचिदपेक्षेति तज्ज्ञानस्य कादाचित्कत्वे हेत्वभावात्सार्वदिकमेव तज्ज्ञानम् । तथा तादृशचिता सहासंबद्धं कदाचिदपि किंचिदपि नास्तीति सर्वदा सर्वज्ञ एव सः । अतस्तत्र कदाचिदेव किंचिदेव ज्ञायत इत्येवं या प्रतिकर्मव्यवस्था सा सुतरां न संभवति । जीवस्य तु विषयेण सह संबन्धार्थं विषयावरणभङ्गार्थं चान्तःकरणवृत्त्यपेक्षेत्यनुपदमेव वक्ष्यते । ईशस्य तु व्यापकत्वाद्विषयेण सह संबन्धः सदास्त्येव । तथेशस्याविद्यावशित्वान्न तद्दृष्ट्या सा विषयावरणे प्रभवति । यथा चक्षुषस्तैजसत्वेऽपि नान्धकारनिवारणसामर्थ्यमित्यन्धकारो विषयमावृणोत्येव मनुष्यदृष्ट्या । मार्जारदृष्ट्या तु न विषयोऽन्धकारेणावृतो भवति । तद्वत् । तथा चेशज्ञानस्य निरपेक्षत्वात्तस्य सर्वदा सर्ववस्तुज्ञानं वर्तत इति बोध्यम् । परिच्छिन्नत्वादिति । परिच्छिन्नत्वेन चासंनिकृष्टैर्वस्तुभिः सह संबन्धो न संभ-

१ छ ज—सर्वावभास । २ ख छ ज झ—दानं चै ।

तेन चिदभिव्यक्तियोग्येन येनान्तःकरणेन यदा यत्संबद्धं भवति तदेव तदा तदवच्छिन्नो जीवोऽनुभवतीति न सांकर्यप्रसङ्गः ।

एवमत्र प्रक्रिया । शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मभूतारब्धोऽन्तःकरणाख्योऽविद्याविवर्तो दर्पणादिवदतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान्घटादिविषयान् व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत् ।

वतीत्यतो न सर्वज्ञत्वं तस्य । संनिकृष्टैरपि वस्तुभिः सह जीवस्य संबन्धोऽन्तःकरणद्वारैवेति स्वापादावन्तःकरणवृत्त्यभावे ज्ञानं न भवति । तथा च जीवज्ञानमन्तःकरणवृत्त्यधीनमिति कथं तत्सर्वदा भवेत् । नन्वन्तःकरणं जीवत्वप्रापकोपाधिरिति पक्षे भवत्वेवम् । यदा त्वविद्या जीवत्वप्रापकोपाधिस्तदाविद्यकसर्ववस्तुभिः सह नित्यं संबन्धोऽस्त्येवेति चेदुच्यते । अविद्या माया च भिन्नैवेति पक्षे मायोपाधिक ईश्वरो जगत्सृजति । मायाऽविद्या चैकैवेति पक्षेपि यदा विक्षेपशक्तिप्राधान्येनेश्वरोपाधिरावरणशक्तिप्राधान्येन च जीवोपाधिस्तदेश्वर एव जगत्सृजति । ईश्वरः स्वयमधिष्ठानीभूय मायां भूतभौतिकसृष्ट्याकारेण परिणमयतीति यावत् । अस्मिन्पक्षद्वयेऽविद्योपहितो जीवः सर्वगतोपि जगदधिष्ठानत्वाभावेनासङ्गो भूतभौतिकवस्तुभिरसंसृष्ट एव । यथाम्रफलं व्याप्य विद्यमानमपि रूपं रसेनासंसृष्टं तद्वत् । तथा च तत्रान्तःकरणवृत्त्या वस्तुसंबन्धे जात एव ज्ञानं भवतीति जीवज्ञानमन्तःकरणवृत्त्यधीनमेव । ननु यदाऽविद्या माया चैकैव सा च विषयत्वेनेश्वरोपाधिराश्रयत्वेन च जीवोपाधिरिति पक्षस्तदा मायाश्रयत्वाभावान्नेश्वरो जगत्सृजति किंतु तदाश्रयो जीव एव स्वयमधिष्ठानीभूय मायायां जगत्कल्पयति । तदा च जीवस्यासङ्गत्वाभावेन सर्ववस्तुसंसृष्टत्वान्न तदर्थमन्तःकरणवृत्त्यपेक्षेति सर्वज्ञत्वं जीवस्य स्यादिति चेन्न । अस्मिन्पक्षेपि तत्तद्वस्तुगताज्ञानावरणभङ्गार्थमन्तःकरणवृत्त्यपेक्षाया आवश्यकत्वात् । अन्तःकरणं हि घटादिज्ञानकाले घटादिविषयदेशं गतं सत्स्वयमज्ञानपरिणामभूतमपि सात्त्विकतरत्वादतिस्वच्छं चिदभिव्यक्तियोग्यं विषयाकारेण परिणामं प्राप्य तद्गतमज्ञानावरणं दूरीकरोति । न सांकर्येति । उक्तप्रकारेण तत्तद्वस्तुज्ञानस्य तत्तदन्तःकरणवृत्त्यधीनत्वाज्जीवस्वरूपस्य व्यापकत्वेपि न ज्ञानानां सांकर्यमिति भावः ।

उक्तं विशदयति—एवमत्रेति । अविद्याविवर्तः । अविद्यापरिणामः । अविद्यापरिणामभूतानि यान्यपञ्चीकृतानि सूक्ष्माणि पञ्चभूतानि तेषां प्रत्येकमनन्ता अंशाः केचित्सत्त्वप्रधानाः केचिद्रजःप्रधानाः केचित्तमःप्रधानाः । तेषु सत्त्वप्रधानेष्वंशेषु पृथिव्या एकस्तथा जलस्यैकस्तथा तेजसो वायोराकाशस्य चैकैक इति मिलित्वा पञ्चकं भवति । एवमनन्तानां पञ्चकानां

१ ख ङ—योग्यत्वेन । २ ज—तदेव तत्तदवच्छिन्नो । ३ ख—रव्याप । ङ—रमध्यस्थः सर्व । झ—रमवस्थितः । ४ ङ च छ ज झ—क्ष्मपञ्चभूता ।

तस्य च सौरालोकादिवज्झटित्येव संकोचविकासावुपपद्येते[1] । स च सावयवत्वात्परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येपि चक्षुर्वदविच्छिन्नो[3] व्यवतिष्ठते । तत्र देहावच्छिन्नान्तःकरणभागोहंकाराख्यः कर्तेत्युच्यते । देहविषयमध्यवर्ती दण्डायमानस्तद्भागो वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसंपादकमभिव्यक्तियोग्यत्वमित्युच्यते । तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वाच्चैतन्यं तत्राभिव्यज्यते । तस्य चाभिव्यक्तस्य चैतन्यस्यैकत्वेप्यभिव्यञ्जकान्तःकरणभागभेदात्त्रिधा व्यपदेशो भवति । कर्तृभागावच्छिन्नश्चिदंशः प्रमाता । क्रियाभागावच्छिन्नश्चिदंशः प्रमा-

परिणामभूतान्यनन्तान्यन्तःकरणानि भवन्ति । सौरालोकादिवदिति । सौरालोकः सूर्यप्रकाशः । स यथा द्वार उद्घाटिते सद्यो विकसन्नन्तः प्रविशति । सपदि पिहिते च द्वारे संकुचन्निःसरति । तथा सूर्यं पश्यतो देवदत्तादेरन्तःकरणं तच्छरीरमजहदेव क्षणमात्रेण वृक्षनिर्यासवत्प्रलम्बीभूय सूर्यपर्यन्तं गत्वा सूर्याकारं भवति । सद्य एव समीपस्थं घटं पश्यतः क्षणमात्रेण संकुचद्घटाकारं भवति । स चेति । अन्तःकरणरूपाविद्यापरिणामः कदापि देहाद्विच्छिन्नो न भवति । यथा दूरस्थं पर्वतादिकं पश्यतोपि देवदत्तादेर्देहाच्चक्षुरिन्द्रियं न विश्लिष्टं भवति । किं तु देहस्थस्यैव तस्य केवलं किरणद्वारा पर्वतादिसंयोगो जायते तद्वत् । तदानीं तस्यान्तःकरणस्य भागत्रयं जायते । देहस्थ एकः । देहविषययोर्मध्ये सूक्ष्मतन्तुवदवस्थितो द्वितीयः । घटादिविषयस्थस्तृतीयः । तत्र देहस्थो यः प्रथमो भागः सोहंकारनामा क्रियाश्रयत्वात्कर्तेत्युच्यते । घटं जानातीत्यादावभिव्यक्त्यनुकूलव्यापाररूपा क्रिया ज्ञाधात्वर्थः । तत्राभिव्यक्तिरूपं फलं विषयनिष्ठम् । अभिव्यक्तिरभिव्यञ्जकत्वम् । तदनुकूलो व्यापारश्च विषयपर्यन्तमन्तःकरणस्य लम्बीभावः । तादृशलम्बीभवनरूपक्रिया देहस्थस्यान्तःकरणस्येति तस्य ज्ञानक्रियाकर्तृत्वम् । अतस्तादृशान्तःकरणोपहितं चैतन्यं प्रमात्रेत्युच्यते । देहविषययोर्मध्ये वर्तमानो योन्तःकरणस्य द्वितीयो भागस्तदेव ज्ञानमन्तःकरणवृत्तिरूपम् । सैव च क्रिया ज्ञाधात्वर्थः । तया च जडेपि विषयेभिव्यञ्जकत्वयोग्यतारूपं फलं जायते । अभिव्यञ्जकत्वमेव प्रमेति प्रमितिरिति चोच्यते । तादृशप्रमितिसाधनत्वाल्लम्बीभवनक्रिया प्रमाणमिति द्वितीयभागरूपान्तःकरणोपहितं चैतन्यं प्रमाणमित्युच्यते । घटादिविषयस्थो योन्तःकरणस्य तृतीयो भागो विषयाकारपरिणामरूपस्तेन विषयो ज्ञानकर्म भवति । ज्ञानजन्याभिव्यञ्जकत्वरूपफलाश्रयत्वात् । तथा च जडस्य

---

१ च ज झ—काशावुप । २ च—दनवच्छिन्नो । ; ज—दव्यवच्छिन्नो । ; झ—दवच्छिन्नो । ३ ग—न्नोव्यवति । ४ ग—देहेन्तःक । ५ ग—व्यवृत्तिद । ; झ—व्यवर्तिदण्डा । ६ ख छ च ज झ—नाख्या क्रि । ७ ज—दककर्माभिव्यक्ति । ८ च छ ज झ—तस्याभि ।

णम् । विषयग[1]ताभिव्यक्तियो[2]ग्यत्वभागावच्छिन्नश्चिदंशः प्रमितिः । प्रमेयं तु विषयग[3]तं ब्रह्मचैतन्यमेवाज्ञातम् । तदेव च ज्ञातं सत्फलम् ।

घटादेरभिव्यञ्जकत्वाविरुद्धजडस्वभावत्वेपि घटादिज्ञानकाले याभिव्यञ्जकत्वयोग्यता दृश्यते सा तादृशघटाद्याकारान्तःकरणपरिणामरूपैव । अभिव्यञ्जकत्वमेव च प्रमितिरिति तादृशान्तःकरणपरिणामरूपतृतीयभागावच्छिन्नं ब्रह्मचैतन्यं प्रमितिरित्युच्यते । प्रमेयं तु विषयावच्छिन्नं ब्रह्मचैतन्यम् । यद्यपि घटावच्छिन्नं तादृशघटाकारान्तःकरणपरिणामरूपा याभिव्यञ्जकत्वयोग्यता तदवच्छिन्नं चैतन्यं चैकमेव । उपाध्योरेकदेशस्थत्वेनोपाधेयभेदाप्रयोजकत्वात् । तथा च प्रमेयं प्रमितिश्चैकमेव चैतन्यं भवति तथापि तत्रायं विशेषः । अज्ञातावस्थं प्रमेयं ज्ञातावस्थं प्रमितिरिति । एवमेवोक्तरीत्यान्तःकरणावच्छिन्नं चैतन्यं घटाकारान्तःकरणपरिणामरूपाभिव्यञ्जकत्वयोग्यतावच्छिन्नं चैतन्यं चैकमेव । अन्तःकरणपरिणामविशेषावच्छिन्नस्याप्यन्तःकरणावच्छिन्नत्वात् । न हि घटावच्छिन्नमाकाशं मृदवच्छिन्नं न भवति । तथा च प्रमातृचैतन्यं प्रमितिचैतन्यं चैकमेव तथापि प्रमितिचैतन्यतादात्म्यात्पूर्वावस्थमन्तःकरणावच्छिन्नं चैतन्यं प्रमातृ । तदेव चान्तःकरणपरिणामरूपाभिव्यक्तियोग्यतावच्छिन्नं फलमिति विवेकः । एवं च प्रत्यक्षज्ञानकाले प्रमातृचैतन्यं प्रमेयचैतन्यं प्रमितिचैतन्यं चैकमेव भवति । वस्तुत एकमेव चैतन्यमुपाधिभेदादेव भिन्नं भवति । तादृशमुपाध्याकारसदृशाकारं बिभ्रच्चैतन्यं भिन्नमिव भवतीति यावत् । तादृशोपि भेदस्तदानीं प्रत्यक्षज्ञानकाले नास्ति । त्रयाणामपि चैतन्यानामेकाकारत्वात् । प्रमेयचैतन्यं हि घटोपाधिना घटाकारम् । प्रमितिचैतन्यं च तदाकारमेव । अभिव्यक्तियोग्यतावच्छिन्नं हि प्रमितिचैतन्यम् । अभिव्यक्तियोग्यता च घटसंबद्धान्तःकरणपरिणामविशेषरूपा सात्त्विकी छाया । सा च घटे घटस्वरूपं व्याप्य घटाकारवदवस्थिता घटगता सात्त्विकी छाया । यथा शरीरे लावण्यं यथा वा मुक्ताफलेम्भःपदवाच्या तरला छाया तद्वत् । तथा चान्तःकरणपरिणामविशेषरूपायाः सात्त्विकयाश्छायाया घटाकारत्वात्तदवच्छिन्नं प्रमितिचैतन्यं घटाकारम् । तथा प्रमातृचैतन्यमपि तदानीं तत्र तदाकारमेव । अन्तःकरणावच्छिन्नं हि प्रमातृचैतन्यम् । अन्तःकरणं च तदानीं घटगताभिव्यक्तियोग्यतास्वरूपमेवेति ।

एतदुक्तं भवति–मया घटो ज्ञात इति व्यपदेशानुरोधेन प्रमातृचैतन्यस्य विषयचैतन्येन सह संबन्धो वाच्यः । स च ज्ञानद्वारैव । ज्ञात इत्युक्तेः । ज्ञानं च प्रमितिपदवाच्यं विषयगताभिव्यक्तियोग्यतावच्छिन्नं चैतन्यम् । तथा च यदा प्रमातृचैतन्यं प्रमितिचैतन्याभिन्नं भवति तथा प्रमेयचैतन्यं च प्रमितिचैतन्याभिन्नं भवति तदार्थादेव प्रमातृचैतन्यप्रमेयचैतन्ययोर्ज्ञानद्वारा

१ ग–गतोभि । ; च ज–गतयोग्यत्व । २ ख–ग्यताभागा । ३ ख–गतं चैत ।

अत्र च यस्मिन्पक्षेन्तःकरणावच्छिन्नो जीवः यस्मिंश्च पक्षे[2] सर्वगतोसङ्गोऽविद्याप्रतिबिम्बो जीवः तत्रोभयत्रापि प्रमातृ[3]चैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था चान्तःकरणवृत्तिः। यस्मिंश्च पक्षे अविद्यावच्छिन्नः सर्वगतो जीव आवृतस्तास्मिन्पक्षे जीवस्यैव जगदुपादानत्वेन सर्वसंबद्धत्वादावरणभङ्गार्था वृत्तिरिति विवेकः।

---

तादात्म्यं सिद्धमेव। वस्तुतश्चैतन्यमेकमेव। भेदस्तु तस्यौपाधिकः। भिन्नदेशस्थं हि उपाधिद्वयमुपधेयभेदं प्रदर्शयेत्। उपाध्योरेकदेशस्थत्वे तूपधेयस्य तादात्म्यमेव। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। तस्य चान्तःकरणस्य विषयपर्यन्तं यो दीर्घीभावस्तदवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। तस्य च प्रमातृचैतन्यत्वमस्त्येव। अन्तःकरणमेव दीर्घीभूतमिति तदवच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नत्वानपायात्। तथा विषयगताभिव्यक्तियोग्यताप्यन्तःकरणस्यैव तृतीयो भाग इति तादृशाभिव्यक्तियोग्यतावच्छिन्नस्य प्रमितिचैतन्यस्यापि प्रमातृचैतन्यत्वमस्त्येव। एवमभिव्यक्तियोग्यताया विषयगतत्वात्तादृशाभिव्यक्तियोग्यतावच्छिन्नस्य प्रमितिचैतन्यस्य प्रमेयचैतन्यत्वमस्त्येव। एवं त्रिविधचैतन्यस्यैक्यं प्रत्यक्षे भवति। तत्तदुपाधिभेदेन भिन्नं च चैतन्यं तत्तदुपाध्याकारमिव भवति। तथा च प्रमातृचैतन्यं जीवपदवाच्यं प्रमितिचैतन्याभिन्नं यदा भवति तदा विषयाकारमिव भवतीति।

असङ्गो घटादितादात्म्यशून्यः। उपरागः संबन्धः। अयं भावः। अन्तःकरणोपाधिर्जीव इति पक्षे जीवो न विभुः। किं तु अन्तःकरणवत्परिमितः। तस्य च वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात्प्रमातृत्वम्। तथा च प्रमातृचैतन्याभिन्नस्य जीवस्य विषयसंबन्धार्था वृत्तिः। एवमविद्योपाधिर्जीव इति पक्षे सर्वगतस्यापि जीवस्य जगदुपादानकारणीभूताविद्याश्रयत्वाभावेनाविद्यकवस्तुतादात्म्याभावात्स्वतस्तदसंबद्धस्य वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात्प्रमातृत्वम्। आविद्यकविषयासंबद्धस्य विषयसंबन्धार्था वृत्तिः। संबन्धाभावे हि मयायं विदितो घट इत्येवं प्रमातृचैतन्यप्रमेयचैतन्ययोः संबन्धप्रत्ययो न स्यात्। तस्माज्जीवस्य परिमितत्वपक्षे सर्वगतस्यासङ्गत्वपक्षे च संबन्धार्था वृत्तिः। अस्मिन्पक्षद्वय आविद्यकसर्वप्रपञ्चस्याधिष्ठानं ब्रह्मचैतन्यम्। विषयावरणभङ्गरूपं प्रयोजनान्तरमप्यस्मिन्पक्षद्वये विद्यत एव। वाचस्पतिमिश्रमते तु अविद्यावच्छिन्नः सर्वगतो जीवः स्वाश्रिताविद्यया स्वस्मिन्नेव स्वरूपविशेषावरणपूर्वकं प्रपञ्चं कल्पयति। तथा च जीवस्याविद्यकवस्तुतादात्म्यं सर्वदैवास्तीति न संबन्धार्था वृत्तिरपेक्ष्यते। किं तु केवलमावरणभङ्गार्थैवेति।

---

१ च—प्र यस्मि। २ ङ—क्षेऽसर्वे। ३ ङ—तृचिदुपरा। ४ ङ—सर्वगतत्वादा। ; च—सर्वसंबन्धत्वा।

ननु चिदुपरागार्था वृत्तिरिति पक्षे स्वतोऽन्तःकरणसंबद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात्[1]। न स्यात्[2]। चैतन्यस्य तत्तदाकारत्वाभावात्। तदभावश्च स्वच्छेपि ब्रह्मचैतन्य आवरणात्। अनावृतेपि शुक्तिरजतादावस्वच्छत्वात्[3]। धर्माधर्मादौ त्वस्वच्छत्वादावृतत्वाद्वा[4]। तेन

नन्विति। अयं भावः। प्रत्यक्षज्ञानकाले जीवस्य विषयेण सह संबन्धार्थं ह्यन्तःकरणवृत्तिरपेक्षिता भवति। वृत्त्या चान्तःकरणस्य विषयेण सह संबन्धो भवति। जीवस्य त्वन्तःकरणेन सह संबन्धो नित्य एव। केवलं प्रत्यक्षज्ञानकालेऽन्तःकरणं विषयदेशं गत्वा विषयेण सह संबद्धं भवतीत्येव। तथा च वृत्तिं विना स्वभावत एव येन्तःकरणगता अर्था धर्माधर्मादयस्तेषां प्रत्यक्षं वृत्तिं विनैव स्यात्। तथा ब्रह्मणः सर्वव्यापकत्वात्सर्वाणि वस्तूनि तत्र संबद्धान्येवेति मनोपि तत्र ब्रह्मणि सदा संबद्धमेव। न तु तत्संबन्धार्थं वृत्त्यपेक्षेति ब्रह्मज्ञानमप्यन्तःकरणवृत्तिं विनैव जीवस्य सदा स्यात्। किं च परिच्छिन्नो जीवोपि ब्रह्मणो व्यापकत्वात्तत्र संबद्ध एवेत्यतोन्तःकरणस्यापि तत्र नापेक्षा दूरे तद्वृत्तेः। तथानावृतचैतन्येध्यस्ता ये प्रातिभासिकरजतादयस्तेषां यावदविद्यं वृत्तिं विनैव तत्प्रत्यक्षं स्यात्। यद्यपि व्यावहारिकस्यान्तःकरणस्य प्रातिभासिकेन रजतेन सह संबन्धासंभवात्तादृशरजतप्रत्यक्षेन्तःकरणवृत्तिर्नास्त्येव तथापि तत्र रजतज्ञानार्थं रजतांशेन्तःकरणवृत्तिस्थानेऽविद्यावृत्तिः स्वीक्रियते। सा किमर्थं स्वीक्रियते। तत्र जीवस्याविद्याद्वारा तादृशरजतसंबन्धसत्त्वादविद्यावृत्तिं विनैव प्रत्यक्षं स्यादित्याशयः। परिहरति–न स्यादिति। अयं भावः। अन्तःकरणं हि वृत्त्या घटादिप्रत्यक्षज्ञानकाले विषयेण सह संबद्धं भूत्वा स्वद्वारा जीवचैतन्यस्य विषयेण सह संबन्धं जनयतीत्येतावदेव तस्य कर्तव्यमिति न भ्रमितव्यम्। किंतु वृत्त्या विषयेण सह संबद्धं भूत्वा तत्रत्याज्ञानावरणविनाशपूर्वकं तत्र स्वच्छतां संपाद्य तदीयाकारं स्वयं बिभ्रत्तत्स्वोपहिते चैतन्ये तमाकारं प्रदर्शयति। तथा चान्तःकरणवृत्तिर्घटादेर्विषयस्य चैतन्यसंबन्धं जनयति तत्रत्याज्ञानावरणं च विनाशयति स्वच्छतां च तत्र संपादयति। शङ्काकृता तु धर्माधर्मादौ ब्रह्मणि चान्तःकरणवृत्तिं विना संबन्धमात्रमुपपादितम्। तथा प्रातिभासिके रजतेऽविद्यावृत्तिं विना संबन्धमात्रमुपपादितम्। परंतु वृत्तिं विना तत्राज्ञानावरणं कथं नश्येत्कथं च स्वच्छतासंपादनं स्यात्। यद्यपि ब्रह्मणि स्वयमेव स्वच्छतास्ति तथाप्यज्ञानावरणभङ्गार्थं वृत्त्यपेक्षा। तथा शुक्तिरजतस्थलेऽनावृतचैतन्येऽविद्ययैव च तस्य कल्पितत्वादविद्यावरणं नास्ति। न हि तमस्तमसाव्रियते। तथापि तत्र स्वच्छतासंपादनार्थमविद्यावृत्त्यपेक्षा। धर्माधर्मादौ त्वावरणभङ्गः स्वच्छतासंपादनं चेति

१ ङ–स्यात्। अन्तःकरणस्य तत्तदा। २ च–स्यात्। तस्य चैत। ३ ङ–र्मादावस्व। ४ ज–द्वा भानं न स्यात्। तेन।

स्वच्छेऽप्यावृते[1] प्रमाणवृत्त्या तदाकारता। अनावृतेऽप्यस्वच्छे शुक्तिरजतादावविद्यावृत्त्या तदाकारता। अनावृते स्वच्छे तु सुखदुःखादौ स्वत इति नान्तःकरणसंबन्धमात्रेण[2] भानप्रसङ्गः।

ननु ब्रह्मणः कथमावरणम्। निरवद्यस्वप्रकाशत्वेन सर्वज्ञत्वात्। सत्यम्। स्वसंबद्धसर्वभासकतया सर्वज्ञमप्यन्तःकरणावच्छिन्नजीवाज्ञानविषयतया आवृतमिति व्यपदेशात्। तस्माद्ब्रह्म जगदुपादानमिति पक्षे चिदुपरागार्थी आवरणभङ्गार्थी च वृत्तिः। जीवोपादानत्वपक्षे त्वावरणभङ्गार्थैव।

नन्वेकेनैव घटादिज्ञानेनावरणस्य भङ्गे सद्यो मुक्तिप्रसङ्गः। अज्ञानस्यैकत्वात्। नानाज्ञानपक्षेऽप्येकस्य जीवस्यैकाज्ञानोपाधित्वात्[3]। न। उत्तेजकेन

---

द्वयमप्यन्तःकरणवृत्त्यैव संपादनीयं स्यात्। वस्तुतस्तु धर्माधर्मयोः प्रत्यक्षयोग्यतायाः स्वरूपत एवाभाव इत्यन्यत्। घटादौ त्वावरणभङ्गः स्वच्छतासंपादनं जीवचैतन्यसंबन्धश्चेति त्रयमप्यन्तःकरणवृत्त्यधीनमिति बोध्यम्। अनावृतेपीति। प्रातिभासिकस्यार्थस्य ज्ञानं विनास्तित्वाभावादावृतस्यास्तित्वं वक्तुं न शक्यत इति प्रातिभासिकस्याविद्यकस्य रजतादेरनावृतत्वं सिध्यति। अनावृते स्वच्छ इति। साक्षिमात्रभास्यत्वादज्ञानाविषये सुखादौ स्वत एव सुखाकारता जीवस्य। अज्ञानं साक्षिभास्यत्वादनावृतमपि तामसत्वादस्वच्छमिति तत्परिणामभूतं प्रातिभासिकं रजतमस्वच्छम्। सुखादिकं सात्त्विकान्तःकरणपरिणामरूपत्वात्स्वच्छमिति बोध्यम्।

सर्वज्ञमपीति। यथा जीवस्य स्वं प्रत्येव स्वस्वरूपमावृतं न तथा ब्रह्मणः। तथा च ब्रह्मणः स्वं प्रति स्वस्य रूपस्यानावृतत्वेपि परं जीवं प्रत्यावृतत्वादावृतमिति व्यपदेशाज्जीवस्य तज्ज्ञानमावरणभङ्गाधीनमेव भवति। उपसंहरति-तस्मादिति। उपपादितमेतत्।

नन्विति। देवदत्तस्य घटज्ञानकाले तदीयान्तःकरणवृत्त्यावरणस्य भङ्गो भवति। आवरणमूलभूतस्याज्ञानस्यावस्थितौ चित्स्फुरणासंभवादज्ञाननाशमूलक एवावरणनाश इति वक्तव्यम्। तथा चाज्ञानस्य नाशाद्देवदत्तादयः सर्वे प्राणिनो मुक्ता भवेयुः। प्रतिजीवमज्ञानभेद इत्येवं नानाज्ञानपक्षे देवदत्तस्य घटज्ञानकाले देवदत्तो मुक्तः स्यादिति दोषस्तदवस्थ एव। उत्तेजकेनेति। अयं भावः। यतश्च प्रतिक्षणं तत्तत्प्राणिनामावरणभङ्गपूर्वकं विषयज्ञानं जायते न च कस्यापि मोक्षो भवति अतस्तदन्यथानुपपत्त्यावश्यमेवं कल्पनीयं भवति यदन्तःकरणवृत्त्याऽज्ञानस्य नाशो न भवति किं तु केवलं क्षणमात्रं तदज्ञानं तिरोभूयते।

---

१ ङ—ते न प्रमाण। २ ज—मात्रेणैव भान। ३ ङ—धिकत्वात्।

मणेरिव वृत्त्यावरण[1]स्याभिभवाङ्गीकारात् । तथा च प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृत[2]मज्ञानं सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थमावरणमित्युच्यते । वृत्तौ जातायां त्ववच्छेदकाभावाद्विद्यमानमप्यविद्यमानसममेवेति न स्वकार्यसमर्थमज्ञानम्[3] । तेनाभिभूतमित्युच्यते ।

नन्वेवं सति ब्रह्मज्ञानेनाप्यविद्याया अनिवृत्तेरनिर्मोक्षप्रसङ्गः । न । तत्त्वमस्यादिवाक्यार्थज्ञाना[4]दविद्यानिवृत्त्यभ्युपगमात्[5] । स्वविषय[6]विषयक[7]प्रमात्वेनैवाविद्यानिवर्तक[8]त्वात् । महावाक्यार्थज्ञानस्यैवाबाधितविषयतया[9] प्रमात्वात् । प्रत्यक्षा[10]दीनां तु बाधितविषयतया भ्रमत्वेपि व्यवहारसामर्थ्येन[11] प्रामाण्याभिमा-

यथाग्निगतदाहकत्वप्रतिबन्धिका मणिगता शक्तिरुत्तेजकमन्त्रादिसंनिधाने केवलं तिरो भवति न तु विनश्यति तद्वत् । तथा चेति । प्रमाणं क्रियाभागावच्छिन्नश्चिदंशः । तज्जन्या यान्तःकरणवृत्तिर्घटादिविषयनिष्ठा विषयं व्याप्यावस्थिता सूक्ष्मा सात्त्विक्यन्तःकरणच्छाया तदभावविशिष्टमज्ञानं विद्यमानेपि वस्तुनि नास्ति वस्त्वित्याकारिकां प्रतीतिं जनयति । तथा प्रकाशितेपि वस्तुनि न भाति वस्त्वित्याकारिकां प्रतीतिं जनयति । तथा च तादृशप्रतीतिजनकमज्ञानम् । अज्ञानगतमन्तःकरणवृत्त्यभावविशिष्टत्वं तादृशप्रतीतिजनकतावच्छेदकम् । जातायां त्वन्तःकरणवृत्तावुक्तप्रतीतिजनकतावच्छेदकीभूतस्यान्तःकरणवृत्त्यभावविशिष्टत्वस्याभावाद्विद्यमानमप्यज्ञानं नास्ति न भातीति प्रतीतिरूपं स्वकार्यं जनयितुं न प्रभवति । अयमेवाज्ञानस्य तिरोभावः ।

एवं सति । अन्तःकरणवृत्त्या केवलमज्ञानस्य तिरोभावाङ्गीकारे । तथा च तत्त्वमसीत्यादिमहावाक्यजन्यज्ञानस्थलेप्यन्तःकरणवृत्तेरविशेषात्तया केवलमज्ञानस्य तिरोभावेपि स्वरूपतस्तस्याज्ञानस्य विद्यमानत्वान्मोक्षो नोपपद्यत इत्याशयः । समाधत्ते—नेति । स्वविषयेति । स्वमविद्या तस्या यो विषयः स विषयो यस्यास्तादृशी या प्रमा तस्या भावस्तत्त्वम् । अनेनैव रूपेण ज्ञानमविद्याया निवर्तकं भवति । महावाक्यजन्यस्य ब्रह्मज्ञानस्य मूलाविद्याविषयीभूतब्रह्मविषयकप्रमात्वात्तदविद्यानिवर्तकं भवति । अयं घट इत्यादिज्ञानस्थले तु नैवम् । तत्र हि तादृशज्ञानात्पूर्वमज्ञातो घट इति स स्वस्य ( अज्ञानस्य ) विषयस्तद्विषयकमयं घट इति ज्ञानं वर्तते परंतु तत्प्रमा न भवति । अतो न तत्राज्ञानस्य विनाशः । किं तु तिरोभाव एव । ब्रह्मणः कालत्रयाबाध्यत्वेन तद्विषयकस्य महावाक्यजन्यज्ञानस्य प्रमात्वम् । घटादीनां तु बाधितत्वात्तद्विषयकाणां सर्वे-

१ ख ङ—रणाभि । २ ज—मज्ञानमस्ति । सति । ३ झ—नम् । नन्वेवं । ४ ख ङ—नादेवावि । ५ ज—मात् । ज्ञानस्य स्वविषय । ६ झ—षयप्रमा । ७ ग च छ—यप्रमा । ८ ग—त्वाभ्युपगमात् । ९ ख—या प्रामाण्यात् । १० ख ङ—क्षादिज्ञानस्य वा । ; झ—क्षज्ञानादीनां । ११ ङ—न प्रमात्वाभि ।

नात्[1]। किं च ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनमकिंचित्करम् । स्वानुभवसिद्धत्वात् । अन्यथानुपपत्तेश्च सर्वतो[2] बलवत्त्वात् । तदुक्तम्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्ट्यदृष्टि[3]वैमत्यं सैव सर्वबलाधिका ॥ इति ।

षामपि ज्ञानानां नैव प्रमात्वम् । तथा च शुक्तौ रजतज्ञानवदयं घट इति ज्ञानमपि भ्रम एव । इयांस्तु विशेषः—तत्र रजतस्य बाधो व्यवहारकाल एवानुभूयते घटादेर्बाधस्तु व्यवहारकाले नानुभूयत इति । बाधज्ञानाभावादेव च तत्र घटादिज्ञाने प्रामाण्याभिमानो लौकिकानाम् । शुक्तिरजतादिज्ञानस्थलेपि बाधज्ञानात्पूर्वं किंचित्कालपर्यन्तं प्रामाण्याभिमानो दृश्यत एव । तथा च तत्र तादृशोऽभिमानः क्षणमात्रेण निवर्तते । अन्यत्र तु मोक्षपर्यन्तमवतिष्ठत इति । ननु घटादिज्ञानानां वस्तुतः प्रमात्वाभावात्तेनाज्ञानस्य न विनाशः किं तु केवलं तिरोभाव एवेति चेत्तर्हि ज्ञानमज्ञानस्य विनाशकमित्येवं तयोर्विनाश्यविनाशकभावः कुत्र दृष्टो यद्बलान्महावाक्यजन्यज्ञानस्याज्ञाननाशकत्वं कल्प्यत इति चेन्न । शुकवामदेवादावाप्तवाक्यात्तथा दर्शनात् । नन्वस्त्वेवमविद्यानानात्वमिति पक्षे । एकैवाविद्येति पक्षे तु कथम् । शुकादीनां तत्त्वज्ञानेनाविद्याया विनाशश्चेदस्मादृशानामप्यनायासेन मोक्षप्रसङ्गः । नो चेदन्यत्रादर्शनं तदवस्थमिति चेत्तत्राप्याह—ज्ञानादिति । न ह्यन्यत्रादृष्टोऽर्थो नैव सिध्यतीति नियमः । प्रमाणसत्त्वे तत्सिद्धेरनपलापात् । यथेश्वरे सर्वज्ञत्वम् । तद्धि तस्य श्रुतिप्रतिपादितजगत्कर्तृत्वान्यथानुपपत्त्या सिध्यति । किं चान्यत्र दृष्टोप्यर्थः सिध्यत्येवेति न नियमः । महानसे धूमसंसृष्टत्वेन दृश्यमानोप्याभिर्नायोगोलके धूमं साधयितुं प्रभवति । तथा चान्यत्रदर्शनं न वस्तुसिद्धौ तन्त्रं नापि चान्यत्रादर्शनं वस्त्वसिद्धौ तन्त्रम् । अनुमाने चोदाहरणवाक्याज्जायमानमन्यत्र दर्शनं पक्षे साध्यसंभवमात्रं द्योतयति न तु साध्यनिश्चयम् । स तु व्याप्त्यधीन एव । स्वानुभवेति । न ह्यन्यत्रादृष्टमश्रुतपूर्वं च किंचिद्विलक्षणं सत्त्वमरण्ये दृष्टं चेत्तदसिद्धं भवति । अन्यथानुपपत्तेरिति । सोऽविद्याग्रन्थिं विकिरति (मु० २।१।१०) इत्यादिश्रुतयो ज्ञानादज्ञाननिवृत्त्यनङ्गीकारे नोपपद्यन्त इति भावः । अन्यथानुपपत्तिश्चेदिति । यदि कस्यचिद्वस्तुनः साधिकान्यथानुपपत्तिः स्यात्तर्हि सान्यत्रादर्शनमूलिकां विरुद्धां तादृशवस्त्वसिद्धिरूपां मतिं विनाशयति । यतोऽन्यथानुपपत्तिरूपं प्रमाणं सर्वतो बलवदित्यर्थः ।

अथ घटादिविषयाकारान्तःकरणवृत्त्या न केवलमज्ञानस्य तिरोभावः

१ च छ ज झ—नात् । ज्ञाना । २ झ—सर्वथा बल । ३ छ ज—दृष्टैम ।

अथ वा मूलाज्ञानस्यैवावस्थाभूतान्यज्ञानानि घटादिविषयावरणानि। अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वेन यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमोदेकेन ज्ञानेनैकस्यैवाज्ञानस्य नाशाद्घटादिज्ञानेनावरणनाशेपि न काचिदनुपपत्तिः।

नन्वनुमानादिभिरावरणं निवर्तते न वा। आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेः श्वेतत्वाद्यनुमानादिना निवृत्तिप्रसङ्गः। दिङ्मोहादेरपि अनुमानादिना निवृत्तिप्रसङ्गः। अधिष्ठानाज्ञानोपादानकत्वेन भ्रमस्य तन्निवृत्तौ तन्निवृत्तेः।

किं तु विनाश एवेति सांप्रदायिकं मतमुपपादयति—अथ वेति। घटादिविषयाकारान्तःकरणवृत्त्या यस्याज्ञानस्य विनाशो जायते तन्न मूलाज्ञानम्। किं तु जलस्य बुद्बुदवन्मूलाज्ञानस्यावस्थाविशेषरूपम्। एतादृशानि च मूलाज्ञानस्यावस्थाविशेषरूपाणि बहून्यज्ञानानि सन्ति। यथा यावन्ति ज्ञानानि तावन्तो ज्ञानप्रागभावास्तथा यावन्ति ज्ञानानि तावन्त्यज्ञानानीति ज्ञानप्रागभाववदज्ञानानामपि ज्ञानानुरोधेन बहुत्वम्। तथा च घटज्ञानस्थले घटाकारान्तःकरणवृत्त्या घटविषयकाज्ञानस्यैव विनाशो न त्वितरविषयकाज्ञानान्तराणां नापि मूलाज्ञानस्येति न सद्यो मोक्षप्रसङ्गो न वा सर्वदा घटस्य भानमिति भावः। विषयावरणानि। विषयावच्छिन्नचैतन्यावरणानि।

नन्वनुमानेति। अनुमानमनुमितिः। यथा घटप्रत्यक्षस्थले घटाकारान्तःकरणवृत्त्या घटविषयकाज्ञानस्य विनाशस्तथा पर्वतेग्न्यनुमितिस्थलेग्न्याकारान्तःकरणवृत्त्याग्निविषयकस्याज्ञानस्य विनाशो भवति न वा। विनाशो भवतीति पक्षेऽग्निविषयकस्याज्ञानस्य नाशेपीन्द्रियसंनिकर्षाभावान्नाग्निप्रत्यक्षमिति यद्यपि वक्तुं शक्यते तथापि पित्तदोषेण शङ्खे पीतत्वभ्रमे तत्र शङ्खः श्वेतः शङ्खत्वादित्यनुमानेन श्वैत्याकारान्तःकरणवृत्त्या श्वैत्यविषयकाज्ञानस्य नाशे अज्ञानस्य भ्रमोपादानकारणस्य नाशाद् भ्रमस्य च नाशे सतीन्द्रियसंयोगस्य स्वत एव सत्त्वाच्छैत्यप्रत्यक्षं स्यात्। न तु तथानुभवः। यावद्दोषं पीतिमैव हि तत्रानुभूयते। एवं शुक्तिरजतावभासस्थलेपीयं शुक्तिरित्याप्तवाक्यजशाब्दबोधे शुक्त्याकारान्तःकरणवृत्त्या शुक्तिविषयकाज्ञानस्य नाशे तन्मूलकभ्रमस्यापि नाशे सतीन्द्रियसंयोगस्य स्वत एव सत्त्वाच्छुक्तिप्रत्यक्षप्रसङ्गः। अनुभवस्तु विपरीतः। यावद्दोषं रजतप्रत्यक्षसत्त्वात्। एवं पूर्वस्यामुत्तरात्वभ्रम इयं पूर्वेत्याप्तवाक्य-

१ ग ङ च छ ज झ—स्याज्ञाना। २ च—मोदकेन च ज्ञानेनकाज्ञानस्यैव नाशा। ३ ङ छ—नैकाज्ञान।; ज झ—नैकाज्ञानस्यैव नाशा। ४ च ज—निवर्त्येते। ५ च छ ज झ—स्यापि दिङ्मोहादेरनुमानादिना निवृत्तिप्रसङ्गः। अधिष्ठा। ६ ग—त्वादेर्दिङ्मोहादेश्च श्वेत। ७ ग—ङ्गः अधि। ८ ग च ज झ—त्तौ निवृ। ९ ङ—त्तेः। द्वितीये वक्ष्यादि।

यौक्तिकज्ञानेन च ब्रह्मण्यविद्यानिवृत्तेः साक्षात्कारार्थं श्रवणमननाद्यपेक्षा न स्यात्। द्वितीये[3] च वह्न्यादिव्यवहारो न स्यात्। प्रतिबन्धस्य[4] विद्यमानत्वात्।

उच्यते। द्विविधमावरणम्। एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिचैतन्यनिष्ठम्। अन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठम्। घटमहं न जानामीत्युभयावच्छेदानुभवात्। तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रेण निवर्तते। अनुमितेपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात्। द्वितीयं तु साक्षात्कारेणैव निवर्तते। यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति नियमात्। परोक्षज्ञानस्य च विषयेन्द्रियसंनिकर्षाभावेनान्तःकरण-

जन्यशाब्दबोधात्पूर्वविषयिकयान्तःकरणवृत्त्या पूर्वाविषयकस्याज्ञानस्य विनाशे भ्रमस्यापि नाशादिन्द्रियसंयोगस्य सत्त्वेन पूर्वस्या दिश इयं पूर्वेत्येवं प्रत्यक्षं स्यात्। तथा ब्रह्मविषयकानुमानेन मूलाज्ञानस्य विनाशे सद्य एव ब्रह्मसाक्षात्कारः स्यादित्यतः श्रोतव्यो मन्तव्य इति विधिर्निरर्थकः स्यात्। अथैतद्दोषपरिजिहीर्षयानुमित्यादिस्थले तत्तद्विषयाकारान्तःकरणवृत्तौ जायमानायामपि न तद्विषयकस्याज्ञानस्य विनाश इति द्वितीयः पक्षः समाश्रीयते तर्ह्यनुमितौ जायमानायामप्यग्निविषयकस्याज्ञानस्याविनाशात्पर्वतेग्निरस्तीति व्यवहारो न स्यात्। प्रत्युताग्निर्नास्तीति व्यवहारः स्यात्।

असत्त्वापादकमिति। असत्त्वं सत्त्वस्याभावः। इदमत्र नास्तीति व्यवहारापादकमेतदावरणम्। अनेन चावरणेन विद्यमाने वस्तुनि सत्ताया अवर्जनीयत्वात्सत्ताप्रत्ययः प्रतिबध्यते। सत्ताप्रत्ययश्चान्तःकरणावच्छिन्नचैतन्यरूपप्रमातृनिष्ठः। तत्प्रतिबन्धकमावरणं च तत्रैवावश्यं वाच्यम्। वैयधिकरण्ये प्रतिबध्यप्रतिबन्धकभावासंभवात्। अभानापादकमिति। भानं विषयरूपेण चित्प्रकाशरूपं प्रत्यक्षज्ञानम्। तत्प्रतिबन्धकमेतदावरणं च विषयावच्छिन्नचैतन्यरूपप्रमेयनिष्ठमेव वाच्यम्। प्रत्यक्षे परोक्षे च सर्वत्रैव ज्ञाने विषयाकारान्तःकरणवृत्तिर्भवत्येव। किं तु प्रत्यक्ष इन्द्रियद्वारा विषयप्रदेशे गतस्यान्तःकरणस्य वृत्तिः। परोक्षे तु विषयप्रदेशगमने साधनाभावात्स्वस्थानेवस्थितस्यैव। तत्र प्रत्यक्षज्ञानकालेन्तःकरणस्य विषयप्रदेशगमनादन्तःकरणावच्छिन्नं प्रमातृचैतन्यं विषयावच्छिन्नं प्रमेयचैतन्यं चैकमेवेति तत्रत्यान्तःकरणवृत्त्या प्रमातृचैतन्यनिष्ठम-

१ इदं वाक्यं ङ पुस्तके नास्ति। २ ग—ह्मणोविद्या। ३ च छ ज झ—तीये वह्न्या। ४ ग झ ज झ—न्धकस्य। ५ च छ ज झ—क्षिनिष्ठ। ६ छ—क्षप्रमामात्रेण। ७ ङ—माणमात्रेण। ; च ज झ—मामात्रेण। ८ ख—तेरपि। ९ ज—र्तते। यन्निष्ठा यदाकारा भिवृत्तिर्भवति तन्निष्ठं तदाकार। १० ङ—तन्निष्ठं तदाकार। ११ ज—मात्। परोक्षवृत्तेश्चान्तर्धीसमुल्लासमात्रत्वेन विषयनिष्ठत्वाभावात्। परोक्षज्ञान। १२ झ—स्य चेन्द्रिय।

मात्राश्रयत्वात् । अपरोक्षज्ञानस्यैव विषये[1]न्द्रियसंनिक[2]र्षजन्यत्वेन विषयान्तः-करणोभयनिष्ठत्वात् । तदुक्तम्—

परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ।
अपरोक्षधिया नश्येदभानावृतिहेतुता ॥ इति ।

तेनानुमानादावसत्त्वावरणनाशात्त[3]द्व्यवहारः । अभानावरणानिवृत्त्या[4] च सोपाधिकसाक्षात्कार[5]भ्रमानिवृत्तिरिति । तस्मान्निर्धर्मक[6]स्याप्यात्मनोऽविद्यकान्तःकरणतादात्म्याध्यासात्कर्मकर्तृत्वभोक्तृत्वाध्यास उपपद्यते ।

ननु त्वन्मते अनिर्वचनीयख्यात्यभ्युपगमा[7]द्ये कर्तृत्वादयोऽन्तःकरणधर्मा

---

सत्त्वापादकमावरणं प्रमेयचैतन्यनिष्ठमभानापादकमावरणं चेत्यावरणद्वयं विनाश्यते । अतस्तत्र घटोऽस्तीति घटो भातीति चेति द्विविधोऽपि व्यवहारो जायते । अनुमित्यादिपरोक्षज्ञानकाले त्वन्तःकरणस्य स्वस्थान एवावस्थितत्वात्तत्रत्यान्तःकरणवृत्त्यान्तःकरणावच्छिन्नप्रमातृचैतन्यनिष्ठमसत्त्वापादकमावरणमेव केवलं विनाश्यते । विषयावच्छिन्नप्रमेयचैतन्यनिष्ठस्याभानापादकस्यावरणस्य तु तत्रान्तःकरणवृत्त्यभावान्न विनाशः । तथा च पीतः शङ्ख इति भ्रमकाले श्वैत्यानुमितावन्तःकरणवृत्त्यासत्त्वापादकस्यावरणस्य नाशे शङ्खे श्वैत्यमस्तीत्याकारकः प्रत्ययः स्यान्न तु तत्र तदा श्वैत्यस्य भानम् । अभानापादकस्यावरणस्य सत्त्वात् । अतस्तदानीं शङ्खे श्वैत्यं स्यान्नाम न त्विदानीं तद्भाति इति व्यवहारः । अत्रार्थे वार्तिककृत्संमतिमाह—तदुक्तमिति । परोक्षज्ञानत इति । मूलाज्ञानं हि स्वपरिणामविशेषेणासत्त्वापादकमभानापादकं चेत्यावरणद्वयं जनयति । तत्र मूलाज्ञानगतं यदसत्त्वापादकावरणहेतुत्वं तदेव केवलं परोक्षज्ञानेन विनश्यति । प्रत्यक्षज्ञानेन त्वभानापादकावरणहेतुत्वमपि विनश्यतीत्यर्थः । सोपाधिकेति । सकारणकेत्यर्थः । तस्मादिति । उक्तप्रबन्धेनाध्यासे दोषाभावस्योपपादनादित्यर्थः । अन्तःकरणतादात्म्याध्यासात् । तादात्म्येनान्तःकरणाध्यासात् ।

ननु त्वन्मत इति । अनिर्वचनीयस्य ख्यातिः प्रतीतिः । शुक्तौ यद्रजतं प्रतीयते तन्न सत् । बाधायोगात् । दूरत्वान्धकारादिदोषापसरणे हि सति नेदं रजतमित्येवं तस्य बाधो दृश्यते । नापि तद्रजतमसत् । इदं रजतमिति प्रतीत्ययोगात् । असतस्तु दोषेणापि कथं प्रतीतिः स्यात् । तथा च तत्सद्रूपेणासद्रूपेण च निर्वक्तुमशक्यत्वात्सदसदित्येतदुभयविलक्षणमनिर्वचनीयमित्युच्यते । तादृशस्य च तस्य कार्यस्योपादानकारणमपि कार्यसदृशमवश्यं वाच्यम् । तच्च

---

१ ग—षयव्यापारजन्यत्वेन विषयान्तःकरणोभयजन्यत्वेन तदुभय । २ छ ज झ—कर्षव्यापारजन्यत्वेन विषयान्तःकरणजन्यत्वेन मदुभय । ३ ग—त्तत्र तद्व्य । ४ ग—रणानिवृत्त्या च सोपाधिकसाक्षात्कारिभ्रमानिवृ । ५ झ—त्कारभ्रमा । ६ ख—स्यात्मनो । ७ ङ—ये च कर्तृ ।

आत्मन्यध्यस्यन्ते ते[1] अनिर्वचनीयास्तत्रोत्पद्यन्त[2] इति वाच्यम् । तथा च व्यावहारिकप्रातीतिकभेदेन कर्तृत्वभोक्तृत्वादीनां[3] द्विधावभासः स्यात् । न स्यात् । तादात्म्याभिमानेनाविवेकात् । सकलधर्मविशिष्टस्यैवान्तःकरणस्यात्मन्य-ध्यस्तत्वेन[4] द्वयाभावाद्वा ।

तस्मादेकस्यात्मन[5] उपाधिभेदेन[6] प्रमात्रादिर्व्यवस्थोपपत्तेर्न सौगतमता-पत्तिर्न वा विरोधः । अन्या अपि व्यवस्थाः स्पष्टतरमुपरिष्टादुपपादयिष्यन्ते । तस्माज्ज्ञानरूपस्यात्मनः[7] सुषुप्तावव्यभिचारित्वादहेन्द्रियादीनां च व्यभिचारि-त्वाद् दृश्यत्वाच्च तत्र तत्रात्मबुद्धिस्तेषां तेषां वादिनां[8] भ्रान्तिरेवेत्यौपनिषदमेव[9] मतं प्रमाणमिति सिद्धम् ॥ १ ॥

---

मूलाज्ञानस्यावस्थाविशेषः । अस्य चावस्थाविशेषभूतस्याज्ञानस्य शुक्तिज्ञानेन विनाशात्तत्कार्यस्य रजतस्यापि नाशः । प्रातीतिकं चेदं रजतमन्यथा प्रतीयमा-नाद् व्यावहारिकाद्रजतात्पार्थक्येन प्रतीयते न तु तदभेदेन । तथा प्रकृते कर्तृत्वा-दयो धर्मा आत्मन्यारोपिताश्चेत्तेषां प्रातीतिकानामनिर्वचनीयानां धर्माणा-मात्मनि प्रतीतिः स्यात् । अन्तःकरणनिष्ठानां तु व्यावहारिकाणां तेषा-मन्तःकरणे प्रतीतिः स्यात् । एवं च व्यावहारिकप्रातीतिकभेदेन धर्माणां मिथो भेदात्पार्थक्येन प्रतीतिद्वयेन भाव्यम् । स्फटिकगतरक्तिमाभासश्चात्र निदर्श-नम् । यथा जपाकुसुमगतरक्तिमापेक्षया पार्थक्येन तत्संनिकृष्टे स्फटिके रक्तिमा दृश्यते तद्वदित्याशयः । अविवेकादिति । यथा जपाकुसुमस्फटिकयोर्भेदग्रहो भवति तथात्रात्मान्तःकरणयोर्धर्मिणोर्भेदाग्रहेण धर्मयोरपि भेदग्रहो न भवतीति भावः । सकलेति । अन्तःकरणधर्माणां कर्तृत्वभोक्तृत्वादीनां भेदे-नात्मन्यध्यास इति पक्षं गृहीत्वा पूर्वमुक्तम् । अधुना तु धर्मविशिष्टस्यान्तः-करणस्यैवाभेदेनात्मन्यध्यास इति पक्षं गृहीत्वोच्यते । यथा कदाचिज्जपाकुसुम-संनिकृष्टं रक्तं स्फटिकं दृष्ट्वा जपाकुसुमस्य केनचिद् व्यवहितत्वाददर्शने स्फटिक एव रक्तजपाकुसुमबुद्धिर्जायते तद्वत् । द्वयाभावाद्वेति । कर्तृत्वादि-धर्माणां व्यावहारिकप्रातीतिकभेदेन रूपद्वयाभावादित्यर्थः ।

उपसंहरति-तस्मादिति । यदुक्तं प्राक्पूर्वपक्षिणा ( पृ. ३०-पं. ३ ) "एक-स्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा । अविरोधाभ्युपगमे वा सौगतमतापत्तिः" इति तत्सोपपत्तिकं निरस्तमिति भावः । प्रथमपद्यार्थमुप-संहरति-तस्माज्ज्ञानरूपस्येति ॥ १ ॥

---

१ ङ-ते चानिर्व । २ झ-द्यन्ते । तथा च । ३ ग-नां द्वेधा । ४ छ-स्तत्वेनैव द्वया । ५ क ख ज झ-स्याप्यात्मन । ६ ङ च छ ज झ-दिभेदव्यव । ७ झ-स्माज्ज्ञानरू । ८ ख-स्याप्यात्म । ९ ख छ ज झ-भ्रान्तिः । औप ।

स्यादेतत् । आत्मनो निर्धर्मकत्वे प्रमात्रादिव्यवहारस्याध्यासमूलत्वे[१] च ब्राह्मणो यजेतेत्येवमादीनां शास्त्राणामप्रामाण्यप्रसङ्गः । अकर्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः । वेदाप्रामाण्ये च कुतो ब्रह्मसिद्धिरपि । तस्य तन्मात्रगम्यत्वात् । शास्त्रयोनित्वात् ( ब्र० सू० १।१।३ ) इति न्यायात् । तथा च वेदप्रामाण्याय

---

द्वितीयश्लोकमवतारयति-स्यादेतदित्यादिना । स्यादेतदिति शङ्काकारोक्तिः । एतच्छब्देन पूर्वोक्तस्य परामर्शः । सिद्धान्तिना पूर्वं यदुक्तमेतदास्तां नामेत्यर्थः । अधुनान्यद्विचार्यत इति शेषः । आस्तां नामेत्यनेन सिद्धान्त्युक्त उत्तरदानासामर्थ्यादर्धाङ्गीकारः सूच्यते । आत्मन इति । आत्मा निर्धर्मक इति शिवः केवलोऽहमित्यत्र प्रस्थापितम् । निर्धर्मकत्वान्न ज्ञातृत्वम् । ज्ञातृत्वाभावान्न कर्तृत्वम् । ज्ञातैव हि लोके कार्यकारी भवति । कर्तृत्वाभावाच्च न भोक्तृत्वम् । ब्राह्मणो यजेतेति वाक्यं हि स्वर्गादिकं किंचित्फलमभिसंधाय ब्राह्मणमुद्दिश्य यागं विधत्ते । आत्मनश्च भोक्तृत्वाभावान्न फलाभिसंधिः । निर्धर्मकत्वाच्च नात्मा ब्राह्मणः । अकर्तृत्वादनधिकारित्वाच्च न यागं कर्तुं समर्थः । यागस्य क्रियाविशेषत्वात् । तथा च ब्राह्मणो यजेतेत्यादिवाक्यानां निर्विषयत्वादप्रामाण्यप्रसङ्गः । अथ मूलाविद्या तत्कार्यमन्तःकरणादिकमात्मा चेत्यनयोर्भेदाग्रहात्प्रमातृत्वकर्तृत्वभोक्तृत्वब्राह्मणत्वादयो धर्मा आत्मन्यध्यस्ता इति तादृशमात्मस्वरूपमुद्दिश्य ब्राह्मणो यजेतेत्यादिविधीनां प्रवृत्तिरिति चेद्धन्त घट्टकुटीप्रभातन्यायः । श्रुतीनां प्रामाण्यसंरक्षणाय प्रवृत्तस्य नितरां तदप्रामाण्यं गले पतितं भवति । शुक्तिकां रजतमिति पश्यंस्तादृशरजतस्यालंकारं चिकीर्षंश्चेत्येतावुभावपि दूषितनेत्रौ । तयोश्चाद्यापेक्षया दृढभ्रमो द्वितीयोऽतिरिच्यते । आदौ तावदत्र स्वस्वरूपाज्ञानेन भ्रान्ता जीवाः । तथाविधानपि च तानुद्दिश्य प्रवृत्ता श्रुतिर्भ्रान्ततरा स्यादिति । ननु भवतु नाम श्रुतेरप्रामाण्यं का हानिरद्वितीयात्मवादस्येति चेत्तत्राह-वेदाप्रामाण्य इति । यच्च प्राणिमात्रेणाहमित्येवमात्मस्वरूपमनुभूयते तन्न वास्तविकमात्मस्वरूपम् । यच्च वास्तविकमात्मस्वरूपं सिद्धान्त्यभिमतं तन्न प्रत्यक्षेणानुभूयते । न तावद् बाह्यप्रत्यक्षं तत्र प्रसरति । रूपादिगुणराहित्यात् । नाप्यान्तरम् । अन्तःकरणस्य या शक्तिस्तस्याः स्वोपजीव्येनवकाशात् । न हि सूर्येण प्रज्वालितोऽयस्कान्तः सूर्यं प्रज्वलयितुं प्रभवति । यन्मनसा न मनुते ( के० १।५ ) इति श्रुतेश्च । नाप्यनुमानेनात्मस्वरूपं ज्ञातुं शक्यते । असङ्गेऽचिद्रूप आत्मनि तद्व्याप्यलिङ्गाभावात् । नाप्युपमानेन । निर्धर्मक आत्मनि सादृश्यप्रयोजकसाधारणधर्मासंभवात् । तथा च केवलं श्रुतिगम्यमेव तत् । श्रुतिरपि नाहत्य तत्प्रतिपादयितुं शक्नोति । किं तु लक्षणया निषेधमुखेन वेत्यन्यदेतत् । शास्त्रयोनित्वात् ( ब्र० सू० १।१।३ ) इति सूत्रेणाप्येतदेवोच्यते ।

१ ड—मूलकत्वे । ; छ—मूलत्वे ब्रा । २ ग—त्वेन ब्रा । ३ ग—ण्यार्थं प्र ।

प्रमात्रादिव्यवहारस्य सत्यत्वमभ्युपेयमित्याशङ्क्य किं तत्त्वज्ञानात्पूर्वमप्रामाण्य-मापाद्यत ऊर्ध्वं[1] वा । तत्राद्ये[2] सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावान्निष्प्रत्यूहं प्रामाण्यम् । द्वितीये त्विष्टापत्तिरेवेत्याह[3]—

**न वर्णा न वर्णाश्रमाचारधर्मा**
**न मे धारणाध्यानयोगादयोपि ।**
**अनात्माश्रयाहंममाध्यासहानात्**
**तदेकोवशिष्टः शिवः केवलोहम् ॥ २ ॥**

न वर्णा इति । वर्णा ब्राह्मणत्वादयः[4] । आश्रमा ब्रह्मचर्यादयः । आचाराः स्नानशौचादयः । धर्मा ब्रह्मचर्यगुरुसेवादयः । अत्र द्वंद्वद्वयगर्भषष्ठी-

---

जन्माद्यस्य यतः ( ब्र० सू० १।१।२ ) इति पूर्वसूत्रे यद् ब्रह्मणो जगज्जन्मादि-कर्तृत्वं लक्षणमुक्तं तत्कथमवगम्यत इत्याकाङ्क्षायां तत्र हेतुप्रदर्शनपरमिदं सूत्रम् । शास्त्रं श्रुतिस्तदेवैकं योनिः प्रमाणं यस्य तत्त्वादिति तदर्थः । पूर्वोक्त-रीत्याध्यस्तात्मस्वरूपोद्देशेन प्रवृत्तत्वाच्छ्रुतेरप्रामाण्यं चेत्तादृशश्रुतिप्रतिपादित-मात्मस्वरूपमपि सत्यतया नावगन्तुं शक्यत इत्याशयः । किं तत्त्वज्ञानादिति । निर्विषयत्वेन बाधितविषयत्वेन वा हेतुभूतेन श्रुतेर्यदप्रामाण्यमाशङ्क्यते तत्त-त्त्वज्ञानात्पूर्वं न संभवति । तदानीं तस्य हेतोरज्ञातत्वात् । निर्विषयत्वं बाधि-तविषयत्वं वा ज्ञातमेवाप्रामाण्ये हेतुः स्यान्न वस्तुभूतम् । न हि स्वाप्नस्य हस्त्या-दिप्रत्यक्षस्याप्रामाण्यं स्वप्न एव प्रत्येति कश्चित् । तथा च तत्त्वज्ञानात्पूर्वमव्याहतो लोकव्यवहारो दृश्यत इति न तदानीं निर्विषयत्वं बाधितविषयत्वं वा ज्ञातं भवतीत्यतो नाप्रामाण्यप्रसङ्गः । इष्टापत्तिरिति । अप्रामाण्यस्येति शेषः । अप्रामाण्यं चात्र प्रामाण्याभावमात्रम् । तच्च यथार्थज्ञानजनकत्वाभावरूपम् । ननु प्रामा-ण्यप्रतिद्वंद्विभूतं भ्रान्तोक्तस्यायं सर्प इति वाक्यस्येवायथार्थज्ञानजनकत्वरूपम-प्रामाण्यम् । यतस्तत्त्वज्ञानोत्तरं श्रुतेर्विषया बाधिता इत्येतावदेव न तु बाधित-त्वेन ज्ञानम् । तदानीं ज्ञातृज्ञेयभावस्यैव लुप्तत्वात् । एवं च श्रुतिर्मिथ्याभूतार्थप्रति पादिकेत्यापादनं कस्यामप्यवस्थायां लेशतोपि न स्पृशतीति भावः ।

अत्र द्वंद्वद्वयेति । वर्णाश्चाश्रमाश्च वर्णाश्रमाः । आचाराश्च धर्माश्चाचार-धर्माः । वर्णाश्रमाणामाचारधर्मा वर्णाश्रमाचारधर्मा इति विग्रहः । एवं सति वर्णा-नामाश्रमाणां चेत्युभयेषामप्याचारे धर्मे चान्वयो लभ्यते । तथा च वर्णाचाराणां वर्णधर्माणामाश्रमाचाराणामाश्रमधर्माणां च निषेधो लभ्यते । ननु तथाप्यत्रा-श्रमाणां निषेधो न लभ्यते । वर्णानां तु न वर्णा इति वाक्यान्तरेण सिद्ध इति

---

१ ङ—माण्यं प्रतीयत उर्ध्वं । २ ज—द्ये यावदविद्याऽनिवृत्ति व्यवस्थायामुपपादितत्वा-त्सर्वेषां । ३ छ—त्तिरित्या । ४ ख ङ च छ ज झ—णक्षत्रियवैश्यशूद्राः । आश्रमा ब्रह्मचारिगृहस्थ-वानप्रस्थभिक्षवः । आचाराः ।

तत्पुरस्तेन वर्णानामाचारधर्माश्चाश्रमाणा[1]मप्याचारधर्माश्च लभ्यन्ते । धारणा[2] बाह्यविषयत्यागेन मनःस्थैर्यम् । ध्यानं परमात्मचिन्तनम् । योगश्चित्तवृत्तिनिरोधः । आदिशब्देन श्रवणमननादयो[3] गृह्यन्ते । सर्वेषां ज्ञानोत्तरका[4]लमसत्त्वे हेतुमाह-अनात्माश्रयाहंममाध्यासहानादिति । अनात्मा आत्म[5]विरोधिनी अविद्या । तदाश्रयस्तदुपादानो योऽहंकारममका[6]राद्यध्यासस्तस्य समूलस्यापि तत्त्वज्ञानेन[7] हानात्तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः ॥ २ ॥

वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमात्रमूलत्वेन[8] मिथ्यात्वं द्रढयितुं तद्व्यतिरेके सुषुप्तौ[9] तद्व्यतिरेकमाह[10]-

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

न मातेति । माता जनकस्त्री[11] । पिता जनकः पुमान् । देवा इन्द्रादय आराध्याः । लोकास्तदाराधनफलानि[12] स्वर्गादीनि । वेदा[13] लौकिकप्रमाणा-

---

चेन्न । आश्रमाणां वर्णधर्मत्वेन निषेधासिद्धेः । न वर्णा इत्येव सिद्धौ पुनर्न वर्णाश्रमेत्यादिनिषेधोक्तिः स्पष्टार्था सत्यत्र निषेधस्यासंकुचितत्वबोधनाय । तदाह-सर्वेषामिति । आत्मविरोधिनी । आत्मसाक्षात्कारविरोधिनीत्यर्थः ॥ २ ॥

वर्णाश्रमादीति । वर्णा ब्राह्मणक्षत्रियादयः । आश्रमा ब्रह्मचर्यगार्हस्थ्यादयः । तन्मूलका ये व्यवहारा अयं ब्राह्मणोऽयं क्षत्रियोऽयं ब्रह्मचार्ययं गृहस्थो ब्राह्मणो यजेत ब्राह्मणो न हन्तव्य इत्येवमादयस्ते मिथ्याज्ञानमूलका एवेत्यतो मिथ्याभूता एव । ईदृशव्यवहाराणां मिथ्याज्ञानमूलकत्वं चाहं मनुष्य इत्यादिप्रतीतेर्भ्रान्तिरूपत्वोक्त्या पूर्वं (पृ.३५-पं.३) प्रसाधितमेव । तत्रेदृशव्यवहारमिथ्याज्ञानयोः कार्यकारणभावः सति मिथ्याज्ञाने एतादृशव्यवहार इत्यन्वयमुखेनोपपादितः । इदानीं त्वसति मिथ्याज्ञाने एतादृशव्यवहाराभाव इति व्यतिरेकमुखेणोपपादयति । अन्वयेन व्यतिरेकेण चोपपादितः कार्यकारणभावो दृढीभवति ।

न मातेति । इयं मातायं पितेत्येवं किमपि सुषुप्त्यवस्थायां लोका न ब्रुवन्ति । तत्र हेतुर्निरस्तेत्यादि । जनकस्त्रीति । कर्मधारये पूर्वपदे पुंवद्भावः ।

---

१ च—णामाचार । २ ग—णाद् ब्रह्माणि बाह्य । ३ झ—योपि गृह्य । ४ ग झ—कालेऽसत्त्वे ५ छ—आत्मबोधविरो । ६ ख—राध्यास । ७ च—न नाशात्तत्प्र । ८ झ—नमूलकत्वेन । ९ ख—सौ ध्याति । १० ज—क इत्याह । ११ झ—जनिका स्त्री । १२ झ—नफलानि स्व । १३ ग ङ च छ ज—दा अलौकिकहिता ।, झ—दा हिताहित ।

प्रतिपन्नहिताहितसाधनतत्प्रतिपादकानि अप्रतिपादकानि च प्रमाणवाक्यानि । यज्ञाः स्वर्गादिसाधनीभूता ज्योतिष्टोमादयः । तीर्थं यज्ञादिसाधनीभूतः कुरुक्षेत्रादिदेशः । एवं पापकर्मसाधनान्यप्युपलक्षणीयानि । सर्वेषां देहाभिमानमूलकत्वात्तदभावे स्वतः संबन्धाभावादविद्यमानतेत्यर्थः ।

तथा च सुषुप्तिं प्रकृत्य श्रुतिः — अत्र पिता अपिता भवति माता अमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहा अभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽ

---

जनयित्रीत्यर्थः । एवं पापकर्मेति । अहितोपदेष्टा नरको नास्तिकमन्था हिंसादिकर्म श्मशानादिदेश इत्यादीनि पापकर्मसाधनानि बोध्यानि । सर्वेषामिति । मातृत्वं हि जनकस्त्रीत्वम् । जनकत्वं च जन्यनिरूपितम् । जन्यश्च नात्मा किं तु देह इत्यात्मनि देहतादात्म्याभिमानेनैव मातृत्वादिकं संपादनीयं भवति । देहाभिमानेनैव चेन्द्रादय आराध्या भवन्ति । स्वर्गादिफलानि च देहाभिमानेनैव भोक्तव्यानि । कर्माणि च देहाभिमानेनैव कर्तव्यानि । देहाभिमानाभावे तु स्वतोऽसङ्गस्यात्मनो न मात्रादिभिः सह कथमपि संबन्ध इति तदानीं न काचित्तस्य माता नापि कश्चित्पितेति वस्तुस्थितिः ।

आचार्योक्तेऽर्थे श्रुतिं प्रमाणयति—तथा चेति । अत्र पितेति । सुषुप्तौ देहाभिमानशून्यस्य जीवात्मनोऽयं मे पितेत्येवं वृत्तिर्न भवति । पिता च जनकः पुमान् । जन्यजनकभावश्च कर्ममूलकः । कर्म च जीवात्मनो न स्वरूपतः संभवति । किं तु देहोपाधिकं देहाभिमानाधीनम् । तथा च सुषुप्त्यवस्थायां देहाभिमान एव नष्ट इति कथं तन्निरूपितं पितुः पितृत्वं स्यात् । तुल्यन्यायत्तदानीं नष्टाभिमानस्यैतन्निरूपितं पुत्रत्वमपि नास्ति । एवं माताप्यमाता भवति । उक्त एव हेतुः । उपलक्षणं चैतद् भार्यापुत्रादीनां सर्वेषाम् । नष्टाभिमानस्य हि जीवात्मनस्तदानीं का भार्या स्यात्को वा पुत्रः स्यात् । कर्मणा प्राप्याः स्वर्गादयो लोका अपि तदानीं कर्मसंबन्धाभावादलोका एव । कर्मणाऽऽराधनीयाः कर्माङ्गभूता देवा अपि तदानीमदेवा एव । कर्मसंबन्धिनो मन्त्रब्राह्मणलक्षणा वेदा अप्यवेदा एव तदानीम् । तथा कर्मविशेषकर्ता यष्टा अपि तदानीमयष्टा एव । न केवलं सुषुप्त्यवस्थायामयं जीवात्मा शुभकर्मशून्यः । किं तर्ह्यशुभैरत्यन्तघोरैरपि कर्मभिस्तदानीमसंबद्ध एव । शुभकर्मण इवाशुभकर्मणोऽपि देहाभिमानमूलकत्वस्याविशेषेणोभयोस्तुल्ययोगक्षेमत्वात् । अतः स्तेनश्चोरोऽप्यस्तेनो भवति । भ्रूणो गर्भः । तद्विनाशकोऽपि तदानीमभ्रूणहैव । न केवलं

---

१ छ ज झ—नि चापौरुषप्रमाण । २ ङ च झ—धनभूता । ३ स ङ च छ ज झ—मूलत्वात । ४ ज—वेऽत्र स्वतः । ५ ख—श्रुतिरपि—अत्र ।

तापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ( बृ० ४।३।२२ ) इत्याद्या अभिमानाभावे सर्वानर्थनिवृत्तिमनुवदन्ति ।

ननु सर्वव्यवहाराभावे शून्यतैव स्यात् । नेत्याह—निरस्तातिशून्यात्मकत्वादिति । निरस्तमतिशून्यात्मकत्वं यस्मात्तत्तथा । भावप्रधानो निर्देशः । तस्य सुषुप्तिसाधकत्वात्पुनरुत्थानानुपपत्तेश्च । अविनाशी वा अरेयमात्मा अनु-

---

प्रत्युत्पन्नेनैव कर्मणा तदानीं विनिर्मुक्तः । किं तु जन्मान्तरोपार्जितेनाप्यत्यन्तनिकृष्टजातिप्रापकेणापि कर्मणा तदानीं विनिर्मुक्त एव । अतश्चाण्डालोप्यचाण्डाल एव सुषुप्तौ । ननु तदानीं चाण्डालं न स्पृशेदिति निषेधोनवकाश इति स्पर्शेपि दोषाभावः स्यादिति चेद्—भ्रान्तोसि । त्यक्तदेहाभिमानं देहसंबन्धरहितं केवलं जीवात्मानं स्प्रष्टुं यदि तेस्ति सामर्थ्यं कामं स्पृश नैव दोषः स्यात् । तथा पौल्कसोप्यपौल्कसस्तदानीम् । शूद्रेण ब्राह्मण्यामुत्पादितश्चाण्डालः । शूद्रेण क्षत्रियायामुत्पादितः पौल्कसः । श्रमणः संन्यासी । तापसो वानप्रस्थः । उपलक्षणमेतद् ब्रह्मचारिगृहस्थयोः । सुषुप्त्यवस्थायामाश्रमलक्षणैः कर्मभिरसंबन्धान्न केनाप्याश्रमेणाश्रमी तदानीं भवति । किं बहुनोक्तेन । पुण्येन शास्त्रविहितेन कर्मणा तथा पापेन निषिद्धेन कर्मणानन्वागतमसंबद्धं तदानीमात्मस्वरूपम् । यतस्तदानीं हृदयस्य सर्वाञ्छोकानतिक्रान्तो भवत्यात्मा । शोकशब्देन तन्मूलभूतः कामोत्राभिलप्यते । इष्टवस्तुविषयकः काम एव हि तादृशोष्टवस्तुवियोगे शोकरूपेण परिणतो भवति । अतस्तदानीं कामस्यैवाभावात्तन्मूलकेन पुण्येन पापेन च कर्मणा न संबन्धो भवतीत्यर्थः ।

निरस्तमिति । अतिशून्यात्मकत्वमतिशून्यस्वरूपत्वम् । तन्निरस्तं यस्माच्चैतन्यात्तादृशं निरस्तातिशून्यात्मकत्वं शून्यविरोधिस्वरूपं चैतन्यम् । तस्य भावो निरस्तातिशून्यात्मकत्वत्वम् । तथा च निरस्तातिशून्यात्मकत्वत्वादिति वक्तव्ये द्वितीयत्वप्रत्ययस्यानुक्तिर्भावप्रधाननिर्देशाङ्गीकारेण । तस्य सुषुप्तीति । सुषुप्तौ शून्यताङ्गीकारे सुषुप्तेः स्वरूपलाभ एव न स्यात् । सुषुप्तिर्ह्यवस्थाविशेष इति सा कंचिदवस्थावन्तमाक्षिपति । अवस्थावन्तमन्तरेणावस्थाया दुर्वचत्वात् । तथा च तदानीं कश्चिदवस्थावानवश्यं स्वीकर्तव्यो भवति । किं च जागृतौ पुनः पूर्ववदुत्थानं दृश्यते । तदन्यथानुपपत्त्यापि सुषुप्तौ कश्चिदवस्थावान्कल्पनीयो भवति । अत्रार्थे श्रुतिं प्रमाणयति—अविनाशीति । अत्र भाष्यम्—विनष्टुं शीलमस्येति विनाशी । न विनाश्यविनाशी । विनाशशब्देन विक्रियोच्यते । अविनाशीत्यविक्रिय आत्मेत्यर्थः । अरे मैत्रेय्ययमात्मा प्रकृतोनुच्छित्तिधर्मा । उच्छित्तिरुच्छेदोन्तो विनाशः । उच्छित्तिर्धर्मोस्येत्युच्छित्तिधर्मा

---

१ ड—साक्षित्वात्पु ।

च्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्न तु तद् द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येत् ( बृ. ४।३।२३ ) इत्यादिश्रुतिभ्यश्चात्मचैतन्यस्य सुषुप्तौ न शून्यतेत्यर्थः । निराकृतमप्येतत्पुनरपि स्थूणानिखननन्यायेन निराक्रियते ।

यद्वा निरस्तमशनायाद्यतीतमद्वितीयमतिशून्यं[3] यद् ब्रह्म तदात्मकत्वात्[4] । तथा च श्रुतिः—यदा वै पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो

नोच्छित्तिधर्मा अनुच्छित्तिधर्मा । न अविक्रियालक्षणो नाप्युच्छेदलक्षणो विनाशोस्य विद्यत इत्यर्थ इति । अन्ये तु धर्मः स्वाभाविकं रूपम् । उच्छित्तिर्विनाशः । तद्विरुद्धानुच्छित्तिः सदास्तित्वम् । तदेवात्मनः स्वाभाविकं स्वरूपम् । तथा चाविनाशीति पदादस्य विनाशो न भवतीत्येव केवलं न मन्तव्यम् । किं त्वस्य स्वरूपमेव विनाशविरोधीति । अतस्तस्यासत्त्वशङ्का लेशतोप्यवकाशं न लभत इति श्रुतितात्पर्यमाहुः । मात्रासंसर्ग इति । मीयन्त इति मात्रा विषयाः शब्दादयः । तैः सहास्यात्मनः सुषुप्तौ संसर्गो नास्ति । मनस इन्द्रियाणां च तदानीं वृत्तिशून्यत्वात् । एतदेव च तदानीं शब्दाद्युपलम्भाभावे कारणम् । न त्वात्मन एवासत्त्वम् । श्रुतावस्येति पदेनात्मानमनूद्य केवलं विषयसंसर्गस्य निषिद्धत्वात् । यद्वै तदिति । पश्यन्वै इत्यत्र वै इत्यव्ययमवधारणे । सुषुप्त्यवस्थायामयं जीवात्मा यन्न पश्यति तद्वस्तुतः पश्यन्नेव न पश्यति । पश्यन्नेवेत्यत्र हेतुर्न हि द्रष्टुरिति । द्रष्टुर्दृष्टेर्लोपो न कथंचिदपि संभवति । तर्हि कुतो न पश्यतीति चेत्तत्राह—न तु तदिति । दृश्याभावमूलको हि दृशेरभावः केवलं प्रतिभासते न तु वस्तुवृत्त्यैव तदा दृशेरभावः । चिद्रूपेण प्रकाशमान एव सन्केवलं चाक्षुषवृत्त्यभाववानित्यर्थः । निराकृतमपीति । न भूमिर्न तोयम् ( पृ. १४ पं. ६ ) इति श्लोके न खमित्यनेन शून्यवादस्याचार्यैर्निराकृतत्वादत्र निरस्तातिशून्यात्मकत्वादित्येवं पुनस्तस्य निराकरणं दृढप्रतिपत्तये । यथा निखातोपि स्तम्भो दृढप्रतिपत्तये पुनः पुनश्चाल्यते तद्वत् ।

अथ वा निरस्तातिशून्यात्मकत्वादित्यनेन न शून्यवादो निराक्रियते । तस्य न खमित्यनेन प्रागेव कृतत्वात् । किं तु जीवात्मनः सुषुप्त्यवस्थायां केवलमद्वितीयब्रह्मात्मकत्वं बोध्यत इत्येवं पक्षान्तरमाह—यद्वेति । अशनायादीति । अशनायापिपासे शोकमोहौ जरामृत्यू चेत्येवं यदूर्मिषट्कं प्रसिद्धं तद्रहितम् । खं ब्रह्म (छा.४।१०।५) इति श्रुतौ खशब्दस्य ब्रह्मवाचित्वदर्शनादत्रातिशून्यपदमपि ब्रह्मवाचि स्वीक्रियत इति भावः । यदा वै पुरुष इति । नामेति प्रसिद्ध्यर्थेऽव्ययम् ।

१ ङ च—श्यतीत्यादिश्रुति । २ ग—सुप्तौ । ३ छ ज—न्यं निर्धर्मकं यद् ब्र । ४ च—त्वात्तथा । तथा च ।

भवति (छा. ६।८।१) तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ( बृ. ४।३।२१ ) इति । तेन जगत्कारणीभूतसर्वज्ञसर्वशक्तिपरिपूर्णानन्दबोधरूपेण ब्रह्मणा सहैकत्वादसंसार्येव जीव इति सिद्धम् ॥ ३ ॥

एवं तावत्त्रिभिः श्लोकैर्वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वंपदार्थो निर्धारितः । संप्रति तत्पदार्थस्तथैव निर्धारणीयः । तत्र निराकार्या वादिविप्रतिपत्तयः प्रदर्श्यन्ते । ननु न ब्रह्मणा सह जीवस्यैक्यमुपपद्यते । तथा हि । सच्छब्दवाच्यं जगत्कारणं ब्रह्म सदेव सौम्येदमग्र आसीत् ( छा. ६।२।१ ) इत्यादिवाक्येन प्रतिपादितम् । जगत्कारणं च प्रधानमचेतनमिति सांख्याः । पशुपतिरेव जग-

यदायं पुरुषः स्वपिति तदा सता सद्रूपेण ब्रह्मणा संपन्न एकीभूतो भवति । स्वं स्वकीयं यत्परमार्थसत्यं सद्रूपं तदपीतोऽपिगतो भवतीत्यर्थः । तद्यथेति । यथा प्रिययेष्टया स्त्रिया संपरिष्वक्तः सम्यगालिङ्गित एकीभूत इव संस्तस्मिन्क्षणे बाह्यमान्तरं च किंचन न वेत्ति एवमेव सुषुप्त्यवस्थायामयं जीवात्मा प्राज्ञेन परमात्मना संपरिष्वक्त एकीभूतो बाह्यमान्तरं च किंचन न वेत्तीत्यर्थः ॥ ३ ॥

चतुर्थश्लोकमवतारयति-एवं तावदिति । अयमभिप्रायः—तत्त्वमसीति श्रुतिप्रतिपादितं जीवब्रह्मैक्यमत्र प्रदर्शयितव्यमित्याचार्याणामुद्देशः । तच्चैक्यं जीवे ब्रह्मणि च प्रतीयमानानां धर्माणामारोपितत्वाङ्गीकारे सत्येव संगच्छते । जीवब्रह्मणोरन्यतरत्रारोपितत्वाङ्गीकारेणापि न निर्वाहः । एकत्र धर्माणां सत्यत्वे तस्य निर्धर्मकेण सहात्यन्ताभेदस्य दुर्वचत्वात् । अत उभयत्रापि तत्साधनीयं भवति । तत्र श्लोकत्रयेण जीवस्यारोपितधर्मकत्वं प्रसाधितम् । अधुना ब्रह्मणि तत्साधनीयमित्येतदर्थं न सांख्यमित्यादिश्लोकप्रणयनमिति । सदेवेति । इदं पुरो दृश्यमानमखिलं जगदग्रे सृष्टेः पूर्वं सन्मात्ररूपमेवासीदित्यर्थः । यथा योऽयं घटः स पूर्वाह्णे मृत्तिकैवासीदित्युक्तेऽस्य घटस्य मृत्तिकैव कारणमित्यवगम्यते तथास्यां श्रुतौ सतो जगत्कारणत्वमवगम्यते । सद्रूपं च ब्रह्मैवेति जगत्कारणत्वेन ब्रह्मप्रतिपादिकेयं श्रुतिरिति सिद्धान्तः । प्रधानकारणवादिनः सांख्यास्तु जगत्कारणत्वेन प्रधानप्रतिपादिकैवेयं श्रुतिः । त्रिगुणात्मकमचेतनं प्रधानमेव जगत्कारणम् । ब्रह्म तु तद्व्यतिरिक्तं किंचिन्नास्त्येवेति वदन्ति । तन्मते ब्रह्मैव नास्तीति दूर एव जीवब्रह्मैक्यवादः । पाशुपतमतमाह-पशुपतिरेवेति । पशुपतिरेव ब्रह्म । किं तु स जीवस्योपास्य इत्युपास्योपासकयोर्भेदावश्यंभावान्नास्मिन्मते जीवब्रह्मैक्यम् । किं त्वत्यन्तभेद एव । तथा पाञ्च-

१ ङ—वं त्रिभिः । २ च—पेकस्त्वंप । ३ च ज झ—र्शयितव्यः ।-तदर्थंनिरा । ४ छ—त्तयो दृश्ये ।

त्कारणं स च चेतनोपि जीवाद्भिन्नस्तदुपास्य एवेति पाशुपताः। भगवान्वासुदेव ईश्वरो जगत्कारणम्। तस्मादुत्पद्यते संकर्षणाख्यो जीवः। तस्मान्मनः प्रद्युम्नः। ततोहंकारोऽनिरुद्धः। तेन कार्यत्वाज्जीवस्य तेन सह न ब्रह्मणो वासुदेवस्यात्यन्ताभेद इति पाञ्चरात्रिकाः। परिणामी नित्यः सर्वज्ञो भिन्नाभिन्न इति जैनास्त्रिदण्डिनश्च। नास्ति सर्वज्ञत्वाद्युपेतं ब्रह्म। आम्नायस्य क्रियापरत्वेन तत्र तात्प-

रात्रिकमतेपि नात्यन्ताभेद इत्याह-भगवानिति। भगवान्वासुदेव एव ब्रह्म। स च षड्गुणपरिपूर्णः। ज्ञानबलवीर्यैश्वर्यशक्तितेजांसि षड्गुणाः। सामान्यरूपेण विशेषरूपेण च सर्ववस्तुविषयकः प्रत्ययो ज्ञानम् (१)। जगदुत्पादने श्रमाभावो बलम् (२)। जगत्प्रकृतित्वेपि पयसो दधिभावेनेव विकाराभावो वीर्यम् (३)। इच्छाया अप्रतिघात ऐश्वर्यम् (४)। जगन्मूलकारणभावः शक्तिः (५)। सहकार्यनपेक्षत्वं तेजः (६)। तस्माद्भगवतः सकाशात्संकर्षण उत्पद्यते। सर्वजीवाभिमानिनो जीवस्य संकर्षण इति संज्ञा। तस्माज्जीवात्प्रद्युम्न उत्पद्यते। सर्वमनोभिमानिनो मनसः प्रद्युम्न इति संज्ञा। तस्मान्मनसोऽनिरुद्ध उत्पद्यते। सर्वाहंकाराभिमानिनोहंकारस्यानिरुद्ध इति संज्ञा। जीवमनोहंकाराणां साक्षात्परम्परया च भगवत्कार्यत्वेन षड्गुणाश्रयत्वेपि न भगवतीव तेषु गुणानां निरतिशय उत्कर्षः। किं तु सामान्यत उन्मेषमात्रम्। तत्रापि जीवे ज्ञानबलयोरुन्मेषः। इतरे तिरोभूताः। मनसि वीर्यैश्वर्ययोरुन्मेषः। इतरे तिरोभूताः। अहंकारे शक्तितेजसोरुन्मेषः। इतरे तिरोभूताः। एवं जीवादिकस्य सर्वस्य जगतः कारणीभूतो भगवान्। कार्यकारणयोश्च नात्यन्ताभेदः। किं तु भेदसहकृतोऽभेदः। मोक्षपर्यन्तं भेदस्तदुत्तरमभेद इत्येवं कालभेदेन भेदाभेदयोराविरोधः। परिणामीति। जैनमते जीवात्मा तत्तच्छरीरानुसारेण शरीरपरिमाणो भवति। एतादृशस्वभाव एव देवोर्हन्परमेश्वरः। स च यथाकाममणुर्मध्यमो महान्वा भवति। तावतापि प्रवाहरूपेण नित्य एव। यथानेकघटानां तत्तद्व्यक्तिदृष्ट्या मिथो भेदो घटत्वदृष्ट्या चाभेदस्तथा जीवेश्वरयोर्व्यक्तिदृष्ट्या भेदश्चैतन्यदृष्ट्या चाभेदः। त्रिदण्डिनां मतेप्येवम्। तत्रायं विशेषः। जैना नास्तिका इति त्रिदण्डिनश्चास्तिका इति व्यवह्रियन्ते। त्रिदण्डिनश्च तार्किकवत्सर्वज्ञमीश्वरमभ्युपगच्छन्ति। सोपि चेश्वरः परिणामी नित्यो जीवाद्भिन्नश्चाभिन्नश्च। आस्तिकत्वाच्चैते श्रुतिं प्रमाणीकुर्वन्ति। अभेददृष्ट्या तत्त्वमसीति श्रुतिरुपपद्यते। भेददृष्ट्या च य आत्मनि तिष्ठन्निति श्रुतिरुपपद्यत इति। मीमांसकमतमाह-नास्तीति। ईश्वर एव नास्ति दूर एव तस्य जीवेन सह भेदोऽभेदो वा। कर्मैव जीवानां शुभाशुभं फलं दातुं प्रभवति। वेदराशिस्तु सर्वः प्राधान्येन कर्मप्रतिपादक एव। न तु मुख्यतस्तत्तात्पर्यविषयी-

१ ग—न्नः स उपा। २ ग च—सह ब्रह्मणो वासुदेवस्यात्यन्तभेद इति।; ङ—सह ब्रह्म। ३ ग च—णाभिनित्यः। ४ ग—यार्थपर।

याभावात् । किं तु वाचं धेनुमुपासीतेतिवत्सर्वज्ञत्वादिदृष्ट्या जगत्कारणं परमाण्वादि जीवो वोपास्य इति मीमांसकाः । अस्ति नित्यज्ञानादिमानीश्वरः सर्वज्ञः पृथिव्यादिकार्यलिङ्गानुमितः । स च जीवाद्भिन्न एवेति तार्किकाः । क्षणिकः सर्वज्ञ इति सौगताः । क्लेशकर्मविपाकाशयैरपरामृष्टो नित्यज्ञानादिरूपः प्रधानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एवेति पातञ्जलाः । अद्वितीयपरमानन्द एव ब्रह्म । तच्च जीवस्य वास्तवं स्वरूपम् । मायया च सर्व-

---

भूतं ब्रह्मादिकं किंचित् । यत्र च श्रुतौ सर्वज्ञस्योपासना प्रतीयते तत्र जगत्कारणभूतपरमाण्वादावेव सर्वज्ञत्वमारोप्य तदुपासनाप्रतिपादने श्रुतेस्तात्पर्यम् । जीवे सर्वज्ञत्वमारोप्य जीवोपासनायां वा । यथा वाचि धेनुत्वमारोप्य वागुपासना वाचं धेनुमुपासीतेति प्रतिपाद्यते तद्वत् । वैशेषिकमतमाह–अस्तीति । जीवस्य ज्ञानेच्छाप्रयत्ना अनित्याः । ईश्वरस्य तु नित्याः । स चेश्वरः सर्वज्ञः । ईश्वरे प्रमाणमनुमानं चेत्थम्–क्षितिजलादिकं सकर्तृकं कार्यत्वाद्घटवत् । अनेनानुमानेन क्षित्यादेः सकर्तृकत्वसिद्धौ तत्कर्तृत्वस्य जीवेष्वसंभवाज्जीवेभ्यो भिन्न ईश्वरः सिध्यति । अत एव च स सर्वज्ञः । इतरथा क्षित्यादिकर्तृत्वासंभवात् । सौगताः । बौद्धाः । जगति दृश्यमानं सर्वं वस्तु क्षणिकं दुःखं स्वलक्षणं शून्यमित्याकारकम् । रागद्वेषादिदोषैर्लेशतोऽप्यस्पृष्टं सर्ववस्तुविषयकं यत्क्षणिकं ज्ञानं तादृशज्ञानप्रवाह एवेश्वरः । स्वेनैव यल्लक्ष्यते तत्स्वलक्षणम् । घटादिकं सर्वमेव वस्तु व्यक्तिशः स्वेन स्वेन रूपेणैवालक्ष्यते । न त्वनेकघटाद्यनुगतया घटत्वादिजात्या किंचिदप्यालक्ष्यते । बौद्धैर्जातेरनङ्गीकारात् । क्षणिकादिभावनाचतुष्टयात्मकं दोषास्पृष्टं सर्वविषयकं चेत्येतद्विशेषणत्रयमध्य एकेनापि विशेषणेन रहितं यत्क्षणिकं ज्ञानं तादृशज्ञानप्रवाह एव जीवः । तथा चैतन्मते जीवेश्वरयोर्भेदः सिद्ध एव । पातञ्जलमतमाह–क्लेशेति । क्लिश्नन्तीति क्लेशा अविद्यादयः । विहितप्रतिषिद्धमिश्रभेदेन त्रिविधं कर्म । विपच्यत इति विपाकः कर्मफलम् । आशेरते चित्तभूमौ फलपाकपर्यन्तमित्याशयाः संस्काराः । एतैरविद्यादिभिः कालत्रयेऽप्यसंस्पृष्टो नित्यज्ञानस्वरूप ईश्वरः । प्रधानकार्येषु सर्वेषु पदार्थेष्वंशभूतो यः सत्त्वगुणस्तत्रायं प्रतिबिम्बितो भूत्वा तान्प्रकाशयतीत्येवं प्रकारेणायमीश्वरः सर्वज्ञः । उक्तविपरीतो हि संसारी जीवः । एतन्मतेऽपि जीवेश्वरयोर्भेद एव । अथ जीवेश्वरैक्यवादिनामद्वैतवेदान्तिनां मतमाह–अद्वितीयेति । विज्ञानानन्दमात्रस्वरूपं ब्रह्म । एतदेव च जीवेश्वरयोर्वास्तवं स्वरूपम् । सर्वं च जगन्मायया कल्पितमेव । सर्वमेव कल्पितं चेदर्थादेव

---

१ ङ च छ ज ञ–वाग्धेन्वादिवत्सर्व । २ ञ–मान्सर्वज्ञः । ३ ज–मृष्टः पुरुषविशेषे नित्यज्ञानरूपः । ४ ग च छ ञ–ज्ञानरूपः । ५ ग–रिविल । ६ ङ–वं रूपम् । ७ ञ–या सर्वं ।

ज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेत्यौपनिषदाः । एवं वादिविप्रतिपत्तिभिः संदिग्धे तत्पदार्थे औपनिषदपक्षपरिशेषेण तन्निर्णयायाह भगवान्—

**न सांख्यं न शैवं न तत्पाञ्चरात्रं**
**न जैनं न मीमांसकादेर्मतं वा ।**
**विशिष्टानुभूत्या विशुद्धात्मकत्वात्**
**तदेकोवशिष्टः शिवः केवलोहम् ॥ ४ ॥**

न सांख्यमिति । आदिशब्देनानुक्तानां संग्रहः ।

न तावदचेतनं प्रधानं जगदुपादानम् । तदैक्षत बहु स्यां प्रजायेय ( छा. ६।२।३ ) इतीक्षणपूर्वकसृष्टिश्रवणात् । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) इति जीवात्मत्वव्यपदेशात् । येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् (छा. ६।१।३) इति यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति (मु. १।१।३) इति चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्प्रधान-

---

तादृशसर्वनिरूपितं सर्वज्ञत्वं सर्वकर्तृत्वं च ब्रह्मणि मायिकमेव । तादृशमायिकधर्मावेशिष्टं ब्रह्मवेश्वर इत्युच्यते । एवं मायिककिंचिज्ज्ञत्वादिधर्मविशिष्टं ब्रह्मैव जीव इत्युच्यते । तथा चैतन्मते जीवेश्वरयोर्वास्तवं स्वरूपमेकमेवेत्येतन्मते जीवेश्वरयोरभेदः सिध्यति । उपादानं निमित्तं चेति । मायाविशिष्टत्वेनोपादानकारणं मायासहकारेण निमित्तकारणमिति बोध्यम् ।

न सांख्यमिति । मीमांसकादेरित्यादिपदेन तार्किकबौद्धपातञ्जलसंग्रहः । विशिष्टानुभूतिरनुभूतिविशेषः । स चाखण्डब्रह्मसाक्षात्कारः ।

श्लोके न सांख्यमिति प्रथमत उपात्तं सांख्यमतं खण्डयति—न तावदिति । तदैक्षतेति । तज्जगत्कारणमैक्षतेक्षणमकरोत् । तत्कथमैक्षतेत्याह—बहु स्यामिति । अहं प्रभूतं स्याम् । प्रकर्षेणोत्पद्येयेत्यर्थः । ईक्षणं चेतनधर्मः । स च सांख्याभिमते अचेतने जगत्कारणे प्रधाने नोपपद्यते । अनेनेति । जगत्कारणेन तेजोबन्नान्युत्पाद्य पुनरीक्षणं कृतं यदत्र जीवरूपेणानुप्रविश्यैतन्नामक इदंरूपश्चायमर्थ इत्येवं नामरूपे विस्पष्टं व्याकुर्यामिति । ईक्षणं चेतनधर्मः । किं च जीवश्चेतन इति तेन रूपेणानुप्रवेशश्चेतनस्यैव संभवति नाचेतनस्य प्रधानस्य । अस्यां श्रुतौ जीवेनात्मनेत्येवं जगत्कारणस्य जीवस्वरूपत्वं व्यपदिश्यते । यस्मिन्विज्ञात इति । यस्मिञ्जगत्कारणीभूते वस्तुनि विज्ञाते सतीदं सर्वं जडचेतनात्मकं जगद्विज्ञातं भवति । परमात्मा जगत्कारणं चेत्तज्ज्ञानेन तदव्यतिरिक्तस्य जीवस्वरूपस्य याथातथ्येन ज्ञानं भवति । जडस्य च तस्मिन्नेव कल्पितत्वात्तस्यापि याथार्थ्येन

---

१ ग—क्षस्य परि । २ छ—र्णयमाह । ३ च छ ज झ—नां परिग्रहः । ४ च छ ज झ—नं जग । ५ ङ च ज झ—इति च जी । ६ ङ—इति च यस्मि । ; च छ ज—इति चैक ।

ज्ञानेन च तद्प्रकृतीनां[1] पुरुषाणां ज्ञातुमशक्यत्वादैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि ( छा. ६।८।७ ) इति च तदभेदस्य नवकृत्व उपदेशात्तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१।१ ) इति श्रुत्यन्तरादचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः प्रधानमहदादेरप्रामाणिकत्वाच्च न सांख्यमतं साधु ।

---

स्वरूपज्ञानं भवति । सांख्याभिमतं प्रधानं जगत्कारणं चेत्तत्प्रकृतिकस्य जडस्य पदार्थजातस्य याथार्थ्येन स्वरूपज्ञानं स्यान्न तु जीवस्य । जीवो हि न प्रधानादव्यतिरिक्तः । नापि प्रधानकार्यम् । ऐतदात्म्यमिति । एष आत्मा यस्य तदेतदात्म । एतदात्मैवैतदात्म्यम् । स्वार्थे ष्यञ्प्रत्ययः । एतच्छब्देन प्रकृतं जगन्मूलकारणं परामृश्यते । आत्मशब्दः स्वरूपवाची । इदं सर्वं दृश्यमानं जगन्मूलकारणस्वरूपम् । तन्मूलकारणं सत्यम् । यन्मूलकारणं स आत्मा । त्वं च तदसि । मूलकारणरूपोसि । श्वेतकेतु प्रत्युद्दालककृत उपदेशोयम् । सांख्याभिमतं प्रधानं यदि जगत्कारणं स्यात्तर्हि स आत्मेति न संगच्छते । आत्मशब्दः स्वरूपवाची चेत्स आत्मेति वाक्यं व्यर्थमेव स्यात् । जगत्कारणमात्मेति प्रतिपादनार्थं हि तद्वाक्यम् । किं च तत्त्वमसीति जीवात्मनो जगत्कारणेन सहैक्यं प्रतिपाद्यते । प्रधानस्य जगत्कारणत्वे तेन सहैक्यं जीवात्मनः सुतरां दुर्वचम् । अथ तच्छब्दस्तदधीन इत्यर्थे लाक्षणिकः । तच्छब्देन प्रधानस्यैव परामर्शः । तथा च जीवात्मनः प्रकृत्यधीनत्वं तत्त्वमसीत्यनेन बोध्यत इति चेत्क्लिष्टमेतत् । न विधौ परः शब्दार्थ इति न्यायेन लक्षणाया अनौचित्याच्च । किं च जीवस्य प्रकृत्यधीनत्वप्रतिपादने श्रुतेस्तात्पर्यं चेत्तदधीनस्त्वमसीति स्पष्टमेव श्रुत्योक्तं स्यात् । न चैतद्गौरवपराहतमिति वाच्यम् । यथा दृढप्रतिपत्तये लाघवमनादृत्य तत्त्वमसीति नवकृत्व उपदिष्टं तथाधीनशब्दानुच्चारणजलाघवस्याप्यनादर एव स्पष्टप्रतिपत्तय उचितो भवति । तस्मादेति । तच्छब्देन ब्रह्मविदाप्नोति परमिति प्रकृतं ब्रह्म परामृश्यते । एतच्छब्देन च सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तरवाक्येण लक्षितं तदेव ब्रह्म परामृश्यते । तस्मादात्मशब्दिताद् ब्रह्मणः सकाशादाकाश उत्पन्नस्ततो वायुरित्येवमात्मनः सकाशाज्जगदुत्पत्तेः कथितेत्यात्मैव जगत्कारणं न तु प्रधानम् । विचित्रेति । अवयवसंनिवेशविशेषविशिष्टा हि गिरिनदीसमुद्रादीनां विचित्रा रचना । सा च स्रष्टव्यालोचनशून्याच्चेतनेनाप्रेरितादचेतनात्प्रधानान्नोपपद्यते । प्रधानमहदादेरिति । चेतनानधिष्ठितत्वेन सांख्याभिमतस्य प्रधानमहदादेरित्यर्थः । भारतादावुक्ताश्चेतनाधिष्ठिताः प्रधानादयस्तु प्रामाणिका एव । तेषां स्वरूपं त्वित्थम्-ईश्वराधिष्ठिता माया प्रधानं प्रकृतिरिति चोच्यते । तदैक्षत ( छा. ६।२।३ ) इति श्रुत्युक्तं स्रष्टव्यालोचनरूपमीक्षणं महत्तत्त्वमित्युच्यते । सोकामयत ( तै. २।६ ) इति श्रुत्युक्तः कामोहंकार इत्युच्यते ।

---

१ ङ च छ ज ज्ञ—कृतिकानां ।

एवं पाशुपतं पाञ्चरात्रिकं जैनं च मतं श्रुतियुक्तिबाधितत्वादयुक्तम् । न च विधिशेषत्वाच्छ्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तम् । असिद्धत्वाद्विधिशेषत्वस्य । न चार्थवादाधिकरणन्यायाद्विधिशेषत्वम् । वैषम्यात् ।

---

एवमिति । सांख्यमतवदेव पाशुपतानां पाञ्चरात्रिकाणां जैनानां च मतं न युक्तम् । श्रुतिविरोधाद्युक्तिविरोधाच्च । जीवेशयोर्जडचेतनयोश्च वास्तवभेदाङ्गीकारादेते द्वैतवादिनः । श्रुतयस्तु तत्त्वमसि ( छा. ६।८।७ ) अहं ब्रह्मास्मि ( बृ. १। ४।१० ) तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ( कै. १७) इदं सर्वं यदयमात्मा (बृ. २।४।५)इत्याद्या अद्वैतं प्रतिपादयन्ति । नेह नानास्ति किंचन( बृ.४।४।१९)मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति (बृ. ४।४।१९ ) इत्याद्याश्च द्वैतं निषेधन्ति । औपाधिकभेदाङ्गीकारेण सर्वव्यवहारोपपत्तौ द्वैताङ्गीकारस्य गौरवपराहतत्वाद्युक्तिविरोधः । एवं मीमांसकादयोपि द्वैतिन एवेति तेषां मतं निरस्तमेव । तथापि मीमांसकोक्तमधिकांशमनूद्य दूषयति–न च विधिशेषत्वादिति । यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) इत्याद्याः श्रुतयो न ब्रह्मप्रतिपादिकाः । किं तु जगत्कारणे परमाण्वादौ जीवे वा सर्वज्ञत्वादिकमारोप्य तत्प्रशंसन्ति । तेन च सर्वज्ञत्वादिदृष्ट्या तदुपासनं साधयन्ति । तथा चात्मानमुपासीतेति विध्यङ्गत्वं यः सर्वज्ञ इत्यादिश्रुतीनाम् । अथ वा यज्ञादिकर्मकर्तुर्जीवस्य स्तावकत्वेन यज्ञादिकर्मविध्यङ्गत्वमस्तु । सर्वथा कर्माङ्गत्वं विना न कस्या अपि श्रुतेः सार्थक्यम् । आम्नायस्य क्रियार्थत्वादिति मीमांसकाशयः । न चार्थवादेति । जैमिनीये प्रथमाध्याये द्वितीयपादे प्रथमाधिकरणमेतत् । अयमाशयः–वायव्यं श्वेतमालभेत भूतिकामः ( तै. सं. २।१।१ ) इति विधिवाक्यम् । वायुर्देवतास्येति वायव्यः पशुः । वाय्वृतुपित्रुषसो यत् ( पा. सू. ४।२।३१ ) इति पाणिनिसूत्रेण यत्प्रत्ययः । ऐश्वर्यप्राप्तिकामेन पुरुषेण वायुदेवताकश्वेतपश्वालम्भनं कार्यमित्यनेन विधीयते । तदुत्तरं वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ( तै. सं. २।१।१) इत्यर्थवादवाक्यम् । क्षेपिष्ठा क्षिप्रगामिनी । तादृशी वायुदेवता यज्ञकर्त्रा यजमानेन योग्यहविर्भागप्रदानेन संतोषिता भागप्रदाय यजमानायैश्वर्यं प्रयच्छतीति तदर्थः । अस्मिन्नर्थवादवाक्ये न किंचित्कर्तव्यमिति प्रतीयते । किं तु भारतरामायणादाविव कश्चिद्वृत्तान्तः प्रतीयते । तथा चास्य वाक्यस्य स्वतो विधिवाक्यत्वाभावः । पूर्वविधिवाक्येन सहास्यैकवाक्यतापि नास्ति । द्वयोरपि वाक्ययोः परस्परनैरपेक्ष्येण स्वातन्त्र्येणार्थबोधजनकत्वात् । एवं चास्यार्थवादवाक्यस्य क्रियाशेषत्वाभावेनानर्थक्यं प्राप्तम् । तत्तु न युक्तम् । यतः स्वाध्यायोऽध्येतव्यः इति स्वाध्यायाध्ययनं विधीयते । उक्तमर्थवादवाक्यं च स्वाध्यायान्तर्गतमिति तस्याप्यध्ययनं प्राप्तम् । अध्ययनस्य चार्थावबोधरूपं दृष्टं फलम् । जाते चार्थावबोधे तेन किं साध्यमित्यस्त्याकाङ्क्षा । विधिवाक्यस्याप्याकाङ्क्षा विद्यत एव । विधिवाक्यं

स्वतः प्रयोजनवदर्थाप्रतिपादकानां वायुर्वै क्षेपिष्ठा देवता ( तै. सं २।१।१ ) इत्येवमादीनां स्वाध्यायविधिग्रहणान्यथानुपपत्त्या प्रयोजनवदर्थपरत्वे कल्पनीये शब्दभावनेतिकर्तव्यतांशसाकाङ्क्षस्य विधेः संप्रदानभूतदेवतादिस्तुतिद्वारेण तदंशपूरकत्वान्नष्टाश्वदग्धरथन्यायेन तदुभयैकवाक्यत्वमर्थवादाधिकरणे निर्णीतम् । वेदान्तवाक्यजन्यज्ञानाच्च साक्षादेव परमानन्दप्राप्तिर्निःशेषदुःखनिवृत्तिश्च

हि पुरुषं कर्माणि प्रेरयति । या चेयं प्रेरणा सैव शब्दभावना । प्रेरणा नाम पुरुषप्रवृत्त्यनुकूलो व्यापारः । व्यापारो भावनेति पर्यायः । स चात्र विधिवाक्यरूपशब्दनिष्ठ इत्यतः प्रेरणा शब्दभावनेति व्यपदिश्यते । सामान्यतः प्रेरणामात्रेण च न सर्वे प्रवर्तन्ते किं तु प्रेरणाविशेषेण । अयमेव प्रेरणाया इतिकर्तव्यतांशः । स चात्र विधेयार्थस्य प्राशस्त्यज्ञापनरूपः । तच्च प्राशस्त्यं वायव्यं श्वेतमालभेत भूतिकाम इत्येतावन्मात्रेण विधिवाक्येन न ज्ञाप्यत इति तत्कथं कर्तव्यमित्येवमितिकर्तव्यताकाङ्क्षा विधिवाक्यस्य सिद्धा भवति । तथा च विध्यर्थवादरूपयोर्द्वयोरपि वाक्ययोराकाङ्क्षासत्त्वात्तयोरेव च परस्परमाकाङ्क्षादूरीकरणसामर्थ्यदर्शनाच्चैकवाक्यता संपद्यते । वाक्यार्थबोधे नैराकाङ्क्ष्येण पदैकवाक्यताया अभावेऽपि वाक्यार्थप्रतीत्युत्तरमाकाङ्क्षोत्थापनाद्वाक्यैकवाक्यता स्यादेव । सा चेत्थम्—यतः शीघ्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता ततः प्रशस्तमिमं वायव्यं पशुमालभेतेति । एवं चार्थवादवाक्यस्येव यः सर्वज्ञ इत्यादीनामपि विधिशेषत्वं कल्पनीयमिति । स्वत इति । यथा वायव्यं श्वेतमालभेत भूतिकाम इति विधिवाक्यं स्वयमेव भूतिरूपप्रयोजनवन्तं श्वेतपश्वालम्भनरूपमर्थं प्रतिपादयति न तथा वायुर्वै क्षेपिष्ठा इत्याद्यर्थवादवाक्यं किंचित्प्रयोजनवन्तमर्थं बोधयति । वायुदेवतानिष्ठाः शीघ्रगामित्वादयो गुणास्तत्र प्रतिपादिताः । न तु तेषां प्रयोजनं किंचिदुक्तमत्र दृश्यते । यद्यप्येवं स्ववाक्ये फलं नोक्तं तथापि तस्यार्थवादवाक्यस्य स्वाध्यायान्तर्गतत्वात्तत्प्रतिपाद्यस्यार्थस्य फलमवश्यं कल्पयितव्यं भवति । संप्रदानेति । यस्यै देवतायै हविर्दीयते सा संप्रदानभूता देवता । सा च प्रकृते वायुः । तस्याश्च शीघ्रगामित्वादिगुणबोधनात्स्तुतिः । नष्टाश्वेति । संयोजिताश्वयोर्द्वयो रथयोर्मध्ये एकस्याश्वा मृता अपरश्च रथ एव दग्धः । तदा चास्य रथस्य नेतेऽश्वा इत्यवशिष्टस्य रथस्यावशिष्टा अश्वा न संयोज्यन्ते चेत्स रथस्तेऽश्वाश्च निरुपयोगिनः स्युः । अतस्तयोः सार्थक्यायावशिष्टस्य तस्य रथस्यातदीया अपि तेऽश्वाः संयोज्यन्ते । तथा प्रकृते वाक्यैकवाक्यतया विध्यर्थवादवाक्ययोः संयोजनं भवति । एवमर्थवादाधिकरणगतं सिद्धान्तं प्रदर्श्य प्रकृते ततो वैषम्यं दर्शयति—वेदान्तवाक्येति । अर्थवादवाक्यप्रतिपाद्यार्थस्य विधिशेषत्वाङ्गीका-

१ ङ—दर्थे कल्प । २ ङ झ—रेणेदमंश । ३ ज—नन्दावाप्ति ।

पुरुषार्थो लभ्यत इति निराकाङ्क्षत्वान्नान्यशेषत्वसंभावना । प्रत्युत विधय एवान्तःकरणशुद्धिद्वारा तच्छेषतां भजन्त इति । तस्मात्प्रयोजनवदबाधिताज्ञातज्ञापकत्वेन वेदान्तानां स्वत एव प्रामाण्यादस्त्येव ब्रह्मेति न मीमांसकमतसिद्धिः ।

तार्किकादीनां च मतं तत्त्वमसि ( छा. ६।८।७ ) अहं ब्रह्मास्मि ( बृ. १।४।१० ) अयमात्मा ब्रह्म ( बृ. २।५।१९ ) सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) इत्यादिश्रुतिबाधितम्[1] ।

एकमेवाद्वितीयं ब्रह्म ( छा. ६।२।१ ) नेह नानास्ति किंचन ( का. २।१।११ ) इत्यादिश्रुतिबाधितं[2] च भिन्नाभिन्नत्वम् ।

क्षणिकत्वं चाकाशवत्सर्वगतश्च नित्यः इत्यादिश्रुतिबाधितम् । अत्र सर्वेषां मतस्यासत्त्वे प्रतिज्ञाते विशुद्धात्मकत्वादिति हेतुः ।

---

रेण विधिद्वारैव फलं न तु स्वातन्त्र्येण साक्षात्किंचित्कल्पयितुं शक्यते । न तु तथा तत्त्वमसि यः सर्वज्ञ इत्यादिवेदान्तवाक्यविषये । किं तु वेदान्तवाक्यजन्यात्मतत्त्वज्ञानात्परमपुरुषार्थलाभः । तथा च स्वतः फलसत्त्वादन्यशेषत्वस्य शङ्कापि नोदेति । प्रत्युतेति । विविदिषन्ति यज्ञेन ( बृ० ४।४।२२ ) इति श्रुत्या यज्ञादिकर्मणामात्मज्ञानेच्छासाधनत्वं प्रतिपाद्यते । कर्माणि च तत्त्वज्ञानप्रतिबन्धकपापनाशनद्वारा चित्तशुद्धिमापाद्य तादृशेच्छां जनयन्ति । तादृशेच्छायाः फलं च वेदान्तवाक्यजन्यात्मतत्त्वज्ञानद्वारा परमपुरुषार्थो मोक्ष इति । तथा च कर्मविधय एव वेदान्तवाक्यशेषभूता इति भावः । स्वत एवेति । अन्यशेषतां विनेत्यर्थः ।

तार्किकादीनामिति । आदिपदग्राह्याः पातञ्जलाः । तत्त्वमसीत्यादिश्रुतिषु जीवेश्वरैक्यं प्रतिपाद्यते । तार्किकाः पातञ्जलाश्च जीवेश्वरैक्यं न मन्यन्त इति तेषां मतं श्रुतिबाधितम् । किं च तार्किका ज्ञानाश्रय आत्मेति वदन्ति । सत्यं ज्ञानमिति श्रुतौ चात्मनो ज्ञानरूपत्वमुक्तम् । अतोऽपि तार्किकमतं श्रुतिविरुद्धम् ।

भिन्नाभिन्नत्ववादिनां त्रिदण्डिनां मतं खण्डयति—एकमेवेति । जीवब्रह्मणोर्भेदः सत्यः । अभेदोऽपि च तयोः सत्य एव । एवमेव जडचेतनयोरपि भेदश्चाभेदश्च सत्य एवेत्येवं भेदाभेदवादिनस्त्रिदण्डिनः । तन्मतमेकमेवेत्यादिश्रुतिबाधितम् । एकमेवाद्वितीयमिति श्रुतावात्मैक्यं प्रतिपाद्यते । नेह नानेति श्रुतौ च तदितरस्य सर्वस्यास्तित्वं निषिध्यते ।

बौद्धमतं खण्डयति—क्षणिकत्वमिति । आकाशवदिति श्रुतौ नित्यमित्युक्त-

---

१ च—तम् । अत्र च सर्वेषां । २ ङ—धितं परिणामित्वं च भिन्नाभिन्नत्वं च । क्षणिक ।

निर्विकल्पकाद्वितीयचैतन्यरूपत्वादित्यर्थः । अत्र हेतुर्विशिष्टानुभूत्येति । विशिष्टा सविकल्पकानुभूतिभ्यो व्यावृत्ता या तत्त्वमस्यादिवाक्यजन्या अखण्डानुभूतिस्तयेत्यर्थः । तेन सर्वव्यापकमद्वितीयं परमानन्दबोधरूपं च ब्रह्मेति सिद्धम् ॥४॥

ननु स य एषोणिमा (छा. ६।८।७) अणोरणीयान् (का. २।२० श्वे.३) इति ब्रह्मणोणुत्वश्रुतेरङ्गुष्ठमात्रः पुरुषः (का. ४।१२) आराग्रमात्रो ह्यवरोपि दृष्टः (श्वे. ५।८) इत्यादिश्रुतिप्रतिपादिताणुजीवाभिन्नत्वाच्च न ब्रह्मणः सर्वव्यापकत्वमित्याशङ्क्य ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ (मु.२।२।११) तदेतद् ब्रह्मापूर्वमनपरमनन्त-

त्वादात्मनः क्षणिकत्वाङ्गीकारः श्रुतिबाधितो भवति । आदिशब्देन नित्यं विज्ञानमानन्दं ब्रह्म (बृ. ३।९।२८) इति श्रुतिसंग्रहः । निर्विकल्पेति । तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ( ब्र० बि० ८।९ ) इति श्रुतौ ब्रह्म निर्विकल्पमित्युच्यते । निर्विकल्पं निर्विशेषम् । ईदृशं तादृशमिति वक्तुमशक्यमिति यावत् । तथा च ब्रह्मज्ञानं सप्रकारकं कथं भवेत् । किं च तादृशज्ञानकाले ज्ञातृत्वं ज्ञेयत्वं च न भासते । ज्ञातृत्वज्ञेयत्वयोरुपाधिपरिकल्पितत्वेन मिथ्यात्वात् । मिथ्याभूतार्थस्य च सत्येन ब्रह्मज्ञानेन बाधात् । विशिष्टेति । श्लोके विशिष्टशब्दस्य युक्तेति नार्थः किं तु व्यावृत्तेति ॥ ४ ॥

स य एष इति । स यः प्रकृतः सद्रूपब्रह्माख्य एषोणिमाणुभावः । अणुत्वस्य पराकाष्ठेत्यर्थः । अणोरणीयानिति । पूर्वप्रकृतः परमात्मा ब्रह्माख्य इतराणुपदार्थेभ्योऽप्यणुतर इत्यर्थः । अङ्गुष्ठमात्र इति । पुरुषो जीवाख्योऽङ्गुष्ठपरिमाण इत्यर्थः । न चाङ्गुष्ठपरिमाणत्वे जीवस्यानित्यत्वापत्तिः । मध्यमपरिमाणस्य वस्तुनोऽनित्यत्वनियमात् । तथा च कृतनाशाकृताभ्यागमदोषप्रसङ्ग इति वाच्यम् । अङ्गुष्ठमात्र इति पदस्य स्वल्पपरिमाणबोधने तात्पर्यात् । तच्च स्वल्पपरिमाणमाराग्रमात्र इत्यादिश्रुत्यनुरोधेनाणुपरिमाणमेव स्वीकर्तव्यमित्याशयः । तदेव ध्वनयन्नाह–आराग्रेति । आरा लोहशलाका । तस्याः सूक्ष्मं यदग्रं तत्परिमाणोऽवरो जीवाख्य आत्मा दृष्ट इत्यर्थः । एवं च जीवोऽणुपरिमाणश्चेत्तदाभिन्नः परमात्माऽप्यर्थादेवाणुपरिमाणः सिध्यतीत्याशयः । ब्रह्मैवेदमिति । पुरस्तादग्रे । यदिदमविद्यादृष्टीनामग्रे पश्चाद्दक्षिणत उत्तरतोध ऊर्ध्वं च नामरूपात्मकमवभासते तदेतदमृतं ब्रह्मैव । किं बहुना वरिष्ठं महत्तममिदमखिलं विश्वं ब्रह्मैवेत्यर्थः । तदेतदिति । तदेतत्पूर्वप्रकृतं ब्रह्मापूर्वम् । नास्य किंचित्कारणं पूर्वं विद्यत इत्यपूर्वम् । तथा नास्यापरं कार्यं किंचिद्विद्यत इत्यनपरम् । नास्यान्तरमन्तराले किंचिद्विद्यत इत्यनन्तरम् । तथास्य न बहिः किंचिद्विद्यत इत्यबा-

१ ङ–कल्पाद्वि । २ ङ छ ज झ–नन्दरूपं । ३ झ–तादणुजीवादाभिन्न ।

रमबाह्यम् ( बृ. २।५।१९ ) इत्याद्याः श्रुतयो निर्विशेषं[1] ब्रह्म प्रतिपादयन्तीति पूर्वोक्तमेव द्रढयन्नाह—

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं
न मध्यं न तिर्यङ् न पूर्वापरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूप-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥

न चोर्ध्वमिति । वियद्वद्व्यापकत्वात् । आकाशवत्सर्वगतश्च नित्यः इति श्रुतेः । वियतो[3] व्यापकत्वादिति वा । ज्यायानाकाशात् (छा० ३।१४।३) महतो महीयान् ( क. २।२० ) इत्यादिश्रुतेः[2] । जीवस्यापि[4] सकलदेहव्यापिचैतन्योपलब्ध्या महत्त्वेप्युपाधिधर्माध्यासेनाराग्रमात्रत्वाभिधानम्[5][6] । बुद्धेर्गुणेनात्मह्यम् । ब्रह्मैवेदमित्यस्यास्तदेतदित्यस्याश्च श्रुतेरपरिच्छिन्नं ब्रह्मेति तात्पर्यम् । अपरिच्छिन्नत्वाच्च तस्य निर्विशेषत्वं सिध्यति ।

न चोर्ध्वमिति । वियदिव व्यापकं वियद्व्यापकमित्युपमानपूर्वपदकर्मधारयः । वियतो व्यापकमिति षष्ठीतत्पुरुषो वा । आकाशवदिति । परमात्माकाशवत्सर्वव्यापी नित्यश्चेत्यर्थः । नन्वाकाशस्य सर्वव्यापित्वं नास्ति । प्रकृतिं प्रति परमात्मानं प्रति च तस्याव्यापकत्वात् । न ह्याकाशेन स्वमूलकारणीभूता प्रकृतिर्व्याप्ता भवति नापि ब्रह्म । तथा प्रलय आकाशस्यापि नाशात्तस्य नित्यत्वमपि न संभवतीति चेत्सत्यम् । बद्धजीवा ह्यत्रोपदेष्टव्या इति तद्दृष्ट्या तथोक्तेः । अस्माकं ह्याकाशं सर्वव्यापकं नित्यं च प्रतिभासते । इषुरिव सविता धावतीतिवदिदं द्रष्टव्यम् । ज्यायानेति । न चैतच्छ्रुतिप्रामाण्याद्यदि परमात्मनो महत्त्वं स्वीक्रियते तर्ह्यणुत्वप्रतिपादकप्रागुक्तश्रुतिविरोध इति वाच्यम् । तत्राणुशब्दस्य सूक्ष्मत्वाभिप्रायेण प्रयोगात् । सूक्ष्मत्वं च महत्त्वेप्यविरुद्धम् । यथा पृथिव्याद्यपेक्षयाकाशं महदपि पृथिव्याद्यपेक्षया सूक्ष्मतरमस्त्येव तद्वत् । नन्वेवं परमात्मनो महत्त्वं स्याच्चेत्तदभिन्नस्य जीवस्यापि महत्त्वमेवाङ्गीकर्तव्यं स्यादिति चेदिष्टापत्तिरेव । अत एव ह्रदे निमग्नस्य सर्वाङ्गशैत्योपलब्धिः । जीवस्याङ्गुष्ठपरिमाणत्वेऽणुपरिमाणत्वे वा सर्वाङ्गे शैत्योपलब्धिर्न स्यात् । ननु जीवस्य महत्त्वे देहाद्बहिरपि तस्यावस्थानं स्यादिति चेत्तदपीष्टमेव । अत एव योगिनो योगबलाद्देशान्तरगतवस्तुप्रत्यक्षं जायमानमुपपद्यते । न चैवं घटपटादौ जीवोपलब्धिः स्यादिति वाच्यम् । जीवाभिव्यक्तेर्बुद्ध्युपाधितन्त्रत्वात् । नन्वेवं जीवस्य महत्त्वाङ्गीकार आराग्रमात्र इति प्रागुक्तश्रुतिविरोध इति चेत्तत्राह—जीवस्यापीति । बुद्धेर्गुणेनेति । अवरोऽपरिच्छिन्नः । अयमात्मा स्वीयगुणेनापरिच्छिन्नोपि बुद्धे-

१ छ ज झ—शेषमेव ब्रह्म । २ ख ड—इत्यादिश्रु । ३ झ—तोपि व्याप । ४ च छ झ—जीवस्य सक । ५ छ ज—महतोप्युपाधि । ६ ग च छ ज झ—धानात् ।

गुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः ( श्वे० ५।८ ) इति श्रुतेः । **ब्रह्मणश्च** सूक्ष्मत्वाभिप्रायेणाणुव्यपदेशात् । शेषमतिरोहितार्थम् ॥ ५ ॥

ननु ब्रह्मणा जगदुपादानत्वेनोपादानोपादेययोश्चाभेदाद्विचित्रजगदभिन्नत्वेन ब्रह्मणो दुःखरूपत्वान्न तदभिन्नत्वेन जीवस्य परमपुरुषार्थप्राप्तिरित्याशङ्क्य ब्रह्मणः स्वप्रकाशपरमानन्दरूपत्वान्निखिलजगद्भ्रमाधिष्ठानत्वेन कारणत्वव्यपदेशादध्यस्तेन च समं संबन्धाभावान्न तत्रानर्थलेशोऽप्यस्तीत्याह—

**न शुक्लं न कृष्णं न रक्तं न पीतं**
**न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।**
**अरूपं तथा ज्योतिराकारकत्वात्**
**तदेकावशिष्टः शिवः केवलोऽहम् ॥ ६ ॥**

न शुक्लमिति । कुब्जमणु । पीनं महत् । तेनाणु महद् ह्रस्वं दीर्घमिति चतु-

---

रुपाधिभूताया गुणेनाराग्रमात्रो दृष्ट इत्यर्थः ॥ ५ ॥

ननु ब्रह्मण इति । यथा मृद्घटयोरभेदस्तथा ब्रह्मजगतोरभेदः । कार्यकारणभावस्योभयत्र तुल्यत्वात् । जगति च प्रतिकूलाः शब्दादयोऽर्था दुःखस्वरूपाः प्रतिभासन्त इत्यतस्तादृशजगदभिन्नं ब्रह्मापि दुःखरूपं स्यात् । तथात्वे च तादृशब्रह्माभिन्नो जीवोऽपि दुःखरूपः स्यात् । यद्यप्येवं सुखरूपोऽपि स्याज्जगत्यनुकूलानामपि शब्दादीनां सत्त्वात्तथापि दुःखरूपताया अवर्जनीयत्वान्मोक्षासिद्धिः । अभेदश्चायं स्वभावसिद्ध इति अग्नेरौष्ण्यवद्यावज्जीवास्तित्वं दुःखनिवारणासंभव इत्याशयः । स्वप्रकाशेति । ब्रह्म वस्तुतः स्वप्रकाशपरमानन्दरूपम् । जगतश्च तत्र केवलमवभास एव न तु वस्तुतस्तस्य सत्यत्वेऽभिनिवेष्टव्यम् । तथा च सत्यं जगदेव नास्ति दूरे तत्कारणता ब्रह्मणः । दूरतरे च तन्मूलिका दुःखरूपतेति मोक्षो निर्बाध एवेति भावः ।

न शुक्लमिति । शुक्लादीनामनेकेषामुक्तिः सर्ववर्णोपलक्षणार्था । तेन ब्रह्मणि सर्वविधरूपनिषेधात्पृथिवीत्वादिनिषेधः सिध्यति । नन्वेवमपि ब्रह्म किमपि नीरूपमेव द्रव्यं स्यादत आह—न कुब्जमिति । पीनं महत् । तत्प्रातिद्वन्द्वित्वेन निर्देशात्कुब्जशब्दोऽणुवाची गृह्यते । पृथिवीजलतेजआदिकं यद्यद् द्रव्यं तत्तदणु महद्वेत्येतदन्यतरत्तथा ह्रस्वं दीर्घं वेत्येतदन्यतरच्चावश्यं भवत्येव । ब्रह्मणि तु नैकमपि परिमाणमिति न तद्रूपवन्नीरूपं वा किमपि द्रव्यं भवतीति

१ ग ङ च छ ज—णुत्वव्यप । २ छ—स्यादेतत् । ब्रह्म । ; ज—स्यादेतत् । ननु ब्रह्म । ३ ग ङ च छ ज—नत्वाद्रूपा । ४ छ—दभेदेन । ५ ङ—त्वे ब्रह्म । ६ ख ङ—न्दबोधरूप ।; ज—न्दस्वरूप । ७ च—ध्यस्तत्वेन समं ।

विधपरिमाणनिषेधाद्द्रव्यत्व[1]प्रतिषेधः । रूप्यत इति रूपं प्रमेयम्[2] । अरूपमप्रमेयम् । तेन सर्वे[3]षामेव द्रव्यगुणकर्मादिपदार्थानां तत्तद्वाद्यभ्युपगतानां निषेधः । तथा च श्रुतिः । अस्थूलमनण्वह्रस्वमदीर्घमलोहितम् ( बृ. ३।८।८ )[4] इत्याद्या अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् (का. ३।१५) इत्याद्याश्च सर्वानर्थशून्यं परमात्म[5]स्वरूपं प्रतिपादयन्ति । श्रौतस्याप्यर्थस्य न्यायेन निर्णयाय हेतुमाह—ज्योतिराकारकत्वादिति । स्वप्रकाशज्ञानरूपत्वेनाप्रमेयत्वात् । प्रमेयत्वे घटादिवज्जडत्वा[6]पत्तेः । एतदप्रमेयं ध्रुवम् (बृ. ४।४।२०) इति श्रुते[7]श्चे-त्यर्थः[8] ॥ ६ ॥

ननु कस्य ब्रह्मभाव उपदिश्यते ब्रह्मणोऽब्रह्मणो वा । नान्त्यः । तस्य जडत्वा[9]दसत्त्वाच्च । न प्रथमः । उपदेशानर्थक्यात् । ब्रह्मभावस्य स्वत एव

---

भावः । किमेतेन प्रमेयविशेषभूतद्रव्यनिषेधेन । किं त्वात्मस्वरूपं प्रमेयमेव न भवतीत्याह—अरूपमिति । रूप्यते भास्यते तद्रूपं प्रमेयम् । तादृशं न भवति यत्तदरूपमप्रमेयमित्यर्थः । नैयायिका इत्थं मन्यन्ते—आत्मा द्रव्यविशेषः । तत्र मनआदीनि द्रव्याणि संयुक्तानि बुद्ध्यादयो गुणाः पुण्यपापजनकं कर्म च तत्र समवेतमिति । मतान्तराणि च जीवविषये (पृ. ११ पं. ३) ईश्वरविषये ( पृ. ७७ पं. १ ) च प्राक्प्रदर्शितानि । तानि सर्वाण्यात्मस्वरूपस्याप्रमेयत्वान्निरस्तानि भवन्ति । आत्मनः स्वप्रकाशज्ञानस्वरूपत्वादिति भावः । अस्थूलमनण्विति । अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम् इति श्रुतिः । अयमर्थः—पूर्वप्रकृतमक्षरं ब्रह्म न स्थूलं नाणु न ह्रस्वं न दीर्घम् । एतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मः प्रतिषिध्यते । अतो ब्रह्म न द्रव्यं भवति । तथा तन्न लोहितं न स्निग्धं न च्छाया न तमो न वायुर्नाकाशं सङ्गरहितं रसगन्धचक्षुःश्रोत्रवाङ्मनस्तेजःप्राणमुखरहितं च । मीयते येन तन्मात्रम् । तथा न ब्रह्म । न तेन किंचिन्मीयते । तथान्तर्बाह्यरहितम् । सर्वविशेषरहितं तद् ब्रह्म । एकमेवाद्वितीयं हि तत्तत्र केन किं विशिष्यत इति । एतदप्रमेयमिति । एतद् ब्रह्म प्रमेयं ज्ञेयं न भवति । तर्हि शशशृङ्गवत्तुच्छं स्यादत उक्तं ध्रुवमिति । ध्रुवं नित्यम् ॥ ६ ॥

तस्य जडत्वादिति । सत्स्वरूपं यत्तद् ब्रह्म तथा ज्ञानस्वरूपं यत्तद् ब्रह्मेति सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१।) इति श्रुतावुक्तम् । अतोऽर्थादेव ब्रह्मभिन्नं न

---

१ ख—व्यनिषेधः ।; छ ज—व्यत्वनिषेधः । २ ङ—म् । न रूपमरूपम् । तेन । ३ ङ—षामपि द्रव्य । ४ ङ क्ष—इत्यादिः । अशब्द । ५ ङ—मानन्दस्वरू । ६ ज—त्वादसत्त्वापत्तेः । ७ छ ख—श्रुतेरित्यर्थः । ८ ङ—त्यर्थः ॥ ६ ॥ पूर्वार्धमेतदित्यनुमानं शिवम् । ननु । ९ ख—त्वात् । न प्रथ ।

सिद्धत्वात् । जीवस्य स्वतो ब्रह्मभावेऽप्यविद्याव्यवधानं ज्ञानेन निवर्तत इति चेन्न । अविद्यानिवृत्तेरात्मभिन्नत्वे द्वैतापत्तेर्ब्रह्मणोऽसिद्धिप्रसङ्गात् । तदुक्तं वार्त्तिके–

अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ।

ब्रह्मार्थो दुर्लभोत्र स्याद् द्वितीये सति वस्तुनि ॥ ( बृ. वा. पृ० ५४० )

इति । अभिन्नत्वे चोपदेशानर्थक्यमित्युक्तम् । अत्र किं परमार्थतः फलाभावमभिप्रैषि किं वा प्रतीतितोऽपि । तत्राद्यमिष्टापत्त्या परिहरति–

**न शास्ता न शास्त्रं न शिष्यो न शिक्षा**
**न च त्वं न चाहं न वायं प्रपञ्चः ।**
**स्वरूपावबोधो विकल्पासहिष्णु-**
**स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥**

न शास्तेति । शास्ता उपदेशकर्ता गुरुः । शास्त्रमुपदेशकरणम् । शिष्य

---

सत्यं किं त्वसत् । तथा ब्रह्मभिन्नं न ज्ञानं किंतु जडम् । जडस्यासतश्च ब्रह्मभाव उपदिश्यमानो व्यर्थ एव । न हि वचनशतेनाप्यब्रह्मणोऽसतश्च ब्रह्मभाव आपादयितुं शक्यः । तिमिरं हि न कदापि तेजोभावं (तेजोरूपतां) व्रजति । शङ्कते-जीवस्येति । ब्रह्मण एव ब्रह्मभावोपदेशः । जीवश्च यद्यपि ब्रह्मैव तथापि तत्त्वमसीति श्रुत्या यो ब्रह्मभाव उपदिश्यते तस्य फलं न ब्रह्मत्वप्राप्तिः । किं त्वज्ञाननिवृत्तिरित्याशयः । अविद्यानिवृत्तेरिति । तत्त्वमसीत्युपदेशफलभूता या अविद्यानिवृत्तिरुक्ता सा किं ब्रह्मैवोत ब्रह्माभिन्ना । ब्रह्मैव चेत्प्रागपि जीवस्य ब्रह्मरूपत्वादुपदेशो व्यर्थः । ब्रह्माभिन्ना चेत्तत्त्वमसीत्युपदेशजन्या ब्रह्मणः सकाशादन्या काचिदविद्यानिवृत्तिर्मोक्षं विद्यत इति द्वैतं तदवस्थमेव स्यात् । अव्यावृत्तेति । यथा घटाभिन्नात्पटाद्घटो व्यावृत्तो भवति तथा ब्रह्माभिन्नं वस्तु यदि किंचित्स्यात्तर्हि तस्माद्व्यावृत्तं ब्रह्म भवेत् । न तु तथा भवतीत्यव्यावृत्तम् । ब्रह्मणोऽन्यत्किंचिन्नास्तीत्यर्थः । यथा च घटत्वं स्वाश्रयीभूतेषु अनेकेषु घटेष्वेकमनुगतं भवति तथा ब्रह्म न क्वाप्यनुगतं भवति । ब्रह्माभिन्नस्य कस्याप्यभावेन ब्रह्मण आश्रयाभावात् । तथा च यत्कस्मादपि व्यावृत्तं न भवति तथा क्वाप्यनुगतं च यन्न भवति तद् ब्रह्मेत्युच्यत इत्यर्थः । एवं ननु कस्येत्यादिनानर्थक्यमित्युक्तमित्यन्तेन ग्रन्थेनाशङ्क्य तदुत्तरत्वेन श्लोकमवतारयति–अत्र किमिति । तत्त्वमसीत्युपदेशस्य फलं नास्तीति यदुच्यते तस्य किं पारमार्थिकं फलं नास्तीत्यभिप्रायोऽथ वा प्रातीतिकं फलं नास्तीति विकल्पः ।

उपदेशकरणमिति । उपदेशसाधनमित्यर्थः ।

---

१ ङ च ज झ–निवर्त्यत । २ ङ ज–ज्ञाच्च । तदु । ३ च छ झ–तत्र किं । ४ ख ङ च छ ज झ–कर्ता । शास्त्र ।

उपदेशकर्म । शिक्षा उपदेशक्रिया । त्वं श्रोता । अहं वक्ता । अयं सर्वप्रमाणसंनिधापितः प्रपञ्चो देहेन्द्रियादिरनर्थः परमार्थतो नास्तीत्यर्थः । द्वितीयं निराकरोति--स्वरूपेति । अयमर्थः । यद्यप्यविद्यानिवृत्तिरात्मानात्मा वेत्यादिविकल्पे[1] किमपि फलं निरूपयितुं न शक्यते । तथापि स्वरूपावबोधो विज्ञानफलमनुभूयते । न चैतत्कथमिति विकल्पनीयम् । सर्वद्वैतोपमर्देन विकल्पासहिष्णुत्वात्[2] । न हि दृष्टेनुपपन्नं नाम । तथा च श्रुतिः--न निरोधो न चोत्पत्तिर्न[3] बुद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ (गौ. का. २।३२) ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मामीति तस्मात्तत्सर्वमभवत् (बृ. १।४।१०) इत्याद्या पूर्वमपि ब्रह्मस्वरूपस्यैव सतो जीवस्य ज्ञानाद् ब्रह्मभावं दर्शयति सर्वं[4] च द्वैतं वारयति ॥ ७ ॥

---

यद्यप्यविद्येति । यथा कदाचिदरण्ये सायं सार्थवाहात्परिभ्रष्टो देवदत्तः । परेद्युश्च प्रातः स्वीये गृहे समासीनं देवदत्तं दृष्ट्वा 'समागतो ग्रामे देवदत्त' इति चैत्रेण कथिते तत्र कश्चिद्यदि विकल्पं कुर्यात्किं पद्भ्यां समागतः स्याद्वाहनेन वेति । नाद्यः । तस्य पङ्गुत्वात् । न द्वितीयः । निर्जनेऽरण्ये वाहनप्राप्तेरसंभवात् । अतो विकल्पासहत्वान्नैव तस्य ग्रामे समागमनमुपपद्यत इति तर्हि तां तदागमनानुपपत्तिं परीक्षका याथार्थ्येन नानुमन्यन्ते । न हि दृष्टेऽनुपपन्नं नामेति न्यायात् । यतश्चायं प्रत्यक्षं दृष्ट्वा ब्रवीति समागतो देवदत्त इति । भवांस्तु केवलं तर्केणानुपपत्तिं संभावयति । तत्र प्रत्यक्षदर्शनस्य प्राबल्यात्समागमनं निश्चितमेव । उपपत्तौ परं यत्नः क्रियतां यदि ते बुद्धिस्तर्कावगाहिनी स्यात् । यदृच्छया समागतेन केन चिद्दयालुना सिद्धयोगिना तस्य पङ्गुता विहता स्यादथ वा तादृशेन सादिना स्वाश्वे समारोप्यानीतः स्यादिति । एवं च प्रत्यक्षत उपलभ्यमाने वस्तुनि तद्विपरीतार्थोपपादकस्य विकल्पस्य नावसरः । तथा प्रकृते तत्त्वमसीत्युपदेशात्स्वस्वरूपावबोधः फलं प्रत्यक्षमुपलभ्यते । अतस्तत्राविद्यानिवृत्तिरात्मरूपाथ वात्माभिन्नेति विकल्पस्य नावसरः । न च दृष्टान्ते योगिना सादिना वानीतः स्यादिति यथा कल्प्यते तथा प्रकृते किं कल्पनीयमिति चेदायातोसि मार्गे । अविद्यानिवृत्तिर्नात्मनः सकाशाद्भिन्ना । सा च पूर्वसिद्धैवोपदेशेन केवलमभिव्यज्यत इति । तथा च श्रुतिरिति । ब्रह्मभावं दर्शयतीत्यत्र द्वैतं वारयतीत्यत्र चास्याः कर्तृत्वेनान्वयः । न निरोध इति । निरोधो नाशः । बुद्धो ज्ञानी । साधकः शमदमादिसाधनसंपन्नः । पारमार्थिकी वस्तुस्थितिरनया श्रुत्या वर्णिता । चिन्मात्रं परमार्थः । तत्र न प्रपञ्चस्य नाशः । न चोत्पत्तिः । न कश्चिज्ज्ञानी । तथा साधको मुमुक्षुर्मुक्तश्च न कोपि । एतत्सर्वं द्वैतविलसितं भ्रान्तिरेवेति भावः । भ्रान्तेरपगमश्च श्रुत्यैव प्रदर्शित इत्याह--ब्रह्म वेति । तद् ब्रह्म जीवरूपतामापन्नं भ्रमापगम-

---

१ ङ च छ ज झ--ल्पेन किं । २ ङ--सहत्वा । ३ ङ--र्न बद्धो । ४ च--सर्वं चैतन्यद्वैतं ।

नन्वात्मनः स्वप्रकाशचैतन्यरूपत्वे सर्वदा समाने जाग्रत्स्वप्नसुषुप्त्यादि-व्यवस्था कथम् । न च भ्रान्त्यैव व्यवस्थेति वाच्यम् । तथा सति सर्वस्यैव स्वप्नत्वापत्तेरिति चेन्न । लक्षणतस्त्रयाणामपि स्वप्नत्वेपि प्रतिभासंत आविद्यक-विशेषसंभवादसद्विलक्षणत्वेन च सविशेषत्वाद्व्यवस्थोपपत्तेः । परमार्थतस्तु न क्वापि व्यवस्थेत्याह--

न जाग्रन्न मे स्वप्नको वा सुषुप्तिः
न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीय-
स्तदेकोवशिष्टः शिवः केवलोहम् ॥ ८ ॥

न जाग्रादिति । अत्र लयक्रमेण पौर्वापर्यनिर्देशः । तथा हि अस्मिन्मते

काल आत्मानमेव स्वस्वरूपमेवाहं ब्रह्मास्मीत्येवमवेत्साक्षात्कृतवत् । ततः सर्वं दृश्यजातं तद्ब्रह्माभवत् । यथा प्रातिभासिकं रजतं भ्रमापगमे शुक्तिर्भवति तद्वदित्यर्थः ॥ ७ ॥

भ्रान्त्यैवेति । यथा स्वप्नमध्ये जाग्रदादिकं भ्रान्त्या कल्प्यते तद्वत् । स्वप्नत्वापत्तिरिति । तथा च सर्वस्यैकैवावस्थेति स्वप्नमद्राक्षं सुप्तोऽहमासमित्येवं पूर्वानुभूतमवस्थाविशेषं प्रबुद्धो यदनुसंदधाति तन्नोपपद्यते । लक्षणत इति । आविद्यकः स्वप्न इति हि स्वप्नलक्षणम् । तच्च जाग्रत्स्वप्नसुषुप्तिरूपाणां त्रया-णामप्यवस्थाविशेषाणां समानमेव । तथापि व्यवहारानुरोधेनाविद्याया अनेके-ऽवस्थाविशेषाः सन्तीति कल्प्यते । तन्मूलका एवेमे सुप्तः प्रसुप्तः प्रबुद्ध इति व्यवहाराः । नन्वात्मा निर्विशेष इति तव सिद्धान्तः । अतस्तत्र सुप्त्यादयो व्यपदिश्यमाना विशेषा न स्वाभाविकाः किं त्वाविद्यका इति वक्तव्यम् । अवि-द्यागता विशेषा आत्मनि प्रतिभासन्त इति तत्तात्पर्यम् । इयं चाविद्या किं सत्य-थवा असती । आद्ये तस्यां विशेषा उपपन्ना भवन्तु किं त्वात्मा चाविद्या चेति द्वैतं तवानिष्टं प्रसज्यते । द्वितीये त्वद्वैतस्योपपत्तावपि विशेषा नोपपद्यन्त इति चेत्त-त्राह–असद्विलक्षणत्वेनेति । अविद्यायाः सद्विलक्षणत्वान्न द्वैतापत्तिः । असद्वि-लक्षणत्वाच्च तत्र सविशेषत्वमुपपद्यते । एवं चायं सुप्त इत्यादिव्यवस्थाविद्या-मूलकत्वादुपपद्यत इति भावः ।

न जाग्रदिति । जाग्रदिति भावप्रधानो निर्देशः । जागृतिरित्यर्थः । स्वप-धातोः 'स्वपो नन्' ( पा. सू. ३।३।९१ ) इति सूत्रेण भावे नन्प्रत्ययः । ततः स्वार्थे कः । स्वप्न एव स्वप्नकः । जाग्रदाद्यवस्थात्रयाभिमानिनो जीवस्य क्रमेण विश्व तैजस प्राज्ञ इत्येतास्तिस्रः संज्ञा भवन्ति । प्राज्ञ एव प्राज्ञकः । तुरीयश्च-तुर्थः । अत्र लयेति । यथा पञ्च भूतानि खं वायुर्ज्योतिरापः पृथिवीत्येवमुत्पत्ति-

१ ग क्ष–दा भासमानत्वेन जा । ; क ज–दा भासमाने जा । २ ग–सतोऽविद्याकृतविशेष-संभवात्सद्सद्वि । ३ ज–त्र सृष्टिलयक्रमेणैव पौर्वा । ४ ग–र्येण्यपदेशः । ५ ख–अस्मन्मते ।

पदार्थौ द्विविधः। दृक् दृश्यं[1] च। अन्यवादि[2]परिकल्पितानां पदार्थानामत्रैवान्तर्भावात्।

तत्र दृक्पदार्थ आत्मा[3] पारमार्थिक एकः[4] एव सर्वदैकरूपोप्यौपाधिकभेदेन त्रिविधः ईश्वरो जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः। प्रपञ्चितं चैतदधस्तात्। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं साक्षी।

---

क्रमेण निर्दिश्यन्ते। आकाशाद्वायुरुत्पद्यते ततस्तेज इत्यादिरुत्पत्तिक्रमः। लयक्रमेण तु तान्येव पृथिव्यापस्तेजो वायुराकाशश्चेत्येवं निर्दिश्यन्ते। पृथिव्या अप्सु लयस्तासां तेजसीत्यादिर्लयक्रमः। क्रमविशेषेण निर्देशे च वक्तुरिच्छैव नियामिका। प्रकृते च लयक्रमानुरोधाज्जाग्रतो विश्वस्य च प्राथम्यम्। जाग्रतः स्वप्ने तस्य च सुषुप्तौ लयः। तथा विश्वस्य तैजसे तस्य च प्राज्ञे लयः। मुमुक्षोर्हि जीवस्य सांसारिकाणामर्थानां मूलकारणपर्यन्तं विलय एव प्राधान्येन कर्तव्यो भवतीत्येतदभिप्रायेणाचार्यैरत्र लयक्रम आदृतः। दृक् दृश्यं चेति। दृक्चेतनो ज्ञानात्मकः। तदितरत्सर्वं जडं दृश्यम्।

पारमार्थिक इति। कालत्रयाबाध्यः पारमार्थिकः। अन्तःकरणेति। अन्तःकरणावच्छिन्नमन्तःकरणरूपेण परिणतं यदज्ञानं तदुपहितस्तादृशोपाधिविशिष्टो य आत्मा स जीवः। अथ वा अज्ञानस्य तादृशपरिणामात्प्राग् ये तादृशपरिणामयोग्या अज्ञानगतास्तत्संस्कारास्तादृशसंस्कारावच्छिन्नं यदज्ञानं तदुपहितस्तादृशोपाधिविशिष्टो य आत्मा स जीव इत्यर्थः। अधस्तादिति। प्रथमश्लोके जीवेश्वरस्वरूपविवेचनप्रस्तावे प्रतिबिम्बवादस्वरूपप्रदर्शनप्रसङ्गे निरूपितमेतत् ( पृ. ४६-पं. १ )। साक्षिणः स्वरूपमाह-अविद्येति। अनुसंधातृचैतन्यं साक्षीत्युच्यते। तच्च सर्वदा सर्वत्र चैकमेव। औपाधिकोऽपि तस्य भेदो न संभवति। यत्र ह्यौपाधिको भेद इत्युच्यते तत्र स भेदो वस्तुत उपाधिमात्रनिष्ठ एव। उपाधिसंनिधानेन चान्यत्र प्रतीयमान उपाधिविशिष्ट एवोपधेये प्रतीयेत न तूपाधिसंनिहितेऽपि केवल उपधेये। अग्निकणरूपोपाधिसंबन्धाज्जलासमानमौष्ण्यमग्निकणविशिष्ट एव जलेऽवभासते न तु तत्संनिहितेऽपि केवले जले। केवलं जलं तु तदानीमपि शीतमेव। अग्निकणगतोत्कटौष्ण्यप्रतिबन्धान्न तथा प्रतिभासत इत्यन्यत्। प्रकृते चोपाधिविशिष्टं चैतन्यं जीवशब्देनेश्वरशब्देन चोच्यते। तत्रोपाधिगतो भेदोऽवभासतां नाम। न तु साक्षिशब्दवाच्ये केवलचैतन्ये। साक्षित्वं विषयावभासकत्वम्। तच्च नान्तःकरणविशिष्टे चैतन्ये संभवति।

---

१ ङ च छ ज झ-दृश्यश्च। २ ग-अन्येषां वादि। ३ क ख ग-त्मा सर्व। ४ च छ ज झ-एकः सर्व।

बिम्बेश्वरपक्षे च[1] बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवज्जीवेश्वरानुगतं सर्वानुसंधातृ चैतन्यं साक्षीत्युच्यते। वार्तिककारमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः।

तत्रेश्वरस्त्रिविधः[2]। स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। कारणीभूतरजउपहितो

अन्तःकरणस्य जडत्वात्। ननु साक्षितापि अन्तःकरणादिसाधनसापेक्षैव। सत्यम्। किं ततः। न हि तावता साक्षितायाश्चैतन्यमात्रनिष्ठत्वं हीयते। जायात्वं भर्तृसापेक्षमित्येतावता भर्तृविशिष्टायां तस्यां जायात्वं न प्रत्येति कश्चित्। एवं च सर्वेषां जीवानां तत्तद्विषयकज्ञान ईश्वरस्य सर्वविषयकज्ञाने च सर्वदा सर्वत्रानुसंधातृ चैतन्यं साक्षिशब्दाभिधेयं जीवेश्वरोभयानुगतमेकमेव। अविद्याप्रतिबिम्बेश्वरपक्षे व्यष्ट्यविद्याप्रतिबिम्बस्वरूपो जीवो वाच्य इति साक्षिणो बिम्बचैतन्यस्य जीवेश्वरोभयानुगतत्वं स्पष्टमेव। यदाप्यज्ञानोपहितं बिम्बचैतन्यमीश्वरोऽज्ञानप्रतिबिम्बितं चैतन्यं च जीव इति प्रागुक्तो (पृ. ४६--पं. १) विवरणकारोक्तः पक्षः स्वीक्रियते तदापि साक्षिचैतन्यस्य जीवेश्वरोभयानुगतत्वमस्त्येवेत्याह--बिम्बेश्वरपक्षे चेति। जीवस्वरूपमीश्वरस्वरूपं चौपाधिकं कल्पितम्। कल्पनायाश्च किमप्यधिष्ठानमवश्यं वाच्यमिति तादृशकल्पनाधिष्ठानभूतं तदुभयानुगतं यत्सामान्यं चित्स्वरूपं तदेव साक्षि भवति। यथा बिम्बभूतं यद्देवदत्तमुखं तस्य प्रतिबिम्बमात्रे दृष्टेपीदं देवदत्तमुखमित्येवं प्रत्यभिज्ञा जायते। देवदत्तप्रतिकृतौ दृष्टायां तत्रापीदं देवदत्तमुखमिति प्रत्यभिज्ञा भवति। अतो बिम्बभूते देवदत्तमुखे तत्प्रतिबिम्बे तत्प्रतिकृतौ चेत्येतत्सर्वानुगतं देवदत्तीयं सामान्यमुखस्वरूपं किंचिदवश्यमास्थेयं भवति तद्वदिति भावः। वार्तिककारेति। तन्मत उपाधिसंबन्धाद्बासमानमपीश्वरत्वमुपाधिसंनिहिते केवलचैतन्य एवेति साक्षिशब्दाभिधेयमीश्वरशब्दाभिधेयं चैकमेव। न हीश्वरत्वमुपाधिविशिष्ट एवेत्यत्र नियामकः कश्चिद्धेतुरस्ति। तथा च तन्मते द्वैविध्यमेव चित इति भावः।

कारणीभूतेति। जीवोपाधावप्येते सत्त्वादयो गुणा वर्तन्ते। किं तु ते त्रिगुणात्मकमूलप्रकृतेः कार्यभूताः। अत्र कारणीभूतेत्यस्याकार्यभूतेति मूलकारणीभूतेति वार्थः। तेन जीवोपाधिगतानां सत्त्वादीनां गुणानां कर्मविशेषे सुखविशेषे वा कारणत्वेपि नोक्तानां विष्णुब्रह्मरुद्रलक्षणानां तत्रातिव्याप्तिः। यदि चात्र प्रकृतमीश्वरपदमनुकृष्य कारणीभूतसत्त्वगुणावच्छिन्नः पालयिता य ईश्वरः स विष्णुरित्युच्यते तदा कारणीभूतेति पदं व्यर्थं स्यात्। वस्तुस्थितिप्रदर्शनार्थं वाङ्गीकर्तव्यं स्यात्। सत्त्वगुणावच्छिन्न इत्यस्य प्राधान्येन सत्त्वगुणावच्छिन्न

१ ग ज--तु। २ ग च छ ज झ--श्वरोपि त्रिवि।

ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा। तथापि स्थूलभूत-स्रष्टृत्वात्क्वचिद् ब्रह्मेत्युपचर्यते। कारणीभूततमउपहितो रुद्रः संहर्ता। एवं चैकस्यैव चतुर्भुजचतुर्मुखपञ्चमुखाद्याः[1] पुमाकाराः[2] श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः। अन्ये च मत्स्यकूर्मादयोनन्तावतारा लीलयैवाविर्भवन्ति भक्तानुग्रहार्थमित्यवधेयम्[3]।

इत्यर्थः। इतरगुणद्वयं तु तत्रांशतोस्त्येव। ब्रह्मा स्रष्टेति। कारणीभूतरजोगुणावच्छिन्नो जगदुत्पादयिता य ईश्वरः स ब्रह्मा। अयमीश्वरार्थको ब्रह्मशब्दः पुंसि। निरुपाधिकशुद्धचैतन्यार्थकस्तु ब्रह्मशब्दो नपुंसकलिङ्गः। शब्दस्वाभाव्यात्। तथा कारणीभूततमोगुणावच्छिन्नो जगत्संहारको य ईश्वरः स रुद्रः। तथा च विष्णुब्रह्मरुद्राणां केवलमौपाधिको भेदः। एक एवेश्वरस्तत्तद्गुणप्राधान्येन तानि तानि कार्याणि यथाकालं करोतीति बोध्यम्। हिरण्यगर्भ इति। अद्वैतवेदान्तिमते सामान्यत इयं प्रक्रिया—चेतनस्योपाधिभूतं जडजातम्। तत्र जडव्यष्ट्युपाधिकश्चेतनो जीव इत्युच्यते। तथा जडसमष्ट्युपाधिकश्चेतन ईश्वर इत्युच्यते। तच्च चेतनोपाधिभूतं जडजातं तत्तत्कालकृतावस्थाभेदेन स्थूलं सूक्ष्ममव्याकृतं चेति त्रिविधम्। तत्र पञ्चीकृतभूतात्मकं दृश्यमानं जगत्स्थूलम्। तादृशस्थूलस्य कारणीभूतमपञ्चीकृतभूतात्मकं सूक्ष्मम्। तादृशसूक्ष्मस्यापि कारणीभूतं मूलाज्ञानमव्याकृतम्। एवमुपाधित्रैविध्येन व्यष्टिसमष्ट्युपाधिकयोर्जीवेश्वरयोरपि प्रत्येकं त्रैविध्यम्। स्थूलव्यष्ट्युपाधिको जीवो विश्व इत्युच्यते। सूक्ष्मव्यष्ट्युपाधिको जीवस्तैजस इत्युच्यते। अव्याकृतव्यष्ट्युपाधिको जीवः प्राज्ञ इत्युच्यते। स्थूलसमष्ट्युपाधिक ईश्वरो विराडित्युच्यते। सूक्ष्मसमष्ट्युपाधिक ईश्वरो हिरण्यगर्भ इत्युच्यते। अव्याकृतसमष्ट्युपाधिक ईश्वर ईश इत्युच्यते। अस्यैव चेशस्य तत्तद्गुणप्राधान्येन ब्रह्मविष्णुरुद्रसंज्ञा भवन्ति। निरुपाधिकश्चेतनस्त्वयमात्मा ब्रह्मेत्यादिश्रुतिषु प्रदर्श्यत इति। तथा च सूक्ष्मभूतोपाधिको हिरण्यगर्भः सूक्ष्मस्य स्थूलरूपेण परिणामं कर्तुं प्रभवेत्। न त्वव्याकृतस्य सूक्ष्मरूपेण परिणामे तस्य सामर्थ्यम्। अतो हिरण्यगर्भो न ब्रह्मा। तस्य सूक्ष्मभूतकारणत्वाभावेन सर्वजगदुत्पादकत्वाभावादिति भावः। एवं चैकस्यैवेति। चतुर्भुजो विष्णुः। चतुर्मुखो ब्रह्मा। पञ्चमुखो रुद्रः। श्रीर्लक्ष्मीः। भारती सरस्वती। भवान्यम्बिका। एते पुरुषरूपाः स्त्रीरूपाश्च सर्वेप्याकारा एकस्येश्वरस्यैव। एते चावताराः सर्वशक्तिमन्तः। अन्ये चेति। एते च कार्य-

१ च–र्मुखाद्याः। २ ङ–पुरुषाकाराः। ३ ख ङ च छ ज झ–म्। जीवो।

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ।।

जीवोऽपि त्रिविधः । स्वोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदात् । तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः । स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः । शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी

विशेषसाधनार्थं स्वीकृताः शक्तिविशेषाश्रयीभूताः । चिन्मयस्येति । चिन्मयं ज्ञानमात्रस्वरूपम् । अद्वितीयं द्वितीयरहितम् । अस्य द्वितीयनिषेधस्य सामान्यमुखप्रवृत्तत्वात्सजातीयं विजातीयं स्वगतधर्मरूपं च किमपि द्वितीयं नास्तीति लभ्यते । तेन त्रिविधभेदशून्यमित्यर्थः । निष्कलं निरवयवम् । अशरीरं शरीररहितम् । एतादृशस्यापि ब्रह्मणो या चतुर्भुजादिमूर्तिकल्पना सा केवलमुपासकानां तत्तदभीष्टसिद्ध्यर्थमेव । न च कल्पितस्यावस्तुत्वात्कथं तत उपासकाभीष्टसिद्धिर्भवेदिति वाच्यम् । उपासकाभीष्टस्यापि कल्पितत्वेनावस्तुत्वात् । उपास्योपासकभावोऽपि हि कल्पित एव ।

अविद्यान्तःकरणेति । अविद्या तत्परिणामभूतमन्तःकरणं स्थूलशरीरं चेत्येतत्त्रितयोपाधिको जाग्रदवस्थायां जीवः । अयं विश्वसंज्ञः । विश प्रवेशन इति धातोर्वप्रत्ययः । स्थूलपर्यन्तं हि तदास्य प्रवेशः । स्वप्नावस्थायां त्वाद्यद्वयोपाधिकस्त्यक्तस्थूलशरीराभिमानो जीवः । अयं तैजस इत्युच्यते । तैजसस्तेजोमयः । यद्यप्ययं सर्वदैव तेजोमयस्तथापि स्वप्ने स्थूलशरीराभिमानत्यागात्स्वयंज्योतिर्भवतीति विशेषः । सुषुप्त्यवस्थायां तु न स्थूलशरीरमुपाधिः । नाप्यन्तःकरणम् । किं त्वन्तःकरणसंस्कारावच्छिन्ना याविद्या तन्मात्रोपाधिको जीवः । अयं प्राज्ञ इत्युच्यते । प्रकर्षेणाज्ञत्वात् । अथ वात्मस्वरूपसंपत्तिः प्रज्ञा । सास्यास्तीति प्राज्ञः । एवं च सुषुप्तावविद्यामात्रमुपाधित्वेन स्वीकृतम् । स्वप्ने तु तदस्त्येव । किं त्वधिककञ्चुकप्रवेशवदविद्याकार्यमन्तःकरणमप्याधिक्यमुपाधित्वेन स्वीकृतम् । जागृतौ तु ततोऽप्याधिकं स्थूलशरीरमप्युपाधित्वेन स्वीकृतम् । ननु स्वप्नेऽन्तःकरणमात्रमेवोपाधिरस्तु न त्वविद्या । तथा जागृतौ स्थूलशरीरमात्रमेवोपाधिरस्तु न त्वविद्या नाप्यन्तःकरणम् । एवं चावस्थात्रये स्वतन्त्रमेकैकमेवोपाधिभूतमास्त्विति चेन्न । अविद्याया उपाधित्वेनास्वीकारेऽन्तःकरणस्य स्थूलशरीरस्य चोपाधित्वेन स्वीकारायोगात् । तयोरविद्यापरिणामरूपत्वात् । तथा जागृतावन्तःकरणस्योपाधित्वेनास्वीकारे स्थूलशरीरमुपा-

१ ङ च छ ज झ—प्नावस्थाभि । २ ज—सः । स एव शरी । ३ ख ङ—धिरहि ।

प्राज्ञः । एतेषां च स्वतन्त्रोपाधिभेदाभावेन स्वतन्त्रभेदाभावेप्यवान्तरोपाधिभेदा[1]-दकत्वप्यवान्तरभेदो व्यवह्रियते । साक्षी तु सर्वानुसंधाता सर्वानुगतस्तुरीयाख्य एकविध एव । तत्रोपाधिभेदेनापि न क्वचिद्भेदः । तदुपाधेरेकरूपत्वात् ।

अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः । तस्य चापारमार्थिकत्वेपि व्यावहारिकसत्ता[2]भ्युपगमान्न स्वाप्निकपदार्थवन्निरूपणं व्यर्थम् । उपासना[3]दौ तदुपयोगादिति । सोपि त्रिविधः । अव्याकृत[4]मूर्तामूर्तभेदात् । तत्र साभासाविद्या[5]

---

धित्वेन स्वीकर्तुं न शक्यते । स्थूलशरीरस्यान्तःकरणतन्त्रत्वात् । एवं चान्तः-करणमविद्यानिरपेक्षं तथा स्थूलशरीरमविद्यान्तःकरणनिरपेक्षं स्वतन्त्रमुपाधि-भूतं न भवति । अतोत्रोपाधिरुपाध्यन्तरादत्यन्तभिन्नः स्वयमेव न भवतीति स कथं स्वसंबन्धेनोपधेयेत्यन्तभेदं साधयेत् । यद्यप्येवं विश्वतैजसप्राज्ञानामौपा-धिकोप्यत्यन्तभेदो नास्त्येव तथाप्युपाधिभूतस्यैकस्यैवाज्ञानस्य कारणावस्था तत्तत्कार्यावस्था चेत्यवान्तरभेदादयं विश्वोयं तैजसोयं प्राज्ञ इति भेदो व्यपदि-श्यते । तदाह–एतेषां चेति । एकरूपत्वादिति । चैतन्यस्य साक्षितापादक उपा-धिश्च सर्वत्र सत्त्वगुण एकरूप एव । किं च साक्षित्वं चैतन्यमात्रधर्म इत्युपा-धिसंनिधानेनापि साक्षिस्वरूपे भेदो दुरुपपाद एव भवति ।

एवं दृग्दृश्यरूपपदार्थद्वयमध्ये दृग्रूपं पदार्थमवान्तरभेदसहितं निरूप्य दृश्यपदार्थं निरूपयति–अविद्यातद्व्याप्येति । तच्छब्देनाविद्या परामृश्यते । अ-विद्या तथा तयाविद्यया व्याप्तं च यदविद्याकार्यमेतदुभयात्मक इत्यर्थः । कार-णेन हि कार्यस्वरूपं व्याप्यते मृदा घटवत् । नन्वद्वैतवेदान्तिनये प्रपञ्चस्य कृत्स्नस्याविद्यकत्वेन स्वाप्निकपदार्थतुल्यत्वात्तन्निरूपणं व्यर्थमेव स्यादित्यत आह–तस्य चापारमार्थिकत्वेपीति । सत्ता हि त्रिविधा पारमार्थिकी व्यावहारिकी प्रातिभासिकी च । तत्र ब्रह्मसत्ता पारमार्थिकी । आविद्यकस्य प्रपञ्चस्य सत्ता व्यावहारिकी । शुक्तिरजतादेः सत्ता प्रातिभासिकी । तत्र प्रातिभासिकस्य व्यवहारे नोपयोगः । न हि शुक्तिरजतस्य कश्चिद्राजतोलंकारः कर्तुं शक्यते । एव पारमार्थिकात्मैक्यरूपेणावस्थितौ तदानीं व्यावहारिकस्योपयोगो मा भूत्नाम । किं तु ततः पूर्वमुपासनादिव्यवहारदशायां व्यावहारिकस्योपयोगोस्त्येव । आत्मो-पासनमपि व्यावहारिकमेव । उपासना हि भेदगर्भा । उपास्योपासकभावाधीन-त्वात् । तदाह–उपासनादाविति । सोपि । दृश्यः प्रपञ्चोपि । अव्याकृतपदार्थमाह–तत्र साभासेति । अविद्या (१) तस्याश्चिता सह संबन्धः (२) जीवेश्वरविभागः

---

१ ङ–भेदेनैक । २ च छ ज झ–सत्त्वाभ्यु । ३ ङ च छ ज झ–नादावुप । ४ छ ज झ–कृतामूर्तमूर्तभे । ५ छ–द्यामूर्तमूर्तप्रप ।

मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा तदजन्यत्वेपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैश्चैतन्यतत्संबन्धजीवेश्वरविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते। सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्याख्यानि पञ्च-

---

(३) अविद्यागतश्चिदाभास--(४) श्चेति पदार्थचतुष्टयमव्याकृतशब्देनोच्यते। अविद्या नाम काचिदीशशक्तिः। तस्याश्च जडत्वेपि स्वरूपतः स्वच्छत्वात्तत्र प्रतिफलिता या चित्स आभास इत्युच्यते। अयं च चित आभासो न चिदेवेत्यस्याभासस्य न दृग्रूपे प्रथमपदार्थेन्तर्भावः। अयमाभासो जडोपि न भवति चेत्कामं मा भूदस्य जडत्वम्। नैतावता चिद्रूपः सः। चिज्जडैतदुभयविलक्षण एवायम्। ईदृशेनाभासेन सहिताविद्या। सा चेश्वरस्य या मूर्तामूर्तनिखिलप्रपञ्चोद्भावनशक्तिस्तद्रूपैव नातिरिक्ता। यच्चाव्याकृतशब्दितमविद्यादिपदार्थचतुष्टयमुक्तं तत्राविद्याव्याप्यं तदितरत्त्रिकम्। ननु य एते चिदविद्यासंबन्धो जीवेश्वरविभागश्चिदाभासश्चेति त्रयः पदार्थास्ते कथमविद्यया व्याप्ताः। घटो हि मृज्जन्यत्वान्मृदा व्याप्तो भवति। एते तु नाविद्यात उत्पद्यन्ते। किं त्वविद्यावदनादय एवेति चेन्न। जन्यत्वस्य व्याप्यतानियामकत्वाभावात्। न हि स्वव्याप्यत्वे स्वजन्यत्वं तन्त्रम्। किं तु स्वावस्थित्यधीनावस्थितिकत्वम्। यथा मृदोवस्थितावेव घटावस्थानं दृश्यते मृन्निवृत्तौ तु क्षणमपि नावतिष्ठते किं तु निवर्तत एवेति घटस्य मृद्व्याप्यत्वं तथात्राविद्याया अवस्थान एवैतेवतिष्ठन्ते अविद्याया निवृत्तौ तु क्षणमपि नावतिष्ठन्त इति अविद्याव्याप्यत्वमेतेषां सिध्यति। अत्र चैतेषामविद्याव्याप्यत्वप्रदर्शनेन मुमुक्षुणाविद्यानिवृत्त्यर्थं यत्ने क्रियमाणे तदितरैतत्त्रयनिवृत्त्यर्थं न यत्नान्तरं किंचिदास्थेयं भवतीति सूच्यते। तदजन्यत्वेपीत्यादितच्छब्दचतुष्टयेनाविद्या परामृश्यते। चैतन्यतत्संबन्धशब्दे पूर्वपद द्वन्द्वगर्भस्तत्पुरुषः। एवं जीवेश्वरविभागशब्देपि। अत्र जीवेश्वरयोर्दृग्रूपे प्रथमपदार्थ एवान्तर्भावः। तद्विभागमात्रमव्याकृतम्। एवं चैतन्यतत्संबन्ध इत्यत्रापि तयोः संबन्धमात्रमव्याकृतम्। चैतन्यं तु दृग्रूपे संगृहीतम्। तच्छब्दपरामृष्टाविद्या च साभासाविद्येत्यनेनाव्याकृते प्रथमत एव संगृहीता। अमूर्तपदार्थमाह--सा चेति। पूर्वपूर्वेति। अनादिसंस्काररूपेणावस्थितं यज्जीवकर्म तत्सहकृता सतीत्यर्थः। संस्कारस्य चाव्याकृतत्वमेव। तस्य शक्तिविशेषरूपत्वेनाविद्यास्वरूपान्तर्गतत्वात्। उक्ताव्याकृतचतुष्टयातिरिक्तं पञ्चममिदं संस्काराख्यमव्याकृतमित्यपि केचिदाहुः। सर्वथा संस्कारस्याव्याकृतत्वे न विवादः। शब्दस्पर्शेति। अद्वैतवेदान्तिनां मते गुणगुणिनोस्तादात्म्यमेवेत्याकाशस्य सूक्ष्मं स्वरूपं शब्द एव। एवं वाय्वादीनामपि सूक्ष्मं रूपं

---

१ ङ--वेशविभा। २ घ--च जडा।

महाभूतानि जनयति । तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशः ।

एवमविद्यात एवान्धकारोपि भावरूप एवावरणात्मा[3] चाक्षुषज्ञानविरोधी आलोकनाश्यश्च झटिति[3] विद्युदादिवदाविर्भवति तिरोभवति चेति सिद्धान्तः । संसारहेतुदेहानुपादानत्वाच्च[4] न श्रुतिषु सृष्टिप्रक्रियायामाम्नात इत्यविरोधः ।

---

स्पर्शादिकमिति बोध्यम् । तत्र पूर्वेति । शब्दात्मकं यदाकाशं तत्स्वरूपाविद्या स्पर्शात्मकं वायुं जनयति । तत्र कारणस्वरूपान्तर्गतः शब्दः कार्यरूपे स्पर्शात्मके वायावनुवर्तत इति शब्दस्पर्शौतदुभयात्मको वायुः संपद्यते । तादृशवायुभावं प्राप्ताविद्या रूपात्मकं तेजो जनयति । तत्रापि पूर्ववत्कारणस्वरूपानुवर्तनाच्छब्दस्पर्शरूपात्मकं तेजः संपद्यते । एवं ततो जायमानं जलं शब्दस्पर्शरूपरसात्मकं भवति । ततो जायमाना पृथिवी शब्दस्पर्शरूपरसगन्धात्मिका भवति । अत्राविद्या न कात्स्न्र्येनाकाशरूपेण परिणमते किं त्वेकदेशेन । आकाशमपि चैकदेशेनैव वायुभावमापद्यते । वायुरप्येकदेशेनैव तेजो जनयति । एवमेव तदेकदेशाज्जलं तदेकदेशात्पृथिवी चेति । इत्थं च पूर्वपूर्वस्योत्तरापेक्षया महत्त्वं सिध्यति ।

प्रसङ्गादाह-एवमविद्यात इति । वैशेषिका ह्यन्धकारस्य तेजोऽभावरूपत्वं मन्यन्ते । तन्न युक्तम् । नीलं तमश्चलतीति प्रतीत्यनुरोधेनान्धकारस्य भावरूपतायाः सिद्धत्वात् । न च तादृशप्रत्ययो भ्रम एवेति वाच्यम् । बाधाभावात् । यथा नेदं रजतमिति बाधोनुभूयते तथा न नीलमिदं तम इत्येवं बाधो नानुभूयते । अतिरिक्तपदार्थाङ्गीकारप्रयुक्तं गौरवं तु न दोषावहम् । प्रामाणिकं गौरवं न दोषायेत्युक्तेः । अन्धकारस्य चाक्षुषत्वेन प्रत्यक्षप्रमाणसिद्धत्वात् । आवरणात्मेति । आवरणस्वरूप इत्यर्थः । अत एवास्य चाक्षुषज्ञानविरोधित्वम् । नन्वन्धकारस्य भावरूपत्वे भावरूपाणामाकाशादीनामात्मन आकाशः संभूतः ( तै. २-१-१ ) इत्यादिश्रुतिषु यथोत्पत्तिर्वर्णिता तथान्धकारस्योत्पत्तिः कुतो नोक्तेति चेत्तत्राह-संसारहेत्विति । अयं भावः । प्राधान्येन भावानामुत्पत्तिं वर्णयितुं न श्रुतेः प्रवृत्तिः । मुमुक्षूणां मोक्षसाधनीभूततत्त्वज्ञानार्थमात्मस्वरूपयाथात्म्यं प्रदर्शयितुं हि मुख्यतः श्रुतेः प्रवृत्तिः । नैसर्गिकश्च प्राणिनां संसारबन्धकारणीभूतो देहादिष्वात्मभ्रमो यावन्न निवारितस्तावदात्मस्वरूपयाथात्म्यप्रदर्शनं दुःसंपादम् । अतस्तादृशभ्रमनिवारणाय देहादेर्मूलकारणं प्रदर्शनीयमित्यभिप्रायेण भौतिकदेहोपादानकारणानामाकाशादीनामुत्पत्तिर्वर्णिता । अन्धकारस्तु न देहोपादानभूत इति तदुत्पत्तेरवर्णनेपि न श्रुतेर्न्यूनतेति । किं च श्रुता-

---

१ ख ङ छ ज झ-त्तरकार्यं प्रति । २ छ-णात्मकश्चाक्षु । ३ ग च छ ज झ ञ-ति मन्दाविद्यु । ४ च छ ज झ-देहोपादानत्वाभावाच्च ।

दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ । आकाशस्यैव दिग्व्यवहारहेतुत्वात् । दिशः श्रोत्रमिति श्रुतेश्च । कालस्त्वविद्यैव । तस्या एव सर्वाधारत्वादिति । अयं चाव्याकृतपदार्थ ईश्वरोपाधिः ।

तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्चमहाभूतान्यमूर्ताख्यानि कारणैक्यात्सत्त्वरजस्तमोगुणात्मकानि सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छं द्रव्यं चित्ररूपमिव मिलित्वा जनयन्ति । तस्य च ज्ञानशक्तिप्रधानोंशोन्तःकरणम् ।

---

वाकाशवाय्वादीनामुत्पत्तिवर्णनेन परमाणूनां नित्यत्वमिति भ्रमं दूरीकृत्य न किमपि जडं नित्यं किं त्वेकश्चेतन आत्मैव नित्य इत्यात्मरूपमेकमेव तत्त्वमिति साधितम् । तथा चात्मेतरस्य सर्वस्य भावजातस्यानित्यत्वं श्रुतेः सिषाधयिषितं भवतीत्यवगम्यते । अन्धकारस्य तु नित्यत्वं वैशेषिकाणामप्यनाभिमतमेवेति श्रुतौ तदुत्पत्तिकथनेन तस्यानित्यत्वसाधनं सिद्धसाधनमेव स्यादतस्तत्रोदासितं श्रुत्या । नन्वेवं भावरूपयोर्दिक्कालयोरुत्पत्तिप्रदर्शनेनानित्यत्वमवश्यं प्रदर्शनीयं भवति । वैशेषिकादिवादिभिस्तयोर्नित्यत्वाभ्युपगमादिति चेदुच्यते । दिश उत्पत्तिस्तावदात्मन आकाशः संभूतः ( तै. २-१-१ ) इत्यत्रैव प्रदर्शिता । दिश आकाशापेक्षयानतिरिक्तत्वात् । कालस्तु नाविद्यातोतिरिक्तः । सा च तम आसीत् ( तै. ब्रा. २।८।९।४ ) इत्यादिश्रुतावुक्तैव । तदाह–दिक्कालौ त्विति । अप्रामाणिकत्वादित्यस्य पदार्थान्तरत्वेनाप्रामाणिकत्वादित्यर्थः । दिशः श्रोत्रमिति । श्रोत्रेन्द्रियस्याकाशरूपत्वं वैशेषिकाणामप्यभिमतम् । दिशः श्रोत्रमिति श्रुतौ दिशः सकाशाच्छ्रोत्रोत्पत्तिकथनेन दिशः श्रोत्रोपादानकारणत्वं प्रतिपाद्यते । तथा चाकाशस्वरूपस्य श्रोत्रस्योपादानकारणमाकाशमेव भवितुमर्हतीत्यर्थाद्दिश आकाशरूपत्वं सिद्धं भवति ।

अपञ्चीकृतानि । पञ्चीकरणमप्राप्तानि । पञ्चानां भूतानां मिथो मिश्रणं पञ्चीकरणम् । तत्प्रकारश्चाग्रे मूल एव तत्र च प्रत्येकम् ( पृ. १००–पं. २ ) इत्यादिना वक्ष्यते । कारणैक्यादिति । कारणेन सह कार्यस्यैक्यं लोके दृश्यते । न हि घटो मृत्स्वरूपतामत्येति । ब्रह्मसूत्रकारैरपि तदनन्यत्वमारम्भणशब्दादिभ्यः ( ब्र. सू. २।१।१४ ) इत्यनेन कार्यस्य कारणानन्यत्वमुक्तम् । तथा च यथा सुश्लक्ष्णया मृदा संपादितो घटो मृद्रूपत्वात्सुश्लक्ष्ण एव भवति तथा त्रिगुणात्मिकयाविद्यया संपादितानि पञ्च भूतानि त्रिगुणात्मकानि संपद्यन्ते । स्वच्छं द्रव्यमिति । कारणगतसत्त्वांशाधिक्येनास्य जायमानत्वात्स्वच्छत्वम् । यथा राजतः कार्षापणो धात्वन्तरमिश्रितोपि रजतांशाधिक्येन जायमानत्वाद्राजतो दृश्यते तद्वत् । ज्ञानक्रियाशक्त्यात्मकत्वेन शक्तिद्वययुतत्वाच्चित्ररूपसादृश्यम् । तस्य चेति ।

१ च छ ज झ–रजनकत्वसंभवाद्दिशः श्रोत्रमिति श्रुतेः । काल ।

तच्च[1] बुद्धिर्मन इति द्विधोच्यते । क्रियाशक्तिप्रधानोंशः प्राणः । स पञ्चधा प्राणोऽपानो व्यान उदानः समान इति ।

एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात्प्रत्येकमिन्द्रियद्वयं[2] जायते । आकाशाच्छ्रोत्रवाचौ । वायोस्त्वक्पाणी । तेजसश्चक्षुष्पादौ । अद्भ्यो रसनपायू । पृथिव्या घ्राणोपस्थौ[3] । अत्र तेजोमयी वाक् ( छा. ६।५।४ ) इति श्रुतेस्तैजसी वाक् ।

ज्ञानक्रियाशक्त्यात्मकस्यैकस्य स्वच्छद्रव्यस्येत्यर्थः । एवं चाद्वैतवेदान्तिमते प्राणान्तःकरणयोरैक्यमेव । केवलं शक्तिभेदाद्भेदो व्यपदिश्यते । तच्च बुद्धिरिति । निश्चयात्मकवृत्तिमदन्तःकरणं बुद्धिरित्युच्यते । अनिश्चयात्मकवृत्तिमदन्तःकरणं मन इत्युच्यते । अहंकारश्च बुद्धिविशेष एव । तस्याहमित्याकारकनिश्चयविशेषात्मकवृत्तिमदन्तःकरणरूपत्वात् । तथा चित्तं मनोविशेष एव । तस्य संशयरूपानिश्चयविशेषात्मकवृत्तिमदन्तःकरणरूपत्वात् । प्राणापान इति । हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ इत्येवं स्थानभेदेन तेषां भेदो बोध्यः ।

आकाशादिति । कर्णविवरवृत्ति ज्ञानशक्तिमच्च यदाकाशं तच्छ्रोत्रेन्द्रियम् । तथा मुखान्तर्वर्ति क्रियाशक्तिमच्च यदाकाशं तद्वागिन्द्रियम् । एवमेव वायुप्रभृतिषु चतुर्षु प्रत्येकमिन्द्रियद्वयं बोध्यम् । अत्रेदं बोध्यम्-आकाशगुणः शब्दः । तद्ग्राहकं च श्रोत्रेन्द्रियं दृश्यते । शब्दाश्रयत्वादेव च तच्छब्दमेव गृह्णाति इत्यवश्यं कल्पनीयम् । शब्दग्राहकतावच्छेदकस्य धर्मान्तरस्य तत्रादर्शनात् । तथा च शब्दवत्त्वात्तस्याकाशरूपतैव स्वीकर्तुमुचिता । वागिन्द्रियं तु शब्दोद्भावकत्वात्तथा । वायोः स्वाभाविको गुणः स्पर्शः । वायौ शब्दस्तु वायोराकाशकार्यत्वात्कारणादनुवृत्तः । तथा च वायुगतस्वाभाविकस्पर्शगुणग्राहकत्वात्त्वगिन्द्रियस्य स्पर्शवत्त्वकल्पनात्त्वगिन्द्रियं वायुरूपम् । वायोः क्रियाशक्तिः । सा च पाणीन्द्रियेऽधिका दृश्यत इति पाणीन्द्रियस्य वायुरूपत्वमुचितम् । तेजसः स्वाभाविको गुणो रूपम् । शब्दस्पर्शौ च तत्र दृश्यमानौ कारणादनुवृत्तौ न तु स्वाभाविकौ । तथा च तादृशरूपग्राहकत्वाच्चक्षुषो रूपवत्त्वानुमानाच्चक्षुस्तैजसम् । पादयोर्घृतादिसंमर्दनेन चक्षुषः स्वास्थ्यदर्शनात्पादेन्द्रियं तेजोरूपम् । जलस्य स्वाभाविको गुणो रसः । शब्दः स्पर्शो रूपं च कारणादनुवृत्तम् । तादृशरसग्राहकत्वाद्रसनेन्द्रियस्य रसवत्त्वानुमानाद्रसनेन्द्रियं जलस्वरूपम् । पाय्विन्द्रियस्य जलवन्मलशोधकत्वाज्जलस्वरूपत्वमुचितम् । पृथिव्याः स्वाभाविको गुणो गन्धः । शब्दस्पर्शरूपरसाः कारणादनुवृत्ताः । गन्धग्राहकत्वाद् घ्राणेन्द्रियस्य गन्धवत्त्वानुमानाद् घ्राणेन्द्रियं पृथिवीस्वरूपम् । उपस्थेन्द्रियस्य तु गन्धविशेषातिशयव्यञ्जकत्वात्पृथिवीस्वरू-

१ छ—तच्च मनो बुद्धिरिति । २ च छ ज ञ—द्वयद्वयं । ३ च छ ज ञ—स्थौ चेति । अत्र च तेजो ।

पादस्तु नाभस इति केचित् । शब्दव्यञ्जकेन्द्रियत्वेन श्रोत्रवद्वाचो नाभसत्वं पादचिकित्सया च चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्यापि तैजसत्वमिति[2] युक्तमुत्पश्यामः । तेजोमयत्वश्रुतिस्तु मनसः पञ्चभूतकार्यस्याप्यन्नमयत्वश्रुतिरिव तदुपकार्यतया व्याख्येया । मनसश्च पञ्चभूतगुणग्राहकत्वेन तद्गुणवत्त्वनिश्चयात्पञ्चमहाभूतात्मकत्वमित्यन्यदेतत् ।

एतेषामधिष्ठातारो देवा अपि ज्ञानशक्तिक्रियाशक्तिप्रधानाः । दिगग्नी वातेन्द्रौ आदित्यविष्णू वरुणमित्रौ अश्विप्रजापती इति । तत्र ज्ञानशक्तिसमष्टिरन्तःकरणम् । क्रियाशक्तिसमष्टिः प्राणः ।

शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि । त्वक्चक्षुषी स्वग्राह्यगुणाश्रयं द्रव्यमपि गृह्णीतः ।

पत्वमुचितमिति । नाभसः । नभ आकाशम् । तद्विकारो नाभसः । आकाशमय इत्यर्थः । तेजोमयत्वश्रुतिरिति । तेजोमयी वागिति श्रुतौ वाचस्तेजोमयत्वं किन्तु तेजसा पोषितत्वाभिप्रायेणौपचारिकी बोध्येति न तद्विरोध उद्भावनीयः । यथा पञ्चभूतकार्यस्यापि मनसोऽन्नमयं हि सोम्य मनः (छा. ६।५।४) इति श्रुतावन्नभक्षणेन मनसः प्रसन्नता संपद्यत इत्यभिप्रायेणान्नमयत्वमुक्तं तथा तैजसपदार्थभक्षणेन वागिन्द्रियकार्यं शब्दोच्चारणरूपं सुसंपाद्यं भवतीत्यभिप्रायेण वाचस्तेजोमयत्वमुक्तम् । नन्वन्नमयं हि सोम्य मन इति श्रुत्यनुसारान्मनसः पार्थिवत्वमथास्तु घटादिवदिति चेन्न । तथा सति तस्य स्वतो गन्धवत्त्वात्तेन रूपेण गन्धमात्रग्राहकत्वमेव तस्य स्याद् घ्राणेन्द्रियवत् । न तु शब्दादिग्राहकत्वम् । दृश्यते च शब्दादीन्गृह्णातीति । अतस्तदन्यथानुपपत्त्या मनसि शब्दादयः सर्वे गुणा एष्टव्याः । तथा सति तत्तद्गुणवत्त्वेन रूपेण तद्गुणग्रहणमुपपद्यते । तथा च मनसः शब्दस्पर्शरूपरसगन्धाश्रयत्वात्पाञ्चभौतिकत्वं सिद्धम् । तदाह—मनसश्चेति ।

एतेषामिति । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानां पञ्चानां ज्ञानेन्द्रियाणां क्रमेण ज्ञानशक्तिप्रधाना दिग्वातादित्यवरुणाश्विनो देवताः । तथा वाक्पाणिपादपायूपस्थाख्यानां पञ्चानां कर्मेन्द्रियाणां क्रमेण क्रियाशक्तिप्रधाना अग्नीन्द्रविष्णुमित्रप्रजापतयो देवताः ।

त्वक्चक्षुषी इति । श्रोत्रजिह्वाघ्राणाख्यानि त्रीणीन्द्रियाणि तत्तद्गुणमात्रं गृह्णन्ति । त्वगिन्द्रियं तु स्पर्शं तदाश्रयं च गृह्णाति । तथा चक्षू रूपं तदाश्रयं च गृह्णाति । ननु प्रत्यक्षज्ञाने विषयेन्द्रियसंनिकर्षोऽपेक्ष्यते । तथा च

१ च छ झ—न तु श्रोत्र । २ च छ ज—ति तु युक्त । ३ ग—तत्त्वानि । ; छ झ—तदवयवानि । ४ ग—यान् । एतेषा । ५ च छ ज झ—न क्रिया । ६ च—चक्षुर्जिह्वाघ्रा ।

श्रोत्रमपि चक्षुर्वद् गत्वा शब्दग्राहकम् । दूरे शब्द इति प्रत्ययात् । वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गं ज्ञानशक्तिप्राधान्येन हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन सूत्रमिति चोच्यते । अयममूर्तः पदार्थः कार्यत्वाद्व्यष्टौ समष्टौ च जीवोपाधिरेव ।

तानि च तादृशानि भूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण

दूरस्थपर्वतादेः कथं चक्षुषा ज्ञानमिति चेदुच्यते । चक्षुरिन्द्रियं स्वयं लम्बीभवत्पर्वतसमीपं गत्वा पर्वतं व्याप्नोति किरणद्वारा वा । एवं श्रोत्रेन्द्रियमपि लम्बीभवच्छब्दसमीपं गत्वा शब्दं व्याप्नोति । न च शब्दाच्छब्दान्तरोत्पत्तिरिति क्रमेण श्रोत्रदेशे समुत्पद्यमान एव शब्दः श्रोत्रेण गृह्यत इति वैशेषिकोक्तं युक्तमिति वाच्यम् । तथा सति सर्वत्र श्रोत्रसंनिहितस्यैव शब्दस्य ग्रहणमिति दूरे-शब्दः श्रूयत इति प्रतीत्यनापत्तेः । तदाह–श्रोत्रमपीति । वचनेति । वचनं भाषणम् । आदानं ग्रहणम् । गतिर्गमनम् । विसर्गो मलत्यागः । आनन्दः सुखं प्रसिद्धम् । एतेषां क्रमेणोत्पादकानीत्यर्थः । एतच्चेति । ईश्वरोपाधिभूतादनादेरव्याकृतादुत्पद्यमानमेतत्सर्वमित्यर्थः । तच्च सूक्ष्माण्यपञ्चीकृतानि पञ्च भूतानि (१–५) तेषां च सर्वेषां सात्त्विकांशेभ्यः समुत्पद्यमानं ज्ञानशक्तिप्रधानमन्तःकरणं (६) तथैव तेभ्यः समुत्पद्यमानः क्रियाशक्तिप्रधानः प्राणः (७) तथा तेषां प्रत्येकं सात्त्विकांशेभ्यः समुत्पद्यमानानि ज्ञानशक्तिप्रधानानि पञ्च ज्ञानेन्द्रियाणि (८–१२) तथैव तेभ्यः समुत्पद्यमानानि क्रियाशक्तिप्रधानानि पञ्च कर्मेन्द्रियाणि (१३-१७) एतत्सप्तदशसमुदायरूपं लिङ्गशरीरम् । तच्च ज्ञानशक्तिप्राधान्येन हिरण्यगर्भ इत्युच्यते । हिरण्यमिव प्रकाशजनको गर्भो यस्येत्यक्षरार्थः । तत्समष्ट्यभिमानी जीवोऽपि तदधिष्ठातृत्वाद्धिरण्यगर्भ इत्युच्यते । तथा तदेव सप्तदशसमुदायरूपं लिङ्गशरीरं क्रियाशक्तिप्राधान्येन सूत्रमित्युच्यते । सूत्रवदनुस्यूतत्वात्सूत्रम् । तत्समष्ट्यभिमानी जीवोऽपि तदधिष्ठातृत्वात्सूत्रमित्युच्यते । कार्यत्वादिति । एतच्च सर्वमीशेनोत्पादितमिति कथं ततः पूर्वं तदुत्पादकत्वेनावस्थितस्येश्वरस्य तदुपाधिभूतं भवेत् । अतो जीवस्यैवोपाधिभूतमेतत् । सूत्रात्मा हिरण्यगर्भोऽपि च जीवविशेष एव ।

एवमव्याकृतममूर्तं चेति पदार्थद्वयमुक्त्वा तृतीयं मूर्तपदार्थं प्रदर्शयितुमुपक्रमते–तानि चेति । तादृशानि भूतानीति । अमूर्तानि सूक्ष्माणीत्यर्थः । भोगायतनं

१ ख ङ च–त्वा ग्र ह । २ ज–ति प्रतीतेः । वच । ३ ङ झ–गमनवि । ४ ङ–ते । तानि च । ५ ग च छ ज झ–तथाभूतानि ।

भोगं जनयितुमशक्नुवन्ति जीवकर्मप्रयुक्तत्वात्स्थौल्याय पञ्चीकृतानि भवन्ति। तत्र च प्रत्येकं पञ्चभूतानि द्विधा विभज्यन्ते । तत्रैकैको भागश्चतुर्धा विभज्यते । तद्भागचतुष्टयं च स्वभागं विहायेतरभूतचतुष्टयार्धभागेषु प्रविशतीति स्वस्यार्धभागेनेतरेषामष्टमभागेन च पञ्चीकरणान्मेलनेप्याधिक्यादाकाशादिशब्दप्रयोगः ।

अत्र च त्रिवृतं त्रिवृतमेकैकां करवाणि (छा. ६।३।३ ) इति श्रुतेस्त्रिवृ-

---

शरीरं भोग्या विषयाश्च पञ्चीकृतपञ्चभूतपरिणामविशेषाः । तादृशपरिणामविशेषरूपेणैव भोगजनकत्वं भूतानां नान्यथा । अशक्नुवन्तीति शतृप्रत्ययान्तं भूतानीत्यस्य विशेषणम् । सूक्ष्माणां भूतानां स्थूलता च पञ्चीकरणेन संपाद्यते। पञ्चीकरणं पञ्चानामपि भूतानामन्योन्यं मिश्रणम्। तच्च मिश्रणं न समप्रविभागेन। किं तु वैषम्येण। लोकप्रतीत्यनुरोधात्। सर्वेषां सर्वत्र साम्ये हीयं पृथिवीदं जलमित्यादिभेदप्रतीतिर्न स्यात्। तदेव वैषम्यं प्रदर्शयति—तत्र चेति। आकाशं द्विधा समं प्रविभज्य पुनस्तयोरर्धयोर्मध्य एकश्चतुर्धा समं विभजनीयः । एवं भागपञ्चकं भवति । तेष्वेको भागोऽर्धांशः । अपरे चत्वारोऽष्टमांशाः । वाय्वादीनां चतुर्णामप्येवं भागपञ्चकं परिकल्पनीयम् । तत्राकाशार्धांशे वाय्वादीनां चतुर्णामेकैका अष्टमांशाः संयोजनीयाः। मिश्रितश्चायं पदार्थ आकाशशब्देनोच्यते। आकाशांशस्याधिक्यात् । तथा वायोरर्धांशे वायुव्यतिरिक्तानामाकाशतेजःप्रभृतीनां चतुर्णामेकैका अष्टमांशाः संयोजनीयाः। अयं च मिश्रितः पदार्थः सांप्रतमुपलभ्यमानो वायुरित्युच्यते । एवं तेजोजलपृथिवीनामपि प्रत्येकमर्धांशे तत्तदितरेषां चतुर्णां प्रत्येकमेकैकाश्चत्वारोऽष्टमांशाः संयोजनीयाः । यत्र च यस्य भूतस्यार्धांशस्तत्र तेन शब्देन व्यपदेशो भवति ।

अथ त्रिवृत्करणवादिनां वाचस्पतिमिश्राणां मतमनुवदति-अत्र च त्रिवृतमिति। आकाशस्य वायोश्च नान्यत्र क्वचिदपि मिश्रणम् । तथाकाशे वायौ च नान्येषां मिश्रणम्। किं तु तेजोजलपृथिवीनामेवान्योन्यं मिश्रणम्। एतदेव च त्रिवृत्करणमुच्यते । तदपि पञ्चीकरणवदेव न समप्रविभागेन। किं तु वैषम्येणैव। तथा हि। तेजो द्विधा समं विभज्य तयोर्द्वयोरर्धभागयोर्मध्ये पुनरेको भागो द्विधा समं विभजनीयः। एवं भागत्रयं भवति। तेष्वेको भागोऽर्धांशः। इतरौ द्वौ चतुर्थांशौ । एवं जलस्य पृथिव्याश्च प्रत्येकं भागत्रयं परिकल्पनीयम्। तत्र तेजसोऽर्धांशे जलस्यैकश्चतुर्थांशस्तथा पृथिव्या एकश्चतुर्थांशश्च संयोजनीयः। मिश्रितश्चायं पदार्थस्तेजोंशाधिक्यादिदं तेज इति व्यपदिश्यते। तथा जलस्यार्धांशे तेजस एकश्चतुर्थांशस्तथा पृथिव्या एकश्चतुर्थांशश्च संयोजनीयः। अयं च मिश्रितः पदार्थो जलांशाधिक्यादिदं जलमिति व्यपदिश्यते । एवं पृथिव्या

१ ङ-ज्य तत्र ।

त्कुर्वत उपदेशात् ( ब्र. सू. २।४।२० ) इति सूत्राच्च त्रयाणामेव मेलनप्रतीतेश्च त्रिवृत्करणमेव केचिन्मन्यन्ते । ते वियदधिकरणन्यायेनैव निराकृताः । तथा हि तैत्तिरीयके तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१।१ ) इति श्रुतेश्छान्दोग्ये त्रयाणां तेजोबन्नानां सृष्टिश्रवणेपि द्वयोरुपसंहारः ।

---

अर्धांशे तेजस एकश्चतुर्थांशस्तथा जलस्य चैकश्चतुर्थांशः संयोजनीयः । इय-मेव पृथिवीति व्यपदिश्यते । त्रिवृत्करणे प्रमाणं च तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ( छा. ६।३।३। ) इति श्रुतिः । पूर्वं तेजोजलपृथिवीनां देवताशब्देन निर्देशात्तदनुरोधेनात्र तासामित्येकैकामिति च स्त्रीत्वेन निर्देशः । तासां तेजो-जलपृथिवीदेवतानां मध्ये एकैकां त्रिवृतं करवाणीत्येवं परमात्मेक्षतेत्यर्थः । यथा त्रिभिस्तन्तुभिर्ग्रथिता रज्जुस्त्रिवृत्कृता भवति तद्वत् । अत्राकाशवाय्वो-रनुच्चारणात्पञ्चीकरणं श्रुतेरनभिमतमिति गम्यते । संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कु-र्वत उपदेशात् ( ब्र. सू. २।४।२० ) इति सूत्रं च त्रिवृत्करणे प्रमाणम् । संज्ञा नाम । मूर्ती रूपम् । क्लृप्तिः कल्पना । त्रिवृत्कुर्वतः परमात्मन इत्यर्थः । त्रिवृ-त्करणं हि तासां त्रिवृतमित्युक्तश्रुत्यनुरोधात्परमात्मनैव कृतमिति त्रिवृत्कुर्व-च्छब्देन परमात्माभिधीयते । अग्निरादित्यश्चन्द्रमा नक्षत्राणीत्येवं नामरूपव्या-करणं परमात्मन एव कार्यं भवितुमर्हति न जीवस्य । नामरूपे व्याकरवाणि ( छा. ६।३।२ ) इति श्रुतौ नामरूपव्याकरणस्य परमात्मकर्तृकत्वोपदेशादिति सूत्रार्थः । अस्मिंश्च सूत्रे त्रिवृत्करणमनूद्यते । किं च तेजोजलपृथिवीनां रूपव-त्त्वात्तेषां मेलनं प्रतीयते । वाय्वाकाशयोस्तु नीरूपत्वान्न प्रतीतिः । प्रतीत्यनुसा-रेणैव ह्ययमेवंविध इति निश्चेतव्यं भवति इत्याशयः । एतत्त्रिवृत्करणवादिनां मतं निराकरोति-ते वियदिति । वियदधिकरणतात्पर्यमाह—तथा हीति । उपसंहारः संग्रहः ।

तैत्तिरीयश्रुतौ परमात्मनः सकाशादाकाशवायुतेजोजलपृथिवीनां पञ्चानां भूतानां क्रमेणोत्पत्तिर्वर्णिता । छान्दोग्यश्रुतौ तु परमात्मनः सकाशा-त्तेजोजलपृथिवीरूपाणां त्रयाणामेव भूतानामुत्पत्तिर्वर्णिता । तथा चानयोर्वि-रोधः । विरोधे चैकस्याः प्रामाण्यं स्वीकृत्य तद्बलेनान्यस्या बाधोऽवश्यं वाच्यः । बाधितायाश्च सर्वथा नाप्रामाण्यम् । किं त्वध्याहारेण लक्षणया वा कथंचित्संग-मनम् । प्रकृते च कया श्रुत्या कस्या बाध इति संशयः । किं छान्दोग्यश्रुतौ प्रथ-मतस्तेजस उत्पत्तिवर्णनेन ततः पूर्वं परमात्मना किमपि नोत्पादितमाकाशवायू च नित्यावेवेति निश्चित्य तैत्तिरीयश्रुतावुत्पन्नत्वेन वर्णितयोराकाशवाय्वो-र्बाध एव । संभूत इत्यस्य लक्षणयाऽभिव्यक्त इत्यर्थं गृहीत्वा कथंचित्संगमनं

---

१ च छ ज झ—संभूतः । आकाशाद्वायुरित्यादिश्रुते । २ ङ—इत्यादिश्रु । ३ च छ झ—णां सृष्टि ।

तेजःप्राथम्यपदार्थधर्मापेक्षयाकाशवायुपदार्थयोर्बलीयस्त्वात् । छान्दोग्ये चैकविज्ञानेन सर्वविज्ञानप्रतिपादनादाकाशवाय्वोरचेतनयोर्ब्रह्मकार्यत्वस्यावश्यवाच्यत्वात् । तत्र पञ्चानामेव सृष्टानां मेलनेप्यवयुत्यानुवादेन त्रिवृत्करणश्रुतेरुपपत्तिः । त्रिवृतमेवेति तु तत्कल्पनायां वाक्यभेदप्रसङ्गः ।

कार्यम् । अथ वा तैत्तिरीयश्रुत्यनुरोधेन तेजसः पूर्वमाकाशवाय्वोरुत्पत्तिं निश्चित्य तत्तेजोऽसृजतेति च्छान्दोग्यश्रुतावुत्पत्तिक्रमे प्रतीयमानस्य तेजःप्राथम्यस्य बाध एव । श्रुत्यर्थसंगमनं त्वाकाशं वायुं च सृष्ट्वा इत्यध्याहृत्य कार्यमिति । एवं संशये द्वितीयः पक्ष एव ग्राह्यो भवति । छान्दोग्यश्रुत्यनुरोधेन निश्चये तैत्तिरीयश्रुतावुत्पन्नत्वेन वर्णितस्याकाशस्य वायोश्च धर्मिभूतस्य पदार्थस्यैव बाधः कल्प्यः स्यात् । तैत्तिरीयश्रुत्यनुरोधेन निश्चये तु छान्दोग्यश्रुतावुत्पन्नत्वेन वर्णितस्य तेजसो धर्मिभूतस्य पदार्थस्य न बाधः । तेजउत्पत्तेस्तैत्तिरीयश्रुतावपि वर्णितत्वात् । किं तु तत्र प्रतीयमानस्योत्पद्यमानतेजोरूपपदार्थधर्मस्य प्राथम्यस्य बाधो वक्तव्यो भवति । बाधश्चागतिकगतिः । तथा च दुर्बलस्य प्राथम्यस्य धर्मस्यैव स कल्पनीयो न तु प्रबलस्याकाशस्य वायोश्च धर्मिणः पदार्थस्य । एवं चाकाशस्य वायोश्चोत्पत्तिः सिद्धा भवति । किं च येनाश्रुतं श्रुतं भवति ( छा. ६।१।३ ) इति श्रुतावेकस्य परमात्मनो विज्ञानेन सर्वस्य विज्ञानं भवतीति प्रतिज्ञा कृता । आकाशस्य वायोश्च नित्यत्वे तु तस्य परमात्मकार्यत्वाभावेन परमात्मनो विज्ञानेनाकाशस्य वायोश्च ज्ञानं न स्यात् । मृत्तिकाया ज्ञानेन हि तत्कार्यभूतस्य घटादेः स्वरूपयाथात्म्यं विज्ञायते न तु पटस्य । ततश्चास्याः प्रतिज्ञाया हानिः स्यात् । तथा चाकाशस्य वायोश्च परमात्मनः सकाशादुत्पत्तिः सिद्धा भवतीति वियदधिकरणे सिद्धान्तितम् । एतत्सिद्धान्तानुरोधेन तत्तेजोऽसृजतेति च्छान्दोग्यश्रुतेस्तेन ब्रह्मणाकाशं वायुं च सृष्ट्वा तेज उत्पादितमित्यर्थः पर्यवसन्नः । एवं श्रुतौ पञ्चानां भूतानामुत्पत्तिमभिधाय तदुत्तरमिदं पठ्यते हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि (छा.६।३।३)इति । पूर्वं पञ्चानां भूतानां प्रक्रान्तत्वात्तेषु चाहत्य द्वयोर्वाय्वाकाशयोर्वर्जने कारणाभावान्नायं त्रिशब्दोऽधिकसंख्याव्यवच्छेदार्थत्वेनोक्तः । किं तु पूर्वं तेजोबन्नानां त्रयाणां साक्षात्कृतत्वेन रूपवत्त्वेन च प्राधान्यविवक्षयोक्तः । तथा च त्रयाणां पृथक्कृत्यानुवादमात्रं श्रुतौ कृतं न तु तत्र श्रुतेरितरनिवृत्तौ तात्पर्यम् । एवं च पञ्चीकरणं न श्रुतिविरुद्धं भवति ।

त्रिवृतमेवेतीति । त्रिवृत्करणश्रुतेस्त्रयाणां तेजोबन्नानां मेलनप्रतिपादने

१ ग च ज झ–विज्ञाना । २ झ–नामप मेलने एकं वृणीते द्वौ वृणीते त्रीन् वृणीते इत्यत्रैकवरणे द्वयोर्बाधः । द्वयोर्वरणे एकस्याबाध इति त्रयाणां वरणे इयमेकं च प्रविशति । तथा पञ्चीकृते त्रिवृत्करणं प्रविशतीति । त्रिवृतमेवेति तु कल्प । ३ ग च छ ज–व मेल । ४ ग च छ ज–रणोपप ।

त्रिवृत्कुर्वत उपदेशात् ( ब्र. सू. २।४।२० ) इति सूत्रं त्वनुवादत्वान्न पञ्चीकरणं न्यायसिद्धं बाधितुमुत्सहते। मेलनप्रतीतिश्च शरीरादौ पञ्चानामविशिष्टैव। पञ्चीकृतपञ्चमहाभूतानीति[1] च भाष्यकारवचनम्। तस्मादलमनेनानात्मचिन्तनेनेति दिक्।

तानि च पञ्चीकृतानि पञ्च महाभूतानि मूर्ताख्यानि मिलित्वैकं कार्यमिन्द्रियाणामधिष्ठानं भोगायतनमुत्पादयन्ति। तदेव शरीरमित्युच्यते। तत्र सत्त्वप्रधानं देवशरीरम्। रजःप्रधानं मनुष्यशरीरम्। तमःप्रधानं तिर्यगादिस्थावरान्तशरीरम्। तस्य च शरीरस्य पाञ्चभौतिकत्वेपि[2] चित्ररूपस्येव क्वचिन्न्यूनाधिकभावो[3] भूतानां न विरुध्यते। एवं विषया अपि पञ्चीकृतैकैकभूतजन्या-

---

तात्पर्यं मत्वा विधिमुखेन प्रवृत्तिः स्वीक्रियते उत द्वयोराकाशवाय्वोर्मेलननिषेधे तात्पर्यं मत्वा निषेधमुखेन प्रवृत्तिः स्वीक्रियते अथ वा तात्पर्यद्वयं मत्वा द्विविधा प्रवृत्तिः स्वीक्रियते। प्रथमे त्रयाणां मेलने कथितेपि तत्रेतरनिषेधाभावेन पञ्चीकरणमनिषिद्धं स्यात्। न हि देवदत्तस्तत्रास्तीत्युक्ते यज्ञदत्तो नास्तीति निषेधोऽवगम्यते। द्वितीयस्तु पक्षो न संभवति। प्रतियोगिप्रमितिं विना निषेधानुपपत्तेः। मेलनस्य चान्यतोऽप्राप्तत्वात्। तृतीये तु सुतरां वाक्यभेद इति भावः। त्रिवृत्कुर्वत इति। संज्ञामूर्तिक्लृप्तिस्त्विति सूत्रस्य न त्रिवृत्करणप्रतिपादने तात्पर्यम्। किं तु नामरूपव्याकरणमीश्वरकर्तृकमिति हि तेन सूत्रेणोच्यते। तत्रेश्वरस्य निर्देशस्त्रिवृत्कुर्वच्छब्देन कृतः। त्रिवृत्कुर्वतः परमेश्वरान्नामरूपसृष्टिरिति। तथा च न तत्सूत्रं त्रिवृत्करणे प्रमाणं भवति। मेलनप्रतीतिरिति। यद्यपि मूर्तिमत्सु शरीरेष्वाम्रफलादिषु चाकाशवाय्वोर्नीरूपत्वात्प्रत्यक्षाभावेन तत्र तयोर्मेलनमस्त्येवेति न निश्चयः कर्तुं शक्यते तथापि तेनैव हेतुना तत्र तयोर्मेलनं नास्त्येवेत्यपि निश्चयो न कर्तुं शक्यते। किं च मूर्तिमत्सु तेषु पदार्थेषु स्पर्शस्य शब्दस्य चोपलम्भात्तद्द्वारा वाय्वाकाशयोः प्रतीतिरपि तत्रास्तीति भावः। पञ्चीकृतेति। पञ्चीकरणनामके ग्रन्थ एतद्भाष्यकारैरुक्तम्।

मिलित्वेति। इदं पञ्चीकृतानां भूतानां पुनर्मेलनम्। अत्र च पञ्चीकरण इवैकस्यार्धांश एवेतीतरेषां चाष्टमांशा एवेति च न कोपि नियमः। नापि पञ्चानां साम्यमेवेति। किं तु प्रतीत्यनुसारेण यथायथं पञ्चानां पञ्चीकृतानां भूतानां भागाः कल्पनीयाः। भूलोकस्थप्राणिनां शरीरे पृथिव्यंशो भूयानितरे स्वल्पाः। मत्स्यादिजलचरप्राणिशरीरेपि पृथिव्यंशो भूयान्। वरुणलोकस्थप्राणिनां

---

१ छ झ–ति च श्रीमं भाष्य। २ छ–कस्य विचित्र।; ज झ–कस्यापि चित्र। ३ स ढ–वोपि भूता। ४ छ–अन्यत्वाच्चतु।

श्चतुर्दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोंशप्रधाना घटादयश्च। एतच्च सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति चोच्यते । अयमौपनिषदः सृष्टिक्रमः।

एतद्विपरीतो लयक्रमः । मूर्तं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं विराडाख्यं पृथिव्याद्येकैकभूतलयेनामूर्ते अपञ्चीकृतपञ्चमहाभूतात्मके हिरण्यगर्भाख्ये स्वकारणे लीयते। स एव च दैनंदिनः प्रलयः। अमूर्तं चाव्याकृते परमेश्वरोपाधौ। अव्याकृतस्य त्वनादित्वेन कारणाभावान्न लयः। स्वकारणे सूक्ष्मरूपेणावस्थानं

शरीरे तु जलांशो भूयानितरः स्वल्पाः। एवमादित्यलोकेपि बोध्यम्। चतुर्दशेति। मध्ये भूलोको रजोंशप्रधानः। अधः सप्त पातालानि तमोंशप्रधानानि । उपरि भुवरादयो लोकाः सत्त्वांशप्रधानाः षट्। मिलित्वा चतुर्दश भुवनानि । अयमौपनिषद इति । अव्याकृतादमूर्तं जायते ततो मूर्तमित्येवं सृष्टिक्रमः श्रौत इत्यर्थः।

लयक्रम इति। लयो विनाशः। स च त्रिविधो दैनंदिनप्राकृतात्यन्तिकभेदात्। सकलमूर्तपदार्थानां विनाशो दैनंदिनः प्रलयः। अमूर्तानामपि सकलपदार्थानां विनाशः प्राकृतः प्रलयः। अव्याकृतानामपि सकलपदार्थानां विनाश आत्यन्तिकः प्रलयः । दृश्यस्य जडवर्गस्य मूर्तामूर्ताव्याकृतरूपावस्थाविशेषभेदेन त्रैविध्यात्तद्विनाशस्यापि तद्वदेव त्रैविध्यं प्रकल्पितम् । लयस्य क्रमश्च द्विविधः। कार्यस्य कारणान्तरेण विनाशे तस्य स्वकारणे लयो दृश्यते । यथा दण्डाघातेन घटे विनष्टे तस्य मृत्स्वरूपे लयः । क्वचित् कारणनाशात्कार्यस्य नाशो दृश्यते। यथा तन्तूनां विनाशे पटनाशः। त्रिविधप्रलयमध्ये दैनंदिने प्राकृते च लय आद्यः क्रमः। आत्यन्तिके लये द्वितीयः क्रम इति व्यवस्था। स्वकारण इति। मूर्तपदार्थानाममूर्ते हिरण्यगर्भाख्ये स्वकारणे सूक्ष्मरूपेणावस्थानं दैनंदिनः प्रलयः। अत्रामूर्तं रूपमेव सूक्ष्मं रूपम् । अमूर्तानां पदार्थानां स्वकारणेऽव्याकृते सूक्ष्मरूपेणावस्थानं प्राकृतः प्रलयः । अत्रामूर्तानामर्थानां ये संस्काराः प्रकृतौ वर्तन्ते तदेव तेषां सूक्ष्मं रूपम्। आत्यन्तिकलयस्य तु नैतल्लक्षणम्। तत्र मूलकारणमेव प्रथमतो विनष्टमिति कथं तदुत्तरं विनश्यमानं कार्यं सूक्ष्मरूपेण कारणेवतिष्ठेत । किं चात्यन्तिकलयस्यैतदेवात्यन्तिकत्वं यत्तत्र विनश्यमानानामर्थानां यत्स्थूलं सूक्ष्मं सूक्ष्मतरं च रूपं तस्य सर्वस्यापि विनाश इति। ननु न जाग्रन्न मे स्वप्नक इति प्रकृताष्टमश्लोकोक्तजाग्रदाद्यवस्थाविशेषस्पष्टीकरणाय पदार्थजातं निरूपणीयमित्यभिप्रायेण श्लोकव्याख्यानात्पूर्वमेवा-

१ ग-धानाः। एत। २ छ ज-मः। पञ्चीकृ। ३ ज-ख्यं मूर्तं पृथि। ४ ज-पाधौ लीयते। अव्या। ५ ज-त्वेनैव कार।

लय इति तल्लक्षणात् । अयमेव प्राकृतः प्रलयः । ब्रह्मज्ञानादुच्छेदस्त्वात्यन्तिकः प्रलयः । स च कारणक्रमेणैव । कारणोच्छेदादेव कार्योच्छेदात् । सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवदपारमार्थिकमपि वासनादार्ढ्याद् व्यवहारक्षममिति न मायिकत्वेपि तुच्छत्वप्रसङ्गः । यथा चैतत्तथा व्यक्तमाकरे ।

एवं स्थिते जागरणादिव्यवस्थोच्यते । इन्द्रियवृत्तिकालीनोऽर्थोपलम्भो

---

स्मिन्मते पदार्थौ द्विविधः (पृ. ८८-पं. १० ) इत्यारभ्य दृग्दृश्यरूपं पदार्थद्वयं तदवान्तरभेदाश्चैतावत्पर्यन्तं निगदिताः । तत्र दृक्पदार्थ आत्मा पारमार्थिक एक इत्युक्तम् । तथा च दृश्यस्यापारमार्थिकत्वात्कथं व्यवहारः । न हि कल्पितेन शशविषाणेन कण्डूयनादिव्यवहारः सिध्यति । व्यवहारस्यैव चासिद्धौ तन्मूलकानां जाग्रदाद्यवस्थाविशेषाणामसिद्धिरेवेति तत्स्पष्टीकरणाय प्रवृत्तस्य मूल एव कुठारपात इति चेत्तत्राह–सर्वं चेति । वासनादार्ढ्यादिति । सत्यत्ववासनादार्ढ्यादित्यर्थः । अपारमार्थिकं हि द्विविधम् । तुच्छं मायिकं च । तत्र तुच्छमसच्छशविषाणादि । मायिकं च सदसद्विलक्षणं शुक्तिकारजतादि । तत्र तुच्छेन व्यवहारासिद्धिर्मा भून्नाम । मायिकेन तु स्यादेव व्यवहारः । यद्यपि मृगतृष्णिकाम्भसा स्नानावगाहनादिव्यवहारो न संपद्यते तथापि पिपासया तत्र प्रवृत्तिर्जायत एवेति प्रवृत्तिरूपो व्यवहारोऽवर्जनीयः । न हि सर्वैरर्थैः सर्वविधो व्यवहारः संपादनीय इत्यस्ति कश्चिन्नियमः । तस्मादपारमार्थिकैरपि पदार्थैर्व्यवहारः सिध्यतीति जाग्रदाद्यवस्थाविशेषाणां नानुपपत्तिः ।

अथ तानेवावस्थाविशेषान्दर्शयति–एवं स्थित इति । इन्द्रियवृत्तीति । इन्द्रियाणि श्रोत्रादीनि बाह्येन्द्रियाणि पञ्च । तेषां वृत्तयो व्यापाराः स्वस्वरूपोद्घाटनरूपाः । मनसो विषयदेशं प्रति गमने मार्गप्रदातृत्वमिन्द्रियाणाम् । तच्च तेषां स्वरूपोद्घाटने सत्येव संभवति नान्यथा । यथा द्वारपालेन द्वारोद्घाटने कृत एव तेन मार्गेण जनानां संचारो भवति तद्वत् । तादृशेन्द्रियव्यापारकालीनो योऽर्थोपलम्भः प्रत्यक्षानुमित्यादिसंज्ञिका तत्तद्विषयाकारा मनोवृत्तिः सा जाग्रदवस्था । तत्र प्रत्यक्षे घटाद्याकारा मनोवृत्तिरिन्द्रियव्यापारकालीना इन्द्रियव्यापारजन्या च वर्तते । अनुमित्यादौ त्वग्न्याकारा मनोवृत्तिरिन्द्रियव्यापारकालीना वर्तते । इन्द्रियव्यापारजन्या नास्तीत्यन्यदेतत् । अत एवेन्द्रियव्यापारजन्येति नोक्तम् । अनुमित्यादावग्न्यादिज्ञानक्षणेपीन्द्रियाणि मनसो मार्गप्रदानोन्मुखान्येव । तेन मार्गेण तस्मिन्क्षणे मनो न गच्छतीत्यन्यदेतत् । नैतावता तदानीमिन्द्रियव्यापारो नास्तीति वक्तुं शक्यते । इन्द्रियाणां स्वरूपोद्घाटनस्य सत्त्वात् । यथा जनसंचरणमार्गभूमशकटमार्गयोर्युतौ तत्रत्यो जनसंच-

---

१ ज–कृतलयः । २ ग–नादात्यन्तिक उच्छेद् । ३ ज–न्तिको लयः । ४ च छ ज झ–गरादि । ५ च ज झ–लीनार्थो ।

जागरणम् । तत्र मूर्तं विराडाख्यं भोग्यं प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणत्वाद् व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते । स च देहेन्द्रियादिषु प्रवेशात् व्यापकत्वाद्वा विश्व इत्युच्यते । विश प्रवेशने विष्लृ व्याप्ताविति च स्मरणात् । अत्र यद्यपि विश्वेनामूर्तमव्याकृतं चानुमानादिनानुभूयते तथापि व्यावहारिकं सर्वं विश्वेनैव ज्ञायत इति नियमात्स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्यावस्थान्तरव्यापकत्वम् । शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेपीन्द्रियव्यापारकालीनत्वाज्जागरणत्वोपपत्तिः । ज्ञानोत्पत्त्यादिप्रक्रिया चाधस्तादुक्तैव ।

---

रणमार्गद्वारपिधाने नियुक्तः प्रेष्यो धूमशकटागमनसमये द्वारं पिधाय धूमशकटागमनं प्रतीक्षते । धूमशकटस्तु क्षणमात्रेणैव गच्छति । नैतावता तस्य प्रेष्यस्य क्षणमात्रमेव व्यापारस्तद्वत् । स्वप्ने तु नेन्द्रियाणां मार्गप्रदानोन्मुखत्वम् । तदानीं मनस्तु स्वातन्त्र्येणैव संचरति । प्रमाणषट्केनेति । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपं प्रमाणषट्कम् । तस्य स्वरूपमुदाहरणं च वेदान्तपरिभाषायां प्रदर्शितं तत एव द्रष्टव्यम् । प्रवेशादिति । विशति देहेन्द्रियादिषु प्रविशतीति विश्वः । तौदादिकाद्विशधातोरौणादिकः क्वन्प्रत्ययः । अथ वा वेवेष्टि देहेन्द्रियादीन्व्याप्नोतीति विश्वः । जौहोत्यादिकाद्विष्लृ व्याप्ताविति धातोः क्वन्प्रत्यये धातोरन्त्यस्य शकारादेशः । अत्र यद्यपीति । स्थूलान्पदार्थान् दृष्ट्वा तत्कारणीभूता अमूर्ताः सूक्ष्माः पदार्थास्तत्कारणीभूता अव्याकृताश्च पदार्था जागृतौ विश्वसंज्ञकेन जीवेनानुमातुं शक्यन्ते । शब्दप्रमाणेनापि च ज्ञातुं शक्यन्ते । त एव च पदार्थाः स्वप्नावस्थायां सुषुप्त्यवस्थायां च विद्यन्त इति तयोरवस्थयोरपि तादृशपदार्थसाक्षात्कर्तृत्वेन विश्वस्य संबन्धः संभवति । तथा जागृतावाधिककञ्चुकप्रवेशपर्यन्तगतकञ्चुकस्यात्यागात्सूक्ष्मोपाधेरव्याकृतोपाधेश्च सत्त्वेन तदानीं जीवस्य तैजसत्वं प्राज्ञत्वं चास्तीति जाग्रदवस्थायां व्यावहारिकपदार्थज्ञानं तैजसस्य प्राज्ञस्य च संभवति । तथा च विश्वतैजसप्राज्ञानां प्रत्येकमवस्थात्रयव्यापकत्वं प्राप्नोतीति शङ्काशयः । समाधत्ते—तथापीति । विश्वेनैवेति । स्थूलोपाध्यभिमानित्वेनैव रूपेणेत्यर्थः । एवं च जागृतौ जीवस्य सूक्ष्मोपाधेरवर्जनीयत्वेन तैजसत्वेपि न तेन रूपेण प्रमातृत्वम् । तथा तदानीमव्याकृतोपाधेरप्यवर्जनीयत्वेन जीवस्य प्राज्ञत्वेपि न तेन रूपेण प्रमातृत्वम् । एवं स्वप्नावस्थायामप्यव्याकृतोपाधेरवर्जनीयत्वेन जीवस्य प्राज्ञत्वेपि न तेन रूपेण तत्र तस्य ज्ञातृत्वम् । किं तु तैजसत्वेनैव । सुषुप्त्यवस्थायां तु जीवस्य सूक्ष्मोपाधि-

---

१ ज--त्वात्तद्व्याव । २ च छ ज झ--पनाद्वा । ३ ख--मानाच्च । ४ ख--रणोपप । ५ च--त्स्वेप ।

एवं जाग्रद्भोगजनककर्मक्षये स्वाप्नभोगजनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्वेन्द्रियेषु देवतानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीन इत्युच्यते तदा च स्वप्नावस्था। तत्रान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः।

तत्र मन एव गजतुरगाद्याकारेण विवर्तते अविद्यावृत्त्या च ज्ञायत इति केचित्। अविद्यैव शुक्तिरजतादिवत्स्वप्नाद्यर्थाकारेण परिणमते ज्ञायते चाविद्या-

---

स्यागात्तैजसत्वमेव नास्ति दूरं तस्य तदानीं तैजसत्वेन रूपेण ज्ञातृत्वशङ्का। तथा सुषुप्तौ स्वप्ने चेत्यवस्थाद्वयेऽपि स्थूलोपाधेस्त्यागाद्विश्वत्वमेव नास्तीति दूरापास्तैव तेन रूपेण तदा तस्य ज्ञातृत्वशङ्का। एतदुक्तं भवति--जाग्रतो जीवस्य विश्ववत्तैजसत्वं प्राज्ञत्वं च यद्यप्यस्ति तथापि तस्यास्तित्वमात्रमेव न तु तेन रूपेण तदा प्रमातृत्वम्। तथा स्वप्ने जीवस्य तैजसत्ववत्प्राज्ञत्वमप्यस्ति किं तु तस्यास्तित्वमात्रमेव न तु तदा प्राज्ञत्वेन ज्ञातृत्वम्। विश्वत्वस्य तु स्वप्नेऽस्तित्वमात्रमपि नास्ति। सुषुप्तौ तु प्राज्ञत्वस्यैवास्तित्वं तेनैव च रूपेण तदा जीवस्य प्रमातृत्वमिति।

कर्मक्षय इति। कर्मपदं कर्मजन्यादृष्टपरम्। कर्म ह्यदृष्टमुत्पाद्य तद्द्वारा तस्मिञ्जन्मनि जन्मान्तरे वोपभोगं जनयति। अदृष्टस्यापि च न तदा स्वप्नकाले सर्वथा क्षयः। स्वप्नानन्तरं पुनर्जागृतौ तज्जन्यभोगसत्त्वात्। किं तु किंचित्कालपर्यन्तं स्वव्यापाराद्विरतिरेवात्राऽदृष्टक्षयः प्रहरकारिवत्। प्रहरकारी च महाराष्ट्रभाषायां 'पहारेकरी' इति प्रसिद्धः। स्वाप्नभोगेति। अत्रापि कर्मपदं कर्मजन्यादृष्टपरम्। देवतानुग्रहाभावादिति। आदित्यादयो देवता हि शारीराणां जीवानां सुखाद्युपभोगाय शरीरस्थानीन्द्रियाण्यनुगृह्णन्ति। स्वप्ने च स्थूलदेहाभिमान एव नष्ट इति किमर्थं तद्गतानीन्द्रियाण्यनुगृह्णीयुर्देवताः। अस्यां चावस्थायामिन्द्रियाणि सन्त्येव। केवलं रथाद्वियोजिताश्ववन्निर्व्यापारत्वाल्लीनवद्भवन्ति। जीवोऽपि तदानीं स्थूलदेहपर्यन्तं प्रवेशाभावाद् व्यापनाभावाद्वा विश्वसंज्ञां न लभते। एतदभिप्रायेण विश्वोऽपि तदानीं लीन इत्युच्यते।

स्वाप्निकपदार्थस्वरूपं मतभेदेन निरूपयति-तत्र मन इति। जागृतौ व्यावहारिकघटज्ञानकाले घटाकारसदृशमाकारं मनो गृह्णाति। इदं रजतमिति प्रातिभासिकरजतज्ञानकाले तु रजताकारसदृशमाकारमविद्यैव गृह्णाति न तु मनः। तथा स्वाप्निकपदार्थाकारसदृशमाकारमविद्यैव गृह्णाति न तु मन इत्यत्र न विवादः। किं तु ते स्वाप्निकपदार्थाः कथं निष्पन्ना इत्येतद्विषये मतद्वयम्। अविद्यासहकारेण मनसा केवलं कल्पिता न तु कस्यापि परिणामभूता

---

१ च छ ज--सर्वेष्विन्द्रिये। २ ग ङ च छ ज झ--गाद्यर्थाकारे। ३ छ--ण परिणमते अवि। ४ ख ङ--वृत्त्यैव ज्ञा। ५ च--स्वप्नपदार्थाः।; छ ज झ--स्वप्नार्थाः।

वृत्त्येत्यन्ये । कः पक्षः श्रेयान् । उत्तरः । अविद्याया एव सर्वत्राप्यर्थाध्यास-ज्ञानाध्यासोपादानत्वेन कल्पितत्वात् । मनोगतवासनानिमित्तत्वेन क्वचिन्मनः-परिणामत्वव्यपदेशात् ।

इत्येकः पक्षः । यथा जागृतौ शुक्तिरजतस्थले शुक्तिमधिष्ठानत्वेन स्वीकृत्याविद्या रजताकारेण परिणता भवति तथा स्वप्ने चैतन्यमधिष्ठानत्वेन स्वीकृत्याविद्या तादृशविषयाकारेण परिणता भवतीति द्वितीयः । अयं भावः । अर्थाश्चतुर्विधाः १ पारमार्थिको २ व्यावहारिकः ३ प्रातिभासिको ४ बौद्धश्च । आद्यः परमात्मा । अयं च न कस्यचिद्विवर्तो नापि कस्य चित्परिणामः । अत एव सत्यः । इतरे त्रयोऽनृताः । द्वितीयो भूतभौतिकः प्रपञ्चः । अयं चात्मविवर्तो मूलाविद्यापरिणामः । तृतीयो रज्जुसर्पादिः । अयं च रज्ज्वादिविवर्तोऽथ वा रज्ज्वाद्यन्तर्गतचिद्विवर्तस्तूलाविद्यापरिणामः । चतुर्थः शशशृङ्गादिः । अयं च मनोविवर्तोऽथ वा मनोन्तर्गतचिद्विवर्तः । नायं कस्यापि परिणामः । चतुर्थार्थाभिप्रायेणैव लघुशब्देन्दुशेखरेऽथर्वत्सूत्र ' शशशृङ्गादिपदानां च बौद्धे शशशृङ्गादौ शक्तिरिति प्रातिपदिकत्वं सिद्धम् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वम् ' इत्युक्तम् । प्रकृते तु स्वप्नस्था गजाद्यर्था उक्तचतुष्टयमध्ये चतुर्थ इत्याद्यः पक्षः । द्वितीयपक्षे तूक्तचतुष्टयमध्ये तृतीयः । अयमेव च पक्षो युक्तः । अद्वैतवेदान्तिनां दर्शने हि यथा यो यः परिणामः स कस्यचिद्विवर्तोऽस्त्येवेत्येवं परिणामस्य विवर्तव्याप्यत्वं तथा यो यो विवर्तः स मूलाविद्यायास्तूलाविद्याया वा परिणामो भवत्येवेत्येवं विवर्तस्य परिणामव्याप्यत्वं नियतम् । परिणामत्वविवर्तत्वयोर्धर्मयोः समनियतत्वात् । अतः स्वाप्निको गजाश्वादिरर्थो न कस्यापि परिणाम इति मतं न युक्तम् । अविद्याया एवेति । शुक्तौ मिथ्याभूतस्य रजतस्याध्यासोऽर्थाध्यासः । रजतं चेदं शुक्त्याधिष्ठानकमविद्यापरिणामभूतं न तु व्यावहारिकम् । तस्य तत्रासत्त्वात् । अर्थस्य रजतस्याध्यास आरोप इत्यर्थः । तत्रैव मिथ्याभूतस्य ज्ञानस्यान्तःकरणेऽध्यासो ज्ञानाध्यासः । ज्ञानं चेदमन्तःकरणाधिष्ठानकमविद्यापरिणामभूतं न तु व्यावहारिकान्तःकरणपरिणामरूपम् । व्यावहारिकरजतस्य तत्रासत्त्वेन रजताकारसदृशाकाराया व्यावहारिक्या मनोवृत्तेरसंभवात् । ज्ञानस्य विषयाकारसदृशाकाररूपाया वृत्तेरध्यास आरोप इत्यर्थः । तथा चाध्यासत्वावच्छिन्नं प्रत्यविद्याया उपादानकारणत्वं सिध्यतीति स्वप्नेऽपि ज्ञानाध्यासवदर्थाध्यासोऽपि हस्त्यश्वादिरूपोऽर्थोऽविद्यापरिणाम एवेति सिद्धम् । ननु तर्हि शास्त्रे स्वप्नार्थस्य कथं मनःपरिणामत्वव्यपदेश इति चेत्तत्राह—मनोगतेति । तथा च तादृशव्यपदेशो भाक्त इति भावः । अवश्यं चैतदेवं विज्ञेयम् ।

१ ग ङ च ज झ—त्राथाध्या । २ ख—णामत्व ।

ननु मनसस्तदा दृश्याकारपरिणामानभ्युपगमे द्रष्टृत्वसंभवेनात्मनः स्वयंज्योतिष्ट्वासिद्धिरिति चेन्न । बहिरिन्द्रियवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात् । तत्सहकारेणैव तस्य ग्राहकत्वनियमात् । सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात्तदान्तःकरणसत्त्वेपि प्रमात्रभावः ।

किमधिष्ठानं स्वप्नाध्यासस्य । मनोऽवच्छिन्नं जीवचैतन्यमित्येके ।

---

प्रथमपक्षेपि हि स्वाप्नार्थानां मनोविवर्तत्वाङ्गीकारेण मनःपरिणामत्वव्यपदेशस्य मुख्यस्यासंभवात् ।

ननु मनस इति । अयं भावः । जागृतौ घटादिज्ञानकाले मनःसहायेनैव ज्ञानजननादात्मनः स्वयंज्योतिष्ट्वम् । स्वयंज्योतिष्ट्वं च स्वयं स्वेनैव प्रकाशमानत्वम् । शुक्तिरजतादिज्ञानेप्येवम् । तत्राविद्यावृत्त्यङ्गीकारेण मनोवृत्त्यभावेपि मनःसंस्कारसहायेनैवेदमाकारमनोवृत्तिसहायेनैव च तादृशाविद्यावृत्तिजननेन तदानीं मनसो ज्ञानकरणत्वस्य सत्त्वात् । स्वप्नावस्थायां तु अत्रायं पुरुषः स्वयंज्योतिर्भवति ( बृ. ४।३।९ ) इति श्रुत्यात्मनः स्वप्नकाले स्वयंज्योतिष्ट्वमुच्यते । स्वप्ने हि मन एव गजतुरगाद्याकारेण परिणमत इति दृश्यकोटिप्रविष्टत्वाद् दृश्यत्वेनैव मनस उपयोगो न तु दृशिकरणतयेति स्वयंज्योतिष्ट्वं सिध्यति । अत एव तत्रत्या गजाश्वादयो विषयाः साक्षिग्राह्या इत्युच्यते । परं तु 'अविद्यैव शुक्तिरजतादिवत्स्वाप्निकार्थाकारेण परिणमते' इति द्वितीयमते मनसो न दृश्यकोटिप्रविष्टत्वम् । अतस्तदानीं मनस उपयोगः शुक्तिरजतज्ञान इव वाच्य इति स्वयंज्योतिष्ट्वमात्मनस्तदानीं न सिध्यति । वासनाद्वारा मनोविशिष्टस्य चैतन्यस्य तदानीं द्रष्टृत्वम् । वासनाद्वारा हि मनःसाहाय्यं तदानीं जीवस्येति । वृत्त्यभावेनेति । वृत्त्यभावात्तदानीं मनसो न प्रमातृत्वसंभवः । एवं च स्वाप्नप्रपञ्चो न प्रमातृभास्यः । अपि त्वविद्यावृत्तिसहकारेण साक्षिभास्यः । इदं रजतमित्यादिभ्रमे रजतांशोऽप्यविद्यावृत्तिसहकारेण साक्षिभास्य एव । इदमंशस्तु मनोवृत्त्यपेक्षणात्प्रमातृभास्यः । प्रमात्रभाव इति । प्रमातृत्वं ग्राहकत्वम् । अन्तःकरणावच्छिन्नस्य जीवस्य ( अन्तःकरणरूपोपाधिसहितचैतन्यस्य ) न तदानीं ग्राहकत्वम् । किं त्वन्तःकरणसंनिहितस्य केवलस्य चिन्मात्रस्य साक्षिण एवेति भावः ।

एवं स्वाप्निकानामर्थानां परिणाम्युपादानकारणमविद्यैवेति निश्चित्य इदानीं तेषां विवर्तोपादानकारणं प्रश्नपूर्वकं निरूपयति—किमधिष्ठानमिति । मनोऽवच्छिन्नमिति । मनसि प्रतिबिम्बितं यच्चैतन्यं तज्जीवचैतन्यम् । तदेव च स्वाप्नपदार्थानामधिष्ठानम् । यथा जागृतौ जीवः शुक्तिरूपेऽधिष्ठानेऽविद्यापरिणामभूतं रजतं कल्पयति तथा स्वप्ने जीवः स्वस्मिन्नेवाविद्यापरिणामभूतान्स्वा-

---

१ ग इ—यजन्यवृ । २ ङ—प्रमातृत्वाभावः ।

मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमित्यपरे। किं श्रेयः। मतभेदेनोभयमपि। तथा हि। जाग्रद्बोधेन स्वप्नभ्रमनिवृत्त्यभ्युपगमादधिष्ठानज्ञानादेव च भ्रमनिवृत्तेर्ब्रह्मचैतन्यस्य चाधिष्ठानत्वे संसारदशायां तज्ज्ञानाभावाज्ज्ञाने वा सर्वद्वैतनिवृत्तेर्न जाग्रद्बोधात्स्वप्ननिवृत्तिः स्यात्। स हि कर्ता (बृ. ४।३।१०) इति जीवकर्तृत्व-

प्रान्पदार्थान्कल्पयति। येन च जीवेन ये पदार्थाः कल्पितास्तस्यैव ते ज्ञेया भवन्ति नान्येषां जीवानाम्। अन्यैस्तेषामकल्पितत्वात्। अतश्च न स्वाप्नाः पदार्थाः सर्वजीवसाधारणाः। यथा शुक्तौ रजतं भ्रान्तेनैव दृश्यते नान्यैरित्यसाधारणं भवति तद्वत्। मूलाज्ञानेति। यद्यपि शुद्धं ब्रह्म नाध्यासाधिष्ठानं भवितुमर्हति तथाप्यनाद्यध्यासेन मूलाज्ञानेनावच्छिन्नत्वादशुद्धमिव भवत्स्वाप्नपदार्थाध्यासाधिष्ठानं भवितुमर्हतीति भावः। इदानीं द्वितीये पक्षे दूषणोद्भावनपूर्वकं प्रथमपक्षमुपपादयति-तथा हीत्यादिना न कोपि दोषः (पृ. ११६-प. १) इत्यन्तेन। जाग्रदवस्थायां जायमानेन ज्ञानेन स्वाप्नपदार्थाध्यासो निवर्तत इति सर्वैरेवानुभवानुसारेणाभ्युपगम्यते। अध्यासश्चाधिष्ठानस्य विशेषरूपेण जायमानं यद्यथार्थज्ञानं तेन निवर्तते। यथा रजताध्यासाधिष्ठानभूतायाः शुक्तेः शुक्तित्वेन विशेषरूपेण यथार्थज्ञाने जाते रजताध्यासो निवर्तते। तथात्र मूलाज्ञानावच्छिन्नस्य ब्रह्मचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वे जागृतौ तस्याधिष्ठानस्य यथार्थज्ञानमवश्यं वाच्यम्। तच्च जागृतावपि यावत्संसारं न संभवति बद्धस्य जीवस्य। तथा च जीवेन प्रत्यहमनुभूयमाना स्वप्नभ्रमनिवृत्तिर्नोपपद्यते। यदि वैयात्यात्तादृशं ज्ञानं जागृतावस्तीति ब्रूषे चेत्सर्वं द्वैतं निवर्तेत। जागृतावनुभूयमानस्य सर्वस्यैव द्वैतस्याध्यासमूलकत्वात्। तादृशानुभूयमानस्य द्वैतस्योपपत्तये जागृतौ मूलाज्ञानावच्छिन्नस्यापि ब्रह्मणो न यथार्थज्ञानमित्यङ्गीकरणीयम्। तथा च जागृतौ प्रपञ्चभ्रमस्यानिवृत्तिवत्स्वप्नभ्रमस्याप्यनिवृत्तिप्रसङ्गः। अतो मनोऽवच्छिन्नं जीवचैतन्यमेव स्वप्नाध्यासाधिष्ठानमित्यवश्यं वाच्यम्। तस्य चाधिष्ठानस्य जाग्रदवस्थाप्रारम्भक्षण एव यथार्थज्ञानमहमित्याकारं समुत्पन्नमिति तेन स्वप्नभ्रमनिवृत्तिरुपपद्यते। स हि कर्तेति। अत्र स इति तच्छब्देन प्राकरणिकस्य जीवस्य ग्रहणम्। स्वप्ने जागृतिस्था इव रथाश्वादयो न भवन्ति तथापि तान्पदार्थान्वासनामयाञ्जीवस्तदानीमुत्पादयति यतस्तेषां स जीवः कर्तेति श्रुत्यर्थः। न चास्यां श्रुतौ जीवस्य कर्तृत्वमात्रं प्रतीयते न त्वधिष्ठानत्वम्। तथा च मूलाज्ञानावच्छिन्नस्य ब्रह्मचैतन्यस्याधिष्ठानत्वेपि नैतच्छ्रुतिविरोध इति वाच्यम्। मूलाज्ञानावच्छिन्नस्य ब्रह्मचैतन्यस्याधिष्ठानत्वे तदजानतो जीवस्य कर्तृत्वासंभवात्। मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं हीश्वरः। यद्यप्यनुमानेन शब्देन चेश्वर-

१ ग इ च-तज्ज्ञाना। २ ञ-जीवस्य कर्तृ।

श्रुतेराकाशादिप्रपञ्चवत्सर्वसाधारणत्वापत्तेश्च न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम् ।

ननु जीवचैतन्यस्यानावृतत्वेन[2] सर्वदा भासमानत्वात्कथमधिष्ठानत्वम् । सत्यम् । तत्रापि स्वप्नाध्यासानुकूलव्यावहारिकसंघातभानविरोध्यवस्थाज्ञा[3]-

ज्ञानं जीवस्य विद्यते तथापि तत्परोक्षं न तु प्रत्यक्षम् । भ्रमप्रत्यक्षे चाधिष्ठानप्रत्यक्षमेवापेक्ष्यते । तथा च मूलाज्ञानावच्छिन्नब्रह्मचैतन्यमीश्वरपदवाच्यं यदि स्वाप्निकाध्यासाधिष्ठानं स्यात्तर्हि स्वाप्नपदार्थकर्तृत्वमीश्वरस्यैवाङ्गीकर्तव्यं स्यान्न जीवस्येति जीवकर्तृत्वप्रतिपादकश्रुतिविरोधः । जीवस्याधिष्ठानत्वाङ्गीकारे तु स्वस्य स्वप्रत्यक्षं वर्तत इति जीवस्य कर्तृत्वोपपत्तिः । यथा शुक्तिकारजतभ्रमकाले शुक्तेः सामान्यरूपेणेदंत्वेन चाकचक्यादिरूपेण च ज्ञानं वर्तते भ्रमनिवृत्तिकाले तु विशेषरूपेण शुक्तित्वेन तथा जीवस्य स्वत्वसामान्यज्ञानं स्वप्ने वर्तते । जागृतौ तु विशेषरूपेण मनोवच्छिन्नत्वेनेति न काप्यनुपपत्तिः । आकाशादीति । यथाकाशादिकः प्रपञ्च ईश्वराधिष्ठानक ईश्वरकर्तृकश्चेति स एक एव सकलजीवसाधारणः । अत एव य एव घटो देवदत्तेन दृष्टः स एव मयापीति प्रत्यभिज्ञापि संगच्छते । तथा स्वाप्निकपदार्थजातस्येश्वराधिष्ठानकत्व ईश्वरकर्तृकत्वे च सति तस्य सकलजीवसाधारण्यं स्यात् । न तु तथा प्रत्यभिज्ञायते । प्रत्युत त्वया यः स्वप्ने गजो दृष्टो न स मया दृष्टः किं त्वन्य एवेति प्रतीयते । अतः प्रतीतिशरणैस्तस्य जीवाधिष्ठानकत्वमेवाङ्गीकर्तव्यं भवति ।

ननु जीवेति । अध्यासस्थले ह्यधिष्ठानस्य केनचिदंशेन प्रकाशोऽप्रकाशश्चेति द्वयमपेक्ष्यते । तत्राधिष्ठानस्य येनांशेनाप्रकाशो भ्रान्तिसमय उपयुज्यते तेनांशेन प्रकाशश्च भ्रान्तिनिवृत्तिसमय उपयुज्यते । तत्र मूलाज्ञानावच्छिन्नब्रह्मचैतन्यस्याधिष्ठानत्वे मूलाज्ञानेनावरणात्स्वांशेनाप्रकाश उपपन्नो भवेन्न तु जागृतौ तेनांशेन प्रकाश उपपन्नो भवति । मूलाज्ञानस्य मोक्षपर्यन्तमवस्थानात् । मनोवच्छिन्नजीवचैतन्यस्याधिष्ठानत्वे तु तद्विपरीतम् । तत्राधिष्ठानस्य प्रकाश उपपद्यते न त्वप्रकाशः । न हि स्वयमेव स्वस्याप्रकाशितो भवितुमर्हति । स्वदृष्ट्या स्वस्यानावृतत्वात् इत्याशयः । तत्रापीति । अवस्थाऽज्ञानमज्ञानस्यावस्थाविशेषः । स च स्वप्ने यो हस्त्यश्वादीनामध्यासो भवति तज्जनकः । किं च व्यावहारिकस्य देहेन्द्रियादिसंघातस्य यज्ज्ञानमहं मनुष्योऽहं चक्षुष्मानिमे मदीयाः स्त्रीपुत्रादयोऽयं घट इत्यादिका सर्वविधा प्रतीतिस्तद्विरोधी । एतादृशमवस्थाऽज्ञानं जाग्रदवस्थागतादज्ञानादन्यदवश्यमभ्युपेतव्यम् । अन्यथा जागृतौ स्वप्ने च यो विशेष उपलभ्यते स नोपपद्येत । जाग्रत्कालीनौ हि जगज्जीवौ यादृशौ

१ ङ च छ ज झ—रण्यापत्ते । २ ङ—त्वे सर्व । ३ अज्ञानेति पदच्छेदः ।

नाभ्युपगमात् । स्वप्नदशायां चाहं मनुष्य इत्यादिप्रातीतिकसंघातान्तरभानाभ्यु-

---

प्रसिद्धौ न तौ तादृशावेव स्वप्नकाल उपलभ्येते । जागृतावुपलभ्यमानं जगन्न कस्यांचिदप्यवस्थायां बाध्यते । स्वप्ने सुषुप्तौ च यद्यपि तन्नोपलभ्यते तथापि 'जागृतावुपलभ्यमानं जगन्मिथ्या' इत्येवं तदनुसंधानं स्वप्ने न भवति । नापि च सुषुप्तौ । स्वप्नावस्थायामुपलभ्यमानं जगत्तु जाग्रदवस्थायां बाध्यते । बाधश्च तत्र न केवलमप्रतीतिरूपः । किं तु स्वप्न उपलभ्यमानं जगन्मिथ्या–इत्येवं तदनुसंधानं जागृतौ भवति । एवं जीवात्मनः स्वस्य स्वोपलब्धिर्जायमाना न जागृतौ स्वप्ने च समाना भवति । जीवात्मनः स्वरूपं ह्यन्तःकरणोपाधियुतम् । तच्चान्तःकरणं विधात्रयेणोपाधिर्भवति । सवासनं सवृत्तिकं चान्तःकरणं जागृतावुपाधिः । वृत्तिरहितं सवासनमन्तःकरणं स्वप्न उपाधिः । सुषुप्तौ तु वृत्तिसहितं वृत्तिरहितं वान्तःकरणं न स्वरूपेणोपाधिः । किं तु वासनामात्ररूपेणावतिष्ठमानमुपाधिः । तथा च तत्तदवस्थान्तःकरणोपाध्यनुसारेणावस्थात्रयविशिष्टं स्वस्वरूपमनुभवति जीवः। तत्र जागृतौ जागृतोऽहम् इत्येवं जाग्रदवस्थावैशिष्ट्येन स्वस्वरूपमनुभवति । अनुसंधत्ते च तदानीमवस्थान्तरेऽनुभूतं स्वस्वरूपं 'सुषुप्तिकालेऽहमासम्' इति 'स्वप्ने चानुभवानुसारेणेदृशोऽहमासम्' इति । स्वप्ने तु नैवम् । तदा 'स्वप्नावस्थागतोऽहम्' इत्येवं स्वप्नावस्थावैशिष्ट्येन न स्वरूपानुभवः। नापि चावस्थान्तरगतस्य स्वस्वरूपस्य 'तदाहमेवमासम्' इत्येवमनुसंधानं स्वप्ने । एवं जागृतौ स्वप्ने च जगदुपलब्धिर्जीवोपलब्धिश्च न समानेत्यतस्तद्वैषम्यबीजभूतं जागृतिस्थादज्ञानादन्यदवस्थाविशेषभूतमज्ञानान्तरं सिध्यति। तेन चाज्ञानेन जागृतिस्थमहं मनुष्य इत्यादि प्रतीयमानं स्वरूपं स्वप्नावस्थायामाव्रियते । अयमेव च स्वप्ने जीवस्वरूपस्यांशेनाप्रकाश इति तस्य स्वाप्नप्रपञ्चाधिष्ठानत्वं सिद्धं भवति । नन्वेवं स्वप्नावस्थायामपि जाग्रदवस्थायामिव यज्जीवस्य 'अहं मनुष्य' इत्येवमुपलब्धिर्भवति सा नोपपद्यत इति चेत्तत्राह–स्वप्नदशायां चेति । जाग्रदवस्थायां यो मनुष्यदेहः प्रतीयते तादृशदेहमूलिका नैव सा स्वप्नोपलब्धिः । किं तु यथा गजाश्वादयः पदार्था अवस्थाऽज्ञानकल्पिता यथा च स्वप्ने प्रतीयमाना शय्या जाग्रदवस्थास्थशय्यातो भिन्नैवावस्थाऽज्ञानकल्पिता तथा देहोऽपि पाञ्चभौतिकाद् व्यवहारिकाद्देहादन्य एव तात्कालिकोऽवस्थाऽज्ञानकल्पितः । तन्मूलिका तत्राहं मनुष्य इत्युपलब्धिः । ननु यथा जागृतौ शुक्तिरजतस्थले तूलाविद्यापरिणामभूतं प्रातिभासिकं रजतमभ्युपेयते न तथा रक्तस्फटिकप्रतीतिस्थले स्फटिकगतो रक्तिमा मूलाविद्यापरिणामभूतः स्वीक्रियते । किं तु संनिहितजपाकुसुमगत एव रक्तिमा केवलं तूलाविद्यया स्फटिकसंबद्धत्वेन प्रतीयत इत्यभ्युपेयते । संनिहितेन व्यावहारिकरक्तिम्नैव प्रतीत्युपपत्तौ रक्तिमान्तरकल्पनस्य गौरवपराहतत्वात् । अत एव वेदान्तपरिभाषायां ( पृ. ५४ ) यत्रारोप्यमसंनिकृष्टं तत्रैव प्रातिभासिकवस्तु-

पगमात् । शय्यायां स्वपिमीति शय्यान्तरभानवत् । भानसामग्र्यभावश्च तुल्य एव ।

नन्वहं मनुष्य इत्यादिव्यावहारिकसंघातज्ञानस्य प्रमाणाजन्यत्वात्कथमज्ञाननिवर्तकता । अवस्थान्तरान्यथानुपपत्त्या तत्कल्पने सुषुप्तावपि स्वप्न-

त्पत्तेरङ्गीकार इत्युक्तम् । तथा स्वप्नेऽपवरके शयानस्य गजाश्वादयोऽसंनिकृष्टा इत्यतस्तेऽवस्थाऽज्ञानकल्पिता इति स्वीक्रियतां नाम । शय्यापि च संनिकृष्टशय्यातोऽन्यादृशी स्वप्ने यदा प्रतीयते तदा साऽवस्थाऽज्ञानकल्पिता भवतु नाम । यदा तु शय्या वा देहो वा संनिकृष्टतत्स्वरूपापेक्षया नान्यादृशः प्रतीयते तदा शय्यान्तरस्य देहान्तरस्य च कल्पनं गौरवपराहतं भवतीति चेत्तत्राह—भानसामग्रीति-रक्तस्फटिकप्रतीतेर्जाग्रत्कालिकत्वेनेन्द्रियाणां सव्यापारत्वान्मनसश्च सवृत्तिकत्वाज्जपाकुसुमगतरक्तिम्नस्तत्र प्रतीतिर्भवतीत्युपपद्यते । स्वप्ने तु मनसो वृत्तिरहितत्वादिन्द्रियाणां च लीनत्वाद्भानसामग्र्या अभावेन संनिकृष्टस्यापि देहादेः प्रतीतिर्दुर्वचेति भावः ।

नन्वहमिति । प्रमाणजन्येनाधिष्ठानज्ञानेन ह्यज्ञानं निवर्तते । यथा समीपगतस्येयं शुक्तिरिति प्रमाणजन्यशुक्तिज्ञानेन शुक्त्यज्ञानं निवर्तते । तद्वदत्र स्वप्नावस्थागतस्यावस्थाज्ञानस्य निवर्तकमधिष्ठानभूतस्य मनोवाच्छिन्नजीवचैतन्यस्य प्रमाणजन्यं ज्ञानम् । तच्चाहं मनुष्य इत्याद्याकारकं व्यावहारिकदेहेन्द्रियादिसंघातज्ञानमिति वक्तव्यम् । परं तु तत्प्रमाणजन्यं न भवति । अन्तःकरणस्य यो विषयपर्यन्तं दण्डायमानो भागस्तदवच्छिन्नं चैतन्यं प्रमाणमिति पूर्वमुक्तम् (पृ. ५७ पं. ८) । अहं मनुष्य इति ज्ञाने त्वन्तःकरणावच्छिन्नं जीवचैतन्यं स्वस्य स्वयमेव विषय इति न तज्ज्ञानमन्तःकरणवृत्त्यपेक्षम् । किं तु तदन्तःकरणावच्छिन्नं जीवचैतन्यं साक्षिभास्यमेव । तथा चाहं मनुष्य इति ज्ञानस्य प्रमाणाजन्यत्वात्स्वाप्नाज्ञाननिवर्तकत्वं न युज्यत इति शङ्काशयः । शङ्कक एव स्वबुद्ध्या सिद्धान्त्याशयं कंचित्प्रकल्प्य तमनूद्य दूषयति—अवस्थान्तरेति । अयं हि शङ्कप्रकल्पितः सिद्धान्त्याशयः । स्वप्नावस्थापरित्यागपूर्वकं जाग्रदवस्थाप्रतिपत्तिर्हि सर्वेषां प्राणिनां प्रसिद्धैव । तथा च न हि दृष्टेऽनुपपन्नं नामेति न्यायानुसारेणावस्थान्तरप्रतिपत्तौ यत्नः क्रियताम् । स चाप्रमाणाजन्यमपि ज्ञानं स्वाप्नाज्ञाननिवर्तकमित्येतादृशकल्पनारूप इति । परं त्वेवं यदि कल्प्यते तदा तुल्यन्यायात्स्वप्नावस्थापरित्यागपूर्वकं सुषुप्त्यवस्थाप्रतिपत्तिस्थलेऽपि स्वाप्नाज्ञाननिवृत्त्यर्थं तादृशज्ञानं स्वीकार्यं स्यात् । स्वीक्रियत एवेति चेत्तथात्र सुषुप्ते जाग्रत्सुषुप्त्योः को विशेषः । तथा च स्वप्नाध्यासस्य जीवचैतन्यमधिष्ठानमिति पक्षो दुर्घट एवेति । अथ सिद्धान्ती स्वाशयप्रकल्पकं शङ्क-

---

१ स ङ च छ ज झ—न्तरवत् । २ च—प्रमाजन्य । ३ ङ—ज्ञानं निवर्तते । अव ।

बाधकज्ञानमास्थीयेत। तच्चानिष्टं जाग्रत्त्वापत्तेरिति चेत्[1]—साध्ववोचः[2]। स्वप्नावस्था-[3]ज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूपत्वान्न तत्र[4] तद्बाधः। जागरणे तु मिथ्यैव स्वप्नोऽभादित्यनुभवादहमिति ज्ञानस्य[5] प्रमाणाजन्यत्वे[6]पि यथार्थत्वाच्छ-

---

कं प्रथमतः प्रशंसति—साध्ववोच इति। स्वप्नावस्थातोऽवस्थान्तरस्य जाग्रद्रूपस्य प्राप्तिर्या प्रसिद्धा तदुपपत्तये प्रमाणाजन्यमपि ज्ञानं स्वाप्नाज्ञाननिवर्तकमित्येवं शङ्ककस्य कल्पना समीचीनैवेति प्रशंसाबीजम्। किं तु तदुत्तरं सुषुप्तावप्येवं ज्ञानं स्वीकार्यं स्यादिति यदुक्तं तद्वस्तुस्थित्यनवबोधमूलकम्। ईदृशी हि वस्तु स्थितिः। यदा स्वप्नावस्थातः सुषुप्त्यवस्थां प्रतिपद्यते जीवस्तदा स्वाप्निकमवस्थाऽज्ञानं नैव निवर्तते। तर्हि स्वप्नसुषुप्त्योः को विशेष इति चेत्—उच्यते। स्वप्नावस्था हि जाग्रत्सुषुप्त्यवस्थयोर्मध्यगता संध्यवस्था। यथा दिनरात्र्योः संधौ सामान्यान्धकारो दृश्यते। तत्र संधिकालश्च द्विविधः प्रातः सायं चेति। तत्र प्रातःकालिकः सामान्यान्धकारो निवर्तते। सायंकालिकस्तु सामान्यान्धकारो न निवर्तते प्रत्युत गाढतां प्रतिपद्यते। तथा जाग्रत्सुषुप्त्यवस्थाद्वयसंधौ स्वाप्निकमवस्थाऽज्ञानं विद्यते। तच्च तत्तद्भोगप्रदकर्मानुसारेण कदाचिन्निवर्तते कदाचिद्दृढीभवति। यदा निवर्तते तदा जागृतिः। यदा च दृढीभवति तदा सुषुप्तिरिति वस्तुस्थितिः। तथा च यथा दिन आम्रत्वादिना विशेषरूपेण वृक्षः प्रतीयते। यदा सामान्यान्धकारेण तद्विशेषरूपमाव्रियते तदा वृक्ष इत्येव प्रतीतिः। गाढान्धकारे तु वृक्षस्वरूपमपि आवृतं भवति। तथा स्वाप्निकाज्ञानेनान्तःकरणवृत्तयस्तिरोहिताः। गाढाज्ञाने त्वन्तःकरणस्वरूपमपि तिरोहितम्। तदा तु वासनामात्ररूपेणैव तज्जीवोपाधिरिति भावः। यथार्थत्वादिति। अहमंशविषयकज्ञानकालेऽन्तःकरणस्य दण्डायमानत्वासंभवेन प्रमाणाजन्यत्वम्। दण्डायमानान्तःकरणभागावच्छिन्नचैतन्यस्यैव प्रमाणत्वात्। नैतावता तज्ज्ञानमयथार्थम्। विषयस्याबाधात्। अहंकाररूपापन्नान्तःकरणावच्छिन्नं चैतन्यं हि तत्र विषयः। स च साक्षिभास्य एवेत्यन्यत्। तथा च ज्ञानमज्ञानस्य यद्बाधकं तत्र प्रमाणजन्यत्वेनैवेति नियमः। किं तु यथार्थत्वेनैवेति। किं चाहं मनुष्य इत्यत्र यन्मनुष्यांशप्रत्यक्षं तच्छरीरविशेषप्रत्यक्षमेव। शरीरविशेषवानेव हि मनुष्यो भवति। शरीरप्रत्यक्षं च घटादिप्रत्यक्षमिवान्तःकरणस्य चक्षुरादिद्वारा दण्डायमानां वृत्तिमपेक्षत एव। तथा च तत्प्रमाणजन्यमेवेति स्वाप्निकस्यावस्थाऽज्ञानस्य तेन बाधः स्यादेव। ननु साक्षिभास्यस्याहमंशस्य ज्ञानं प्रमाणाजन्यमपि स्वाप्नाज्ञाननिवर्तकं चेत्तेनैव व्यावहारिकघटविषयकस्य विशेषाज्ञानस्य निवृत्तिः

१ क ख छ झ—चेन्नासौ विरोधः। स्व। २ ज—चः। नासौ विरोधः। स्वप्ना। ३ अज्ञानेति पदच्छेदः। ४ च—तत्र बाधः। ५ ज—नस्याप्रमाणजन्य। ६ झ—न्यत्वाच्छरी।

रीरादिज्ञानस्य च प्रमाणजन्यत्वादवस्थाऽज्ञानविरोधित्वमनुभवसिद्धम्। विशेषाज्ञानं तु न प्रमाणजन्यवृत्तिमन्तरेण निवर्तते। साक्षिणश्चाविद्यानिवर्तकत्वाभावोऽविद्यासाधकत्वेनैव धर्मिग्राहकमानसिद्ध इति न किंचिदवद्यम्।

यावन्ति ज्ञानानि तावन्त्यज्ञानानीति चाभ्युपगमाच्छुक्तिज्ञानेनेव व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि कदाचिद्रजतभ्रमवन्न स्वाप्नाध्यासानुप-

---

स्यात्। व्यावहारिकसकलपदार्थावरकस्यावस्थाज्ञानस्य निवर्तकेन ज्ञानेन व्यावहारिकैकैकपदार्थावरकस्य विशेषाज्ञानस्य न निवृत्तिरित्युक्तेर्युक्तिबाधितत्वात्। तथा च घटज्ञानकाले घटावरणभङ्गायान्तःकरणवृत्त्यपेक्षा न स्यादिति चेत्तत्राह—विशेषाज्ञानं त्विति। अयं भावः। आवृतस्य प्रकाशे ह्यज्ञानस्य निवृत्तिर्युक्तिमती। व्यावहारिकसकलपदार्थावरकं स्वाप्नं यत्सामान्याज्ञानं तेन हि प्रथमतोऽन्तःकरणावच्छिन्नं जीवचैतन्यमावृतं भवति। तस्मिन्नावृते च प्रमातुरभावात्सकला व्यावहारिकाः पदार्थास्तेनावृता इव भवन्ति। तथा चान्तःकरणावच्छिन्नस्य जीवचैतन्यस्याहमिति प्रकाशेनावरणनाशेऽर्थादेव तादृशावरणमूलकस्य सकलपदार्थगतस्य सामान्यावरणस्य नाशः। एवं च घटावरकविशेषाज्ञानस्य तद्गतान्तःकरणवृत्त्यैव निवृत्तिर्नान्यथा। यथोन्मीलितेऽपि चक्षुषि घटस्वरूपावरकान्धकारापनोदाय दीपोऽपेक्ष्यते तद्वत्। ननु जाग्रदवस्थारम्भे साक्षी स्वयं प्रकाशितो भूत्वाहमंशं प्रकाशयति। तथा च तेन साक्षिप्रकाशेन व्यावहारिकस्य घटपटादितत्तद्व्यक्तिविशेषावरकस्य विशेषाज्ञानस्य मूलाज्ञानस्य च निवृत्तिः कुतो न भवतीति चेत्तत्राह—साक्षिण इति। अहमज्ञ इति प्रत्यक्षप्रमाणेनाज्ञानं सिध्यति। अज्ञानं च साक्षिभास्यम्। न तु घटादिवदन्तःकरणवृत्तिभास्यम्। प्रत्यक्षज्ञानेऽन्तःकरणवृत्तेर्बहिरिन्द्रियतन्त्रत्वात्। अज्ञानस्य च शब्दस्पर्शादिविलक्षणत्वेन तस्य केनापि बहिरिन्द्रियेण साकं संबन्धासंभवात्। अतस्तादृशाज्ञानग्राहकः साक्षी च तेनैव प्रत्यक्षप्रमाणेन सिद्धो भवति। अज्ञानसाक्षिणोर्ग्राह्यग्राहकभावावगाहिनोक्तप्रत्यक्षप्रमाणेनैव च साक्षिणोऽज्ञानानिवर्तकत्वमज्ञानस्य साक्षिस्वरूपप्रकाशानिवर्त्यत्वं च सिध्यति। तथा च धर्मिणोऽज्ञानस्य साक्षिणश्च ग्राहकं यत्प्रमाणं तदेव तन्निष्ठस्योक्तधर्मद्वयस्य ग्राहकं भवति। उक्तधर्मद्वयानङ्गीकारे केवलधर्मिस्वरूपस्योक्तप्रत्यक्षप्रमाणेन साधनासंभवात्।

ननु व्यावहारिकेणाहं मनुष्य इत्यादिज्ञानेन स्वाप्नस्य सामान्याज्ञानस्य निवृत्तौ कथं पुनरन्येद्युः स्वप्नावस्थाभानमित्यत आह—यावन्तीति। यथैकदा शुक्तिज्ञानेनैकस्मिञ्छुक्त्यज्ञाने नाशितेऽपि पुनः कालान्तरे शुक्त्यज्ञानेन

---

१ अज्ञानेति पदच्छेदः। २ ग—भावोऽज्ञानसाध। ३ ङ—वन्ति त्वज्ञा। ४ क्ष—वपि कदा।

पत्तिरिति जीवचैतन्यमेवाधिष्ठानमिति पक्षे न कोपि दोषः।

यदा पुनर्ब्रह्मज्ञानादेवाज्ञाननिवृत्त्यभ्युपगमस्तदा रज्ज्वां दण्डभ्रमेण सर्पभ्रमतिरोधानवदधिष्ठानज्ञानाभावेपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेर्भ्रम-

रजतभ्रम उत्पद्यते तथैकनाहं मनुष्य इति ज्ञानेनैकस्मिन्स्वाप्ने सामान्याज्ञाने निवृत्तेपि पुनरन्यस्मात्स्वाप्नात्सामान्याज्ञानात्स्वप्नभ्रमोपपत्तिरविरुद्धेति भावः।

एवं मनोवच्छिन्नं जीवचैतन्यं स्वप्नाध्यासस्याधिष्ठानमिति प्रथमं पक्षमुपपाद्य मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं स्वप्नाध्यासस्याधिष्ठानमिति द्वितीयं पक्षमुपपादयति--यदा पुनरिति । अस्मिन्पक्षेऽधिष्ठानभूतस्य ब्रह्मचैतन्यस्य जागृतावपि यथार्थज्ञानाभावात्स्वाप्निकस्य सामान्याज्ञानस्य विनाशो यद्यपि वक्तुं न शक्यते तथापि जागृतावहं मनुष्य इत्यादिज्ञानेन स्वाप्निकस्य सामान्याध्यासस्य तिरोभावः स्यादेव । ननु ब्रह्मचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वपक्षेऽहं मनुष्य इति ज्ञानमधिष्ठानस्य यथार्थं ज्ञानं न भवतीति चेत्किं ततः । अधिष्ठानयथार्थज्ञानमेव भ्रमविनाशकमिति नियमवदधिष्ठानयथार्थज्ञानमेव भ्रमतिरोभावकमिति नियमे बीजाभावात् । यथा रज्ज्वां जातस्य सर्पभ्रमस्य तदुत्तरं जायमानेन दण्डभ्रमेणायथार्थेनापि तिरोभावो भवति तद्वत् । यथा रज्जुस्वरूपयथार्थज्ञानेन सर्पभ्रमविनाशो भवति न तथा तत्र दण्डभ्रमेण सर्पभ्रमविनाशो भवति । दण्डभ्रमोत्तरमपि पुनः कदाचित्क्षणमात्रेण सर्पभ्रमसंभवात् । न च पूर्वप्रतीयमानात्सर्पादन्य एव पुनः सर्पः प्रतीयत इति वाच्यम् । कदाचिदन्यस्य संभवेपि कदाचित्तस्यापि संभवात् । पूर्वप्रतीयमानः सर्पः पुनः कदापि नैव प्रतीयत इति नियमे बीजाभावात् । नन्वेवं स्वप्नभ्रमस्य जागृतौ केवलं तिरोभाव एव न विनाश इत्यङ्गीकारे पुनस्तस्योत्थानं स्यादिति चेन्न । तिरोभूतस्योत्थानं भवत्येवेति नियमाभावात् । न च य एकस्मिन्दिनेऽनुभूतः स्वप्नस्तस्य पुनः कदाप्युत्थानं न भवतीति नियमो दृश्यते । तस्य कारणं स्वप्नभ्रमविनाश एव न तु स्वप्नभ्रमतिरोभाव इति वाच्यम् । उक्तनियमस्य व्यभिचारात् । कदाचिदेवमनुभूयते । स्वप्नदर्शने प्रवृत्ते मध्ये क्षणमात्रं जागृतौ पुनः सद्यः स्वप्नदर्शने तत्र कदाचित्पूर्वस्वप्नदृष्टानामर्थानामनुवृत्तिर्दृश्यते । ननु मनोवच्छिन्नं जीवचैतन्यं स्वप्नाध्यासाधिष्ठानमिति प्रथमपक्षे जागृतावहं मनुष्य इति ज्ञानेन स्वप्नभ्रमविनाशे सतीयमनुवृत्तिर्नोपपद्यत इति चेदिष्टापत्तिरेव । पूर्वस्वप्नदृष्टार्थसदृशा एवार्थाः पुनर्दृश्यन्ते न तु त एवेति तत्पक्षेऽङ्गीकारात् । ननु मूलाज्ञानावच्छिन्नं ब्रह्म स्वप्नाध्यासाधिष्ठानं चेत्तत्र कल्पितस्य गजाश्वादेः सर्वजीवसाधारण्यं स्यात् । यथा जागृतावेक एव गजो-

१ च छ ञ--तिरोभाववद् ।

चैतन्यमेव स्वप्राध्यासाधिष्ठानमिति पक्षेपि न काश्चिद्दोषः । प्रतिजीवं स्वप्राध्यासा-साधारण्यं तु मनोगतवासनानामसाधारण्यादेव ।

मनोवच्छिन्नं ब्रह्मचैतन्यमेव वाधिष्ठानम् । एतस्मिन्नपि पक्षेऽवस्थाऽज्ञानं-स्यैवावरकत्वाङ्गीकारान्न काप्यनुपपत्तिः । अत एव शास्त्रेषु क्वचित्क्वचित्तथा व्यपदेशः ।

ननु मनोवच्छिन्नचैतन्यस्याधिष्ठानत्वेऽहं गज इत्याद्यहंकारसामानाधि-करण्येनैव गजप्रतीतिः स्यात् । इदं रजतमिति शुक्तिसामानाधिकरण्येन रजत-

ऽनेकैर्देवदत्तयज्ञदत्तादिभिर्दृश्यते तद्वदिति चेत्तत्राह–प्रतिजीवमिति । मनोगतेति । यथा शुक्तिरजतावभासस्थलेऽनेके देवदत्तादयो युगपदेव भ्रान्ताश्चेत्तदापि न तेषां सर्वेषामेकस्यैव रजतस्यावभासो भवति । किं तु प्रतिजीवं वासनाभेदा-द्यावन्तो भ्रान्तास्तावन्ति रजतानि आविद्यकानि तत्रोत्पद्यन्ते । प्रत्येकं चैक-स्यैवावभासस्तद्वत् ।

एवं मनसि प्रतिबिम्बितं जीवचैतन्यं मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं वा स्वाप्नाध्यासाधिष्ठानमिति पक्षद्वयमुपपाद्य तृतीयं पक्षं प्रदर्शयति–मनोऽवच्छिन्न-मिति । प्रतिबिम्बितस्वरूपाज्जीवादन्यद्बिम्बभूतं यत् ब्रह्मचैतन्यं तन्मनोव-च्छिन्नं सत्स्वाप्नाध्यासाधिष्ठानमित्यर्थः । एतदेव जीवस्वरूपमित्यवच्छेदवादिनो मन्यन्ते । तथा च प्रतिबिम्बवादाभिप्रायेण प्रथमः पक्षः । अवच्छेदवादाभि-प्रायेण तृतीयः पक्षः । ननु ब्रह्मचैतन्यं मूलाज्ञानावच्छिन्नत्वेनावृतमपि मनो-वच्छिन्नत्वेन सर्वदाऽनावृतमेवेति कथं तदधिष्ठानमिति चेत्तत्राह–एतस्मिन्नपीति । अपिना प्रथमपक्षसमुच्चयः । यथा मनोऽवच्छिन्नं जीवचैतन्यमधिष्ठानमिति प्रथमपक्षेऽवस्थाऽज्ञानमावरकत्वेन स्वीक्रियते तथैव तृतीयपक्षेपीति भावः । पक्ष-त्रयेपि प्राचीनग्रन्थकारसंमतिमाह–अत एवेति ।

ननु मन इति । उक्तपक्षत्रयमध्ये प्रथमपक्षे तृतीयपक्षे च मनोवच्छिन्नं चैतन्यं स्वाप्नाध्यासाधिष्ठानम् । तच्चाधिष्ठानं जीवरूपमहमिति प्रतिभासते । तथा च यथेदंतया प्रतिभासमाने शुक्तिरूपाधिष्ठाने तादात्म्येनाध्यस्तं रजतमपी-दंतयावभासते इदं रजतमिति तथाऽहंतया प्रतिभासमाने जीवचैतन्यरूपाधिष्ठाने तादात्म्येनाध्यस्तः स्वाप्निको गजादिरहंतयावभासेताहं गज इति न त्विदंतयाऽयं गज इति । मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं स्वप्नाध्यासाधिष्ठानमिति द्वितीयपक्षे त्वधिष्ठानस्याहंतया प्रतिभासमानत्वाभावाद्यद्यपि नाहं गज इति प्रतीतिप्रसङ्ग-

१ ख ङ च छ ज झ–ध्यासोपादानमि । २ ख ङ च छ झ–प्रासाधा । ३ ङ–सनासाधा । ४ ग च छ ज झ–नस्यावर । ५ झ–न्नजीवचैत । ६ च छ झ–इत्यहंका । ७ ग–ण्येन गज ।

प्रतीतिवत् । न त्वयं गज इति । ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेपि गज इत्याकारैव प्रतीतिः स्यान्न त्वयं गज इति । तत्रापीदंकारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति चेन्न ।

आद्ये पक्षेऽहंकारस्य शुक्तिवदधिष्ठानावच्छेदकत्वाभावाच्छुक्ती रजतमितिवदहं गज इति न भ्रमाकारप्रसङ्गः । अहमिति ज्ञानस्येयं शुक्तिरिति ज्ञानस्येव भ्रमविरोधित्वात् । इदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात् । स्वप्ने तु गज इत्याकारवदयमित्याकारोपि कल्पित एव । उभयाकारबाधेप्य-

स्तथापि तस्याधिष्ठानस्येदंतयापि प्रतिभासमानत्वं नास्तीत्ययं गज इति प्रतीतेरनुपपत्तिरस्त्येव । तथा च जीवचैतन्यस्याधिष्ठानत्वे ब्रह्मचैतन्यस्याधिष्ठानत्वे वेदमिति प्रतीयमानो बाह्यार्थो न कश्चिदधिष्ठानभूत इति स्वाप्निकगजादेरिदंतया जायमाना प्रतीतिर्नोपपद्यत इत्याशयः ।

अधिष्ठानावच्छेदकत्वादिति । अध्यासस्याधिष्ठानं च न संयोगादिना घटस्य भूतलवत् । किं त्वाव्रियमाणत्वेनान्धकारस्य गर्भागारवत् । तथा चाध्यासे सति तदध्यासाधिष्ठानं येन स्वरूपेणावृतं भवति तदधिष्ठानावच्छेदकम् । यथा शुक्तौ रजताध्यासे शुक्तित्वमधिष्ठानावच्छेदकम् । रजतसंस्कारसहकृता ह्यविद्या रजतविरोधिनमधिष्ठानगतं शुक्त्यंशमावृणोति न त्वविरुद्धमधिष्ठानगतमिदमंशम् । तच्चाधिष्ठानावच्छेदकं शुक्तित्वमध्यासे सत्यावृतत्वाद्यावदध्यासं न भासते । तथात्र जीवचैतन्यमधिष्ठानमिति पक्षेऽहंत्वमधिष्ठानावच्छेदकमिति तदप्रतीतियुक्तैव । अधिष्ठानभूतजीवचैतन्यगताहमंशस्य गजादिसंस्कारविरुद्धत्वात् । अविद्या च स्वसहकारिभूततत्तत्संस्काराविरोधिनो येऽधिष्ठानगता अंशास्तद्भिन्नविशिष्टत्वेनाधिष्ठानस्वरूपं नावृणोति । तथा च भ्रमेप्यधिष्ठानभूतशुक्तिगतेदमंशस्य रजतसंस्काराविरुद्धत्वादिदं रजतमित्येवमिदमंशप्रतीतिर्भवत्येव । ननूक्तरीत्याधिष्ठानभूतजीवचैतन्यगताहमंशस्य गजादिसंस्कारविरोधित्वात्तस्य प्रतीतिर्मा भून्नाम । परं त्वयं गज इत्येवमध्यस्तगजादिसामानाधिकरण्येनेदमंशस्य या प्रतीतिर्जायते सा नोपपद्यते । स्वाप्नाध्यासाधिष्ठानं मतभेदेन जीवचैतन्यं ब्रह्मचैतन्यं वास्तु । पक्षद्वयेप्यधिष्ठानभूते चैतन्य इदमंशस्याभावादिति चेत्तत्राह–स्वप्ने त्विति । यथेदं रजतमिति प्रातिभासिकरजतप्रतीतिस्थले रजतांशमात्रमध्यस्तमिदमंशस्त्वधिष्ठानभूतशुक्तिगत एवावभासते न तथा स्वप्नेऽयं गज इत्यत्र । तत्र गजांश इदमंशश्चेति द्वयमपि अध्यस्तमेवेति नानुपपत्तिः । नन्वेवं द्वयोरप्यंशयोः कल्पितत्वे सति तयोरसत्यत्वाद् द्वयोरपि बाधे न किंचिदवशिष्येत । तथा च शून्यवादप्रसङ्ग इति चेत्तत्राह–उभयाकारेति । भ्रान्तस्य

१ छ–कारतयैव । २ ज–नानवच्छेदकत्वाच्छुक्ती । ३ ङ च छ झ–त्वाच्छुक्ती । ४ ज–त्वात् । पक्षद्वयेपीदमंश ।

धिष्ठानभूतचैतन्यस्याबाधान्न शून्यवादप्रसङ्गः। जाग्रद्दशायामपि शुक्तीदंकारविलक्षणस्य प्रातीतिकस्यैव रजतेदंकारस्य भानाभ्युपगमाच्च । अध्यस्तमेव हि परिस्फुरति भ्रमेषु ( सं. शा. १।३६ ) इति न्यायात्। शुक्तीदमंशभानपक्षेपि नेदमंशसत्यत्वमध्यासे प्रयोजकम्। किं त्वधिष्ठानसत्यत्वम्। अधिष्ठानं च तत्राज्ञातं शुक्तिचैतन्यमिवात्रापि साक्षिचैतन्यं विद्यत एवेत्युपपादितम् । तस्मान्न पक्षद्वयेपि काप्यनुपपत्तिः ।

अत्र च स्वाप्निकपदार्थभोक्ता तैजस इत्युच्यते । पित्ताख्यतेजःप्रधानत्वात्। आदित्यादिज्योतिरन्तरेणापि भासकत्वादिति वा।

एवं जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनान्तःकरणस्य कारणात्मनावस्थाने सति विश्रामस्थानं

---

यत्परिस्फुरति तद्गतमेव किंचिद् भ्रमनिवृत्त्युत्तरमवशिष्टमपेक्ष्यत इति नियमे प्रमाणं नास्तीति भावः। नन्वेवं जागृताविदं रजतमिति भ्रमः। स्वप्नेऽयं गज इति भ्रमः। तयोश्चोक्तरीत्या वैलक्षण्याङ्गीकारे भ्रमद्वैरूप्यं स्यादिति चेदस्तु। अथ यदि सर्वत्रैकविध एव भ्रम इत्याग्रहश्चेज्जागृतावपि स्वप्न इवांशद्वयमध्यस्तमङ्गीक्रियत इत्याह-जाग्रद्दशायामपीति। नन्वेवमिदमंशस्याप्यसत्यत्वेऽध्यास एव न सिध्यतीति चेद् भ्रान्तोसि। वस्तुतोधिष्ठानस्य सत्यत्वं ह्यध्यासे प्रयोजकं न तु भ्रमावस्थायां प्रतीयमानस्याधिष्ठानगतस्य कस्यचिदंशस्य सत्यत्वं तत्र प्रयोजकम् । प्रमाणाभावात्। तदाह-शुक्तीदमंशेति। पक्षद्वयेपीति। यद्यप्यन्तःकरणावच्छिन्नं जीवचैतन्यं स्वप्नाध्यासाधिष्ठानमिति प्रथमः पक्षो मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं तदधिष्ठानमिति द्वितीयोन्तःकरणावच्छिन्नं ब्रह्मचैतन्यमिति तृतीयः पक्ष इत्येवं पक्षत्रयं प्राक्प्रदर्शितं तथापि द्वितीयतृतीयपक्षयोरवच्छेदकभेदेप्यवच्छेद्यभेदाभावेन तयोः पक्षयोरैक्यमादाय पक्षद्वयोक्त्युपपत्तिर्बोध्या । अथ वा तृतीयप्रथमपक्षयोरवच्छेद्यस्य बिम्बप्रतिबिम्बभेदेन भेदेप्यवच्छेदकस्यान्तःकरणस्यैक्यात्तयोः पक्षयोरैक्यमादाय तदुपपत्तिः ।

एवं प्रसङ्गात्स्वाप्निकपदार्थोपादानकारणं स्वप्नाध्यासाधिष्ठानं च निरूप्य स्वप्नावस्थायां भोक्तृस्वरूपं दर्शयति-अत्र चेति ।

क्रमप्राप्तां सुषुप्त्यवस्थां निरूपयति-एवं जाग्रदिति । कारणात्मनेति । कारणीभूताज्ञानगतसंस्काररूपेणेत्यर्थः ।

---

१ च-नचैत। २ ग-तन्याबाधा। ३ झ-शायां शु। ४ ख-नं चाज्ञातं; अ-नं चात्राज्ञातं शुक्तिचैतन्यमिव नत्रापि साक्षि। ५ झ-किस्वरूपमिवा। ६ ग-नकत्वात्। ७ ङ-विश्रम।

सुषुप्त्यवस्था । न किंचिदवेदिषमिति कारणमात्रोपलम्भः सुषुप्तिः । तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेपि साक्ष्याकारं सुखाकारमवस्थाऽज्ञानाकारं चाविद्याया वृत्तित्रयमभ्युपेयते ।

अहंकाराभावाच्च नैका विशिष्टवृत्तिः । सुषुप्त्यभावप्रसङ्गाच्च ।

---

कारणमात्रोपलम्भ इति । कारणमात्रेणावस्थानं सुषुप्तिरित्येव लक्षणं कृतं चेत्प्रलयेऽतिव्याप्तिः । तद्वारणायोपलम्भपदम् । तत्र जाग्रदिति । अयं भावः । अविद्या हि प्रलये मूलस्वरूपेणैवावतिष्ठते । न तु तदानीं तस्याः कापि वृत्तिः । सृष्टौ त्वज्ञानाकारा तस्या अविद्यायाः प्राथमिकी वृत्तिः । इयं च जाग्रत्स्वप्नसुषुप्तिरूपेऽवस्थात्रयेप्यविशिष्टा । अवस्थात्रयेपि मूलस्वरूपं न जानामीति संप्रत्ययात् । प्राथमिकी चेयमविद्यावृत्तिर्व्यावहारिकस्य शब्दाद्यवभासस्य न विरुद्धा । तस्याः सत्त्वेऽपि जागृतौ शब्दाद्यवभासदर्शनात् । अतस्तावन्मात्रेण न सुषुप्त्यवस्थोपपादयितुं शक्यते । किं तु व्यावहारिकशब्दाद्यवभासनिरोधकमवस्थाविशेषभूताज्ञानाकारमविद्याया वृत्त्यन्तरं सुषुप्तावश्यं वाच्यम् । तथा सुषुप्तौ साक्ष्याकारं सुखाकारं चाविद्याया वृत्त्यन्तरमवश्यं कल्पनीयम् । अत एव जागृतौ जायमानं सुखमहमस्वाप्सं न किंचिदवेदिषमिति अनुसंधानमुपपद्यते । तच्च सुषुप्तिस्थानुभवजन्यम् । उक्तानुसंधानानुसारेण च सौषुप्तिकेऽनुभवे चत्वारोंशाः कल्पनीया भवन्ति । सुखांशः अहमंशः स्वापांशः अज्ञानांशश्चेति । तेषु चाहमंशो न कल्पयितुं शक्यते । सुषुप्तौ सवृत्तिकस्यान्तःकरणस्य लीनत्वात् । अहमंशस्य चान्तःकरणवृत्तिविशेषमूलकत्वात् । जागृतिस्थे सुखमहमस्वाप्समित्यनुसंधानेऽहमंशस्य प्रवेशस्तु नेतरांशत्रयवदनुसंधानविषयतया । किं त्वनुसंधानाश्रयतया । स चाश्रयो जागृतावनुसंधानकालेस्त्येवेति नानुपपत्तिः । अवशिष्टं यदंशत्रयं तदाकारेणाविद्याया वृत्तित्रयम् । नन्वत्रोक्तानुसंधानानुरोधेन स्वापाकारा वृत्तिर्निर्देष्टव्या । सा न निर्दिष्टा । साक्ष्याकारा चातिरिक्ता निर्दिष्टा । तत्र किं बीजमिति चेदुच्यते । यात्र स्वापाकारा निर्देष्टव्या वृत्तिः सैव साक्ष्याकारेत्यनेन शब्देन निर्दिष्टा भवति । कारणमात्रोपलम्भः सुषुप्तिरिति हि स्वापपदार्थः । तदानीं कारणस्याज्ञानस्य य उपलम्भः स साक्षिरूप एव । जागृतिस्थोपलम्भो हि मनोवृत्तिरूपः । स्वाप्निकोपलभस्त्वविद्याकल्पितमनोवृत्तिरूपः । एवमेव प्रातिभासिकरजताद्युपलम्भः । सुषुप्तिस्थोपलम्भस्तु न कथमपि मनोवृत्तिरूपः किं तु साक्षिरूप एवेति ।

ननु विशिष्टामेकां वृत्तिमुपेक्ष्य किमिति वृत्तित्रयमङ्गीक्रियते तत्राह— अहंकाराभावादिति । मिथः संबद्धयोर्द्वयोरर्थयोर्मध्य एकस्यान्यवैशिष्ट्यं संभवति

---

१ ख ङ च छ ज झ—स्था । कारण । २ ङ—ज्ञानानामभावे । ३ अज्ञानेति पदच्छेदः
४ ख ङ छ ज—ज्ञान् । अत ।

अत एव वृत्तिरूपस्योपलम्भस्याभावान्न प्रलयेतिव्याप्तिः। तत्र तत्कल्पनाबीजाभावात्। इह च सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थितस्य परामर्शात्। अननुभवे परामर्शानुपपत्तेः। अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावाच्च न तत्तोल्लेखाभावेपि स्मरणत्वानुपपत्तिः। स्मरणे तत्तोल्लेखनियमाभावाच्च। जाग्रद्दशाया-

---

नासंबद्धयोः। उक्तवृत्तित्रयमध्ये साक्षी त्वसङ्गचैतन्यमात्ररूपत्वान्न तस्य किंचित्संबद्धत्वेन प्रतीतिः। सुखं चाज्ञानं चेति द्वावप्यहमर्थधर्मौ। तथा च यथाम्रफलादौ द्रव्यधर्मयो रूपरसयोर्मध्ये नैकस्यान्यवैशिष्ट्यं तथा सुखाज्ञानयोरपि। अथ यथा रूपरसवैशिष्ट्येनाम्रफलस्य द्रव्यस्य प्रतीतिस्तथात्र सुखाज्ञानवैशिष्ट्येन तदाश्रयस्य प्रतीतिर्वाच्या। सापि न संभवति। सुखाज्ञानाश्रयीभूतस्याहमर्थस्य सुषुप्तावहंभावेनाप्रतीयमानत्वात्। तादृशप्रतीत्यभ्युपगमे तु सुषुप्त्यभाव एव स्यादिति भावः। अत एवेति। सुखमहमस्वाप्सं न किंचिदवेदिषमित्यनुसंधानानुसारात्सुषुप्तावविद्यावृत्त्यङ्गीकारेण सुषुप्तिप्रलययोर्वैलक्षण्यस्य सिद्धत्वादेवेत्यर्थः। परामर्शादिति। परामर्शः स्मरणम्। स्मरणं चानुभवजन्यमिति स्मरणरूपेण कार्येण स्वकारणीभूतः सौषुप्तिकोनुभवोनुमीयते। अनुभवश्च वृत्तिरूप इति सुषुप्त्यवस्थायामुक्ताविद्यावृत्तिः सिद्धा भवति। ननु जागृतौ जायमानं सुखमहमस्वाप्समित्यादिकं ज्ञानं न स्मरणरूपं येन तत्स्वकारणीभूतमनुभवमनुमापयेत्। स देवदत्तस्तत्र प्रासादे तादृशमवादीदित्याकारकं यत्स्मरणं तत्र देवदत्तादेस्तत्त्वेनोल्लेखो दृश्यते। सौषुप्तिकं सुखं तु जागृतौ तत्सुखमित्येवं तत्त्वेन नानुसंधीयते। तथा च तस्य स्मरणत्वमेव नास्तीति चेत्तत्राह–अन्तःकरणेति। उपरागो वृत्तिः। न स्मरणमात्रे तत्तोल्लेखनियमोस्माभिरङ्गीक्रियते। प्रमाणाभावात्। जागृतौ जायमानो योनुभवः सोन्तःकरणवृत्तिकालीन इति तादृशानुभवजन्ये स्मरणे भवतु नाम तत्ताया उल्लेखः। न तु स्मरणमात्रे स आवश्यकः। किं चान्यैर्वैशेषिकादिभिरपि स्मरणे तत्तोल्लेखनियमो नाङ्गीक्रियत इत्याह–स्मरण इति। अयं भावः। अनुभवो हि संस्कारद्वारा स्मरणे हेतुरिति सर्वसंमतम्। संस्कारश्चैकानुभवजन्योपि नैकविध एव। स्थूलो गौरो रक्तोष्णीषवान्देवदत्तो दृष्टः परेद्युर्यथा स्मरणविषयो भवेन्न तथा मासेन वर्षेण वा। कालाधिक्ये तु कदाचिद्गौर इति स्मर्यते स्थूलो वा कृशो वेति न स्मर्यते। उष्णीषवानिति स्मर्यते रक्तं वा पीतं वेति न स्मर्यते। एवं च जागृतिस्थानुभवजन्येपि स्मरणे यथासंस्कारं तत्तोल्लेखो भवतु मा वा भूत्। नैतावता स्मरणत्वं तस्य हीयत इति। अथ काश्चिद्धैयात्यात्स्मरणे तत्तोल्लेखनियम इत्यभिनिवेशेन सुखमहमस्वाप्समित्यादिज्ञानं न स्मरणं किं त्वनुभव एवेति ब्रूयाच्चेत्तत्राह–जाग्रद्दशायामिति। अनुभवो हि प्रत्यक्षानुमित्युपमिति-

१ ख–र्शानुपपत्तेः। अन्तः। २ च–भवाच्च न।

मस्वाप्समित्यनुभवानुपपत्तेश्च । लिङ्गाभावेनाश्रयासिद्ध्या चानुमानस्यासंभवात्[1]। अहंकारस्तूत्थानसमय एवानुभूयते । सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात्स्मरणानुपपत्तेः ।

---

शाब्दाद्यन्यतमरूपः । तत्र प्रत्यक्षं न संभवति । स्वापस्य तदानीमभावात् । प्रत्यक्षं हि वर्तमानविषयकमेव । सादृश्यज्ञानाभावान्नोपमितिः । शाब्दज्ञानमूलकत्वाभावाच्च न शाब्दोनुभवः । अर्थापत्त्यनुपलब्धी त्वत्र न संभवत इति स्पष्टमेव । अनुमित्यात्मकोपि न सोनुभव इत्याह–लिङ्गाभावेनेति । भूतकालिकस्वापादिज्ञापकस्य कस्यचिच्चिह्नस्य जागृतावदर्शनात् । नेत्रसंकोचादिकस्य स्वापकार्यस्य नियमेन ज्ञानाभावात् । पक्षासिद्ध्यापि नानुमितिरित्याह–आश्रयेति । अहं स्वापवानिति ह्यनुमित्याकारो वाच्यः । स च सुतरां न संभवति । अहमर्थस्वापयोर्विरोधेन समानकालिकत्वाभावात् । अहंभावः स्वापविगम एव प्रकटीभवति । सुषुप्तावन्तःकरणस्यैव लीनत्वेन तद्विशेषस्याहंकारस्य तत्रावस्थानासंभवात् । एतेन यथा पर्वते धूमं दृष्ट्वा गृहे समागतः पर्वतं स्मृत्वाग्निमनुमिमीते तथात्र जागृतौ स्वापकालिकाहंभावस्मरणेनानुमितिः स्यादित्यपास्तम् । तदाह–सुषुप्ताविति ।

नन्वेवं सुषुप्तावहंभावो नास्ति चेत्सुषुप्तिस्थानुभवजन्ये सुखमहमस्वाप्समिति स्मरणे कथमहंभावप्रतीतिरिति चेन्न । सुखमहमस्वाप्समिति यथा स्मरणविषयतया स्वापः प्रतीयते न तथाहंभावः स्मरणविषयतया प्रतीयते किं तु स्मरणाश्रयतयेति प्रागेवोक्तत्वात् । स्यादेतत् । अहंकारस्य स्मरणाश्रयतयापि प्रवेशो दुर्वचः । तथा हि । नाहंकारः स्मरणाश्रयो भवितुमर्हति । किं तु साक्षिचैतन्यमेव स्मरणाश्रयः । अनुभवितुरेवानुसंधातृत्वनियमात् । अनुभवितृ चात्र साक्षिचैतन्यं नाहंकारः । सुषुप्तौ तस्य लीनत्वात् । ननु ज्ञानं नाम मनोवृत्तिः । स्मरणमपि च ज्ञानविशेष एव । तथा च स्मरणं मनोवृत्त्यात्मकमेवेत्यवश्यं वक्तव्यम् । तथात्वे च यथाहं घटं जानामीत्यत्र चैतन्येऽध्यस्तमन्तःकरणं प्रथमतोऽहंकाररूपेण परिणामं प्राप्य पश्चाच्चक्षुरादीन्द्रियद्वारा विषयदेशं प्राप्य विषयाकारेण परिणमते तथा स्मरणस्थलेपि चैतन्येऽध्यस्तमन्तःकरणं प्रथमतोऽहंकाररूपेण परिणामं प्राप्य पश्चात्पूर्वानुभूतविषयाकारेण परिणमते । एवं च वृत्त्यात्मकस्य स्मरणस्याहंकार एवाश्रयः । अनुभवितुरेवानुसंधातृत्वमिति नियमस्तु अनुभवितरि साक्षिचैतन्येऽन्तःकरणस्य तादात्म्येनाध्यासादुपपादनीय इति चेन्न । वैषम्यात् । घटादिविषयके प्रमाज्ञानेस्तु नामाहंकारात्मकस्य मनसो वृत्तिः । अन्यत्र तु न तथा । शुक्तिरजतज्ञाने प्रातिभासिकरजताकारा मनसो

---

१ ग च छ ज झ–पत्तः । लि ।

मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन[1] रक्तं मुखमिति प्रतीति-

---

वृत्तिर्न संभवति । रजतस्य वस्तुतस्तत्रासत्त्वात् । यथा वस्तुतः पञ्चकोणे केदारे भ्रान्त्या त्रिकोणत्वेन गृहीतेऽपि तत्र प्रविष्टं जलं पञ्चकोणाकारमेव गृह्णाति न तु कदाचिदपि त्रिकोणाकारम् । तथा व्यावहारिकसत्ताश्रयं मनो व्यावहारिकस्यैव वस्तुन आकारं गृह्णीयान्न तु प्रातिभासिकस्य । अन्येनान्यस्याकारसदृशाकारग्रहणं हि तयोः संबन्धेन भवति । संबन्धश्च व्यावहारिकस्य व्यावहारिकेणैव सह भवेन्न तु प्रातिभासिकेनेति । तथा च मनस्तद्वृत्त्योः कार्यकारणभावे कार्यतावच्छेदकं प्रमात्वमेव । ज्ञानत्वं तदवच्छेदकं चेत्प्रातिभासिकरजते दोषः स्यात् । एवं च शुक्तिरजतप्रतिभासे रजताकारा मानसी वृत्तिरपि रजतवदविद्यापरिणामभूता काल्पनिक्येव । अत एवार्थाध्यासापेक्षयातिरिक्तो ज्ञानाध्यासोऽङ्गीकृतः । ननु शुक्तिरजतप्रतिभासे मनोवृत्तिरपि काल्पनिकी चेत्तया वृत्त्या जायमानः संस्कारः काल्पनिक एव मनसि स्यान्न तु व्यावहारिके मनसीति कथं पश्चात् व्यावहारिकेण मनसा तदनुसंधानमिति चेन्मैवम् । व्यावहारिकमनस्तादात्म्येनैव काल्पनिकस्याविद्यकस्य मनसोऽध्यासात् । तथा च काल्पनिकमनोवृत्त्या जायमानः संस्कारः काल्पनिकमनोऽध्यासाधिष्ठानभूते वास्तविके (व्यावहारिके) एव मनसि जायत इति तेन मनसा जायमानं शुक्तिरजतस्मरणमुपपन्नं भवति । एवमेव सुषुप्त्यवस्थायां मूलसाक्षिणि तादात्म्येनाध्यस्तोऽविद्याकल्पितः साक्षी सुखमज्ञानं चानुभवतीति तेन जायमानः संस्कारो मूलसाक्षिणि मनःकारणीभूताज्ञानविशिष्ट एव जायत इति जागृतौ कार्यभूतमनोविशिष्टेन साक्षिणा क्रियमाणमनुसंधानमुपपद्यते । यथा सर्पभ्रमात्कृतेन दण्डाघातेन जायमाना विशीर्णता रज्ज्वा एव भवति तद्वत् । प्रकृतमनुसरामः । एवं च शुक्तिरजतज्ञानस्येव स्मरणस्यापि प्रमात्वाभावान्न तस्य मनःपरिणामरूपत्वम् । किं तु साक्षिभास्या एव ते तदानीं विषयाः । जागृतिस्थानुभवाज्जायमानेऽपि स्मरण एवमेव । प्रमात्वाभावस्याविशिष्टत्वात् । इत्थं चाहंकारस्य न स्मरणाश्रयत्वमिति सुखमहमस्वाप्समित्यत्राहंभावस्य स्मरणाश्रयतयापि प्रवेशो दुर्वच इति चेत्सत्यम् । यद्यपि साक्षिचैतन्यमेव सर्वत्र स्मरणाश्रयं तथाप्यध्यस्ताहंकारमेव साक्षिचैतन्यं स्मरणाश्रयं भवतीति स्मरणाहंकारयोरेकत्र साक्षिचैतन्ये सामानाधिकरण्येनाहंकारस्य स्मरणाश्रयत्वेन प्रतीतिः सूपपादा । एवं चाहंकारस्य वस्तुतः स्मरणाश्रयत्वाभावेऽपि न क्षतिः ।

एतदेव च दृष्टान्तेनोपपादयति–मुखप्रतिबिम्बाश्रय इति । यथाध्यस्तस्य लौहित्यस्य प्रतिबिम्बस्य चाश्रयीभूतो दर्पणो न तु प्रतिबिम्बं लौहित्याश्रयम् । तथापि लौहित्यप्रतिबिम्बयोरेकत्र दर्पणे सामानाधिकरण्येन लौहित्याश्रयतया मुखस्य प्रतीतिर्जायते तथात्र स्मरणस्याहंकारस्य चाश्रयीभूतं साक्षिचैतन्य-

---

१ ख–से रक्तं मुखमिति च प्रती ।, च छ–से रक्तं ।

वदहंकाराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वादहं सुखमस्वाप्समिति सामानाधिकरण्यप्रतीतिः । न पुनरहं सुखीतिवदाश्रयतया । स्मृतिसंशयविपर्ययाणां साक्षिचैतन्याश्रयत्वनियमात् । अहंकारस्य च प्रमाणजन्यज्ञानाश्रयत्वनियमात् । प्रमात्वेनैव तत्कार्यतावच्छेदात् । अप्रमात्वावच्छेदेन चाविद्याया एव कारणत्वात् । अत एवानाप्तवाक्यादिजन्यपरोक्षविभ्रमोप्यविद्यावृत्तिरेवेत्यभ्युपगमो वेदान्तविदाम् । तत्रान्तःकरणवृत्तिजनकसामग्रीसंभवेपि प्रमात्वाभा-

---

मिति स्मरणाहंकारयोरेकत्र साक्षिचैतन्ये सामानाधिकरण्येन स्मरणाश्रयतयाहंकारस्य प्रतीतिर्जायते । अहंकाराश्रयतयेति । साक्षिचैतन्यं हि सुषुप्तावनुभूतान्सुखादीनहंकाराश्रयत्वेन स्मरतीति भावः । स्मृतिसंशयेति । यथार्थानुभवो हि प्रमेत्युच्यते । स्मृतेस्त्वनुभवत्वमेव नास्तीति यथार्थाया अयथार्थाया वा द्विविधाया अपि स्मृतेर्न प्रमात्वम् । संशयस्य विपर्ययस्य चानुभवत्वेपि न यथार्थत्वमिति न प्रमात्वम् । अप्रमाज्ञानं च न मनोवृत्तिरूपम् । किं त्वविद्यावृत्तिरूपं साक्ष्याश्रयम् । एतदुक्तं भवति । ज्ञानं वृत्तिरूपम् । तच्च द्विविधम् । प्रमा चाप्रमा चेति । अन्तःकरणवृत्तिरूपं प्रमा । अविद्यावृत्तिरूपमप्रमा । तथा च ज्ञानस्याहंकारकार्यत्वं प्रमात्वेनैव । अविद्याकार्यत्वं चाप्रमात्वेनैवेति । अत्राविद्याकार्यत्वमित्यत्र कार्यत्वं साक्षाद्बोध्यम् । तेन प्रमास्थलेन्तःकरणद्वाराविद्याकार्यत्वेपि न क्षतिः । अत एवेति । प्रमारूपं ज्ञानमेवाहंकारकार्यमित्यङ्गीकारादेवेत्यर्थः । अयथार्थवक्त्रोच्चारिताद्वाक्याद्यच्छाब्दं भ्रमात्मकं ज्ञानं जायते तदविद्यारूपमेवेत्यङ्गीक्रियते प्राचीनैर्वेदान्तविद्भिः । यद्यपि तदानीं जाग्रद्दशास्थं विषयाकारसदृशाकारग्रहणयोग्यमन्तःकरणं तथापि न शक्तम् । प्रमात्वाभावेन प्रतिबन्धात् । एवं च भ्रमात्मकं सर्वमेव ज्ञानं नान्तःकरणस्य वृत्तिः । किं त्वविद्याया एव साक्षाद्वृत्तिरिति सिद्धम् । एवं संशयात्मकं स्मृत्यात्मकं च ज्ञानमपि प्रमात्वाभावाद् भ्रमात्मकज्ञानवदविद्यावृत्तिरूपमेवेति च सिद्धम् ।

अभ्युपगम इति । अयमाशयः । उक्तरीत्या प्रत्यक्षभ्रमे विषयसत्यत्वाभावान्मनसो विषयेण सह संबन्धाभावेन न मानसी वृत्तिः । तथानुमानादिभ्रमे विषयास्तित्वाभावान्न मनसो वृत्तिरिति वक्तुमशक्यम् । अनुमानादिषु परोक्षज्ञानेषु सदनुमानेपि विषयप्रदेशे मनसो गमनाभावेन मनोवृत्त्यर्थं विषयसंबन्धस्यानावश्यकत्वात् । तथा चानुमानप्रमायां स्वस्थानेऽवस्थितस्य मनसो वह्न्याकारा वृत्तिर्यया कारणसामग्र्या जायते सा कारणसामग्री अनुमानभ्रमेप्यविशिष्टेवेति सदनुमानवदनुमानभ्रमेपि मनसो वृत्तिः संभवति । किं तु प्रत्यक्षभ्रमे मनोवृत्तेरसंभवस्य प्रागुक्तत्वेन भ्रमसाजात्यादनुमानादिभ्रमेप्यविद्यावृत्तिरेवोचिता ।

---

१ ख च–यसाक्षि । २ ग छ ज झ–दहमस्वा । ३ ङ–यत्वात् । अहं । ४ ख ङ च छ ज–यत्वात् । ५ ख ङ–न त्वविद्या । ६ ख ङ च ज झ–वापराधेना । ; छ–वापराधेना ।

वावरोधेनान्तःकरणस्यासामर्थ्यात् ।

---

अन्यथा मनस्तद्वृत्त्योः कार्यकारणभावे ज्ञानत्वस्य कार्यतावच्छेदकत्वे प्रत्यक्ष-भ्रमस्य संग्रहापत्तेः । प्रमात्वस्य कार्यतावच्छेदकत्वेऽनुमानादिभ्रमस्यासंग्रह इति कार्यतावच्छेदकाननुगमो दुर्वारः स्यात् । तथा च प्रमात्वमेव तत्कार्यतावच्छेदकं वक्तव्यमित्यतोनुमानादिभ्रमे प्रमात्वाभावेनावरुद्धं मनो न स्वीयां वृत्तिं जनयितुं प्रभवतीति ।

ननु स्मृतिरविद्यावृत्तिरस्तु । परं तु सा कस्या अविद्यायाः । मूलाविद्यायास्तूलाविद्याया वा । उच्यते । मूलाविद्याया एवेयं वृत्तिः । तूलाविद्यायाश्च व्यवहार एव बाधो दृश्यते । नायं सर्प इति प्रत्यक्षेण तस्या अविद्यात्वं सिध्यति व्यवहारकाल एव । स्मरणं तूलाविद्यापरिणामश्चेत्तस्य बाधो वक्तव्यः । स तु नानुभूयत इति मूलाविद्याया एव वृत्तिः स्मृतिः । ननु यथा तूलाविद्या रज्जुस्वरूपमाश्रित्य सर्पाकारेण परिणता रज्ज्ववच्छिन्नां चितमाश्रित्य स्वयं स्फुरणरूपेण च परिणता तथेयं मूलाविद्या कमाश्रित्य स्मृतिरूपेण परिणमते । जीवं वाश्रयते साक्षिणं वा । नाद्यः । आत्माश्रयदोषापत्तेः । जीवो ह्यन्तःकरणविशिष्टा चित् । अन्तःकरणं चाविद्याकार्यमविद्याश्रितम् । तदेव च जीवस्वरूपान्तर्गतं सत्स्वाश्रयाया अविद्यायाः कथमाश्रयीभूतं भवेत् । न हि स्वस्कन्धं स्वयमारोहति कश्चित् । न द्वितीयः स्मरणप्रयोजकीभूतानां संस्काराणां साक्षिण्यभावात् । संस्कारा ह्यन्तःकरण एवोत्पद्यन्ते । यतस्तेऽनुभवजन्याः । अनुभवो नाम विषयाकारेन्तःकरणे चितः स्फुरणम् । तच्च स्वाधिकरणेऽन्तःकरण एव संस्कारमुत्पादयेन्नान्यत्रेति चेत्सत्यम् । स्मरणरूपाया अविद्यावृत्तेः साक्ष्येवाश्रयः । संस्काराणां च तत्राभावेपि न क्षतिः । स्मृतेर्निमित्तकारणीभूता हि ते न तूपादानकारणीभूताः । निमित्तकारणस्य च कार्येण सह कथमपि संबन्ध आवश्यको न त्वाश्रयतयैव । अस्ति चात्र संस्काराणां स्मृत्या सह संबन्धः स्वाश्रयोपहिताचिदाश्रितत्वरूपः । स्वं संस्कारः । तदाश्रयोऽन्तःकरणम् । तदुपहिता तत्संनिहिता केवला चित् । इयमेव साक्षिशब्दवाच्या । तदाश्रितत्वं स्मृतिरूपाया अविद्यावृत्तेरिति । ननु मिथ्याभूताच्छुक्तिरजतानुभवाज्जायमानाः संस्काराः क्वोत्पद्यन्ते । उच्यते । तत्र तूलाविद्यापरिणामभूतं यद्रजतं तादृशरजताकारायां तूलाविद्यायां तयैवाविद्यया यत्परिकल्पितं चित्स्फुरणं स मिथ्यानुभवः । चित्स्फुरणं वस्तुतस्तत्रेदमाकारेन्तःकरणे यदस्ति तदेवाविद्यया धृतरजताकारया स्वस्यां कल्प्यते । तज्जन्याश्च संस्कारा अविद्यायामुत्पन्ना अप्यन्तःकरणे पर्यवस्यन्ति । तत्रेदमाकारान्तःकरणस्य तादृशरजताकाराविद्याधिष्ठानत्वात् । तथा च प्रमाजन्या इव भ्रमजन्या अपि संस्कारा अन्तःकरणाश्रिताः स्वाश्रयोपहितचिदाश्रितत्वरूपसंबन्धेन साक्षिणि स्मरणाकारामविद्यावृत्तिं जनयितुं प्रभवन्त्येव । किं च यथार्थानुभवजन्या अन्तःकरणे समुत्पद्यमानाः संस्कारा अन्तःकरणोपादानकारणीभूतायां मूलाविद्यायामुत्पन्ना

एव सन्तोऽन्तःकरणं संदृश्यन्ते तथा भ्रमस्थलेऽपि तूलाविद्यायां समुत्पद्यमानाः संस्कारास्तूलाविद्योपादानकारणीभूतायां मूलाविद्यायामुत्पन्ना एव सन्तस्तूलाविद्यायां संदृश्यते। यथा लाक्षासंबन्धेनोत्पद्यमानः पटे रक्तिमा पटोपादानकारणेषु तन्तुषु समुत्पन्न एव पटे संदृश्यते। कथमन्यथा पटनाशोत्तरं तत्खण्डेषु विशीर्णेषु तन्तुषु च रक्तिमोपलभ्येत। तथा च भ्रमप्रमेति द्विविधानुभवजन्या अपि मूलाविद्यायां समुत्पद्यमानाः संस्कारास्तस्या एवाविद्यायास्तत्तद्विषयाकारां स्मरणरूपां वृत्तिं जनयितुं समर्था एव भवन्ति। अवश्यं चैतदेवं विज्ञेयम्। अन्यथा स्वप्नावस्थायां वृत्तिशून्येऽन्तःकरणे सति कथं तद्गताः संस्कारास्तदानीं हस्त्यश्वाकाराविद्यावृत्तावुपयुज्येरन्। तत्रत्यहस्त्यश्वादिज्ञानजन्याश्च संस्काराः कथं वृत्तिशून्येऽन्तःकरणे समुत्पद्येरन्। कथंतरां सुषुप्त्यवस्थायां लीनेऽन्तःकरणे कारणात्मतयावस्थिते तत्र तदानींतनसुखाद्यनुभवजन्याः संस्काराः समुत्पद्येरन्निति दिक्।

संशयात्मकं ज्ञानं चाविद्याया एव वृत्तिः। वस्तुतः स्थाणौ स्थाणुपुरुषात्मककोटिद्वयसंशये पुरुषस्यासत्त्वेन तदाकाराया मनोवृत्तेरसंभवात्। दूरत्वादिदोषोत्थापिता तूलाविद्या तु स्वकल्पितस्य पुरुषस्येव स्वाकल्पितस्यापि तत्रत्यस्य स्थाणोराकारं ग्रहीतुं प्रभवत्येव। बाधकाभावात्। शुक्तिरजतादिभ्रमात्मकं प्रत्यक्षं ज्ञानं तूलाविद्यायाः साक्षाद् वृत्तिरित्युक्तमेव। एवं भ्रमात्मकं परोक्षज्ञानमपि तूलाविद्यावृत्तिरेव। यथा धूलिकदम्बे धूमभ्रमाज्जायमानमवह्निमत्यपि वह्निमत्त्वज्ञानम्। गोसादृश्यभ्रमाज्जायमानमगवयेऽपि अयं गवय इति ज्ञानम्। कृपणशब्द उच्चारितेऽपि कृपाणशब्दभ्रमाज्जायमानमसिज्ञानम्। प्रातिभासिकरजतस्येवोक्तेष्वप्युदाहरणेषु तत्र तत्रासतो वह्नेर्गवयस्यासेश्च मनस आकारग्रहणासंभवात्। यद्यपि प्रमात्मके परोक्षज्ञाने विषयदेशमगत्वैव मनो विषयाकारं गृह्णातीति विषयस्य सत्त्वेनासत्त्वेन च विषयाकारग्रहणे विशेषो दुर्वचस्तथापि तत्र देशतः कालतो वा सुदूरमप्यवस्थितस्य विषयस्याकारं मनसा ग्राहयितुं प्रमाणमेव प्रभवति। प्रमाणं च यथार्थं व्याप्तिज्ञानं सादृश्यज्ञानं शब्दज्ञानं चेति। एवं च परोक्षभ्रमे तादृशप्रमाणाभावाच्च मनोवृत्तिः किं त्वविद्याया एवेति सिद्धम्।

अत्र केचिदाहुः। असुराधर्माज्ञानाविद्यादिशब्देषु विरोधार्थको नञ्। तथा च सुरविरोधिरूपं कंचिद् भावपदार्थमसुरशब्द आचष्टे न पुनः सुरत्वाभावमात्रेण मनुष्यपश्वादीन्बोधयति। एवमेवाधर्मादिशब्देषु। तथात्राप्यप्रमाशब्दो न प्रमात्वाभावमात्रेण प्रमाभिन्नानि सर्वाणि ज्ञानानि बोधयति किं तु प्रमाविरोधीनि कानिचिदेव। सिंहोयं माणवकः सूर्योयं ब्राह्मण इत्याद्याहार्यारोपस्थलीयज्ञानानि प्रमाभिन्नान्यपि नाप्रमाशब्देनोच्यन्ते। इमानि च ज्ञानानि न प्रमा। माणवके सिंहत्वस्य ब्राह्मणे सूर्यत्वस्य च वस्तुतोऽभावात्। नापि भ्रमः। सिंहत्वविरोधिभूतस्याधिष्ठानगतस्य माणवकत्वस्य ज्ञानात्।

नामादिषु ब्रह्माध्यासस्त्विच्छाधीनतया भ्रमप्रमाविलक्षणा मनोवृत्ति-रेव कामादिवत् । तदुक्तम् । अत एव चोदनाजन्यत्वान्मानसी क्रियैवैषा न ज्ञानमिति । एतेनैव तर्कस्यापि मनोवृत्तित्वं व्याख्यातम् । व्याप्यारोपेण व्याप-

तया च भ्रमप्रमाविलक्षणमेतज्ज्ञानम् । नाम्नि ब्रह्मारोपस्थलेप्येवम् । तर्कोपीदृश एव । व्याप्यारोपेण व्यापकारोपरूपो हि सः । यथा धूमेन वह्नेरनुमाने यदि वह्निर्न स्यात्तर्हि धूमोपि न स्यादिति । अत्र वह्निज्ञानस्यानावृतत्वान्न भ्रमः । नापि प्रमा । वह्न्यभावस्य तत्रासत्त्वात् । ईदृशं च भ्रमप्रमाविलक्षणं ज्ञानं प्रमाज्ञानवन्मनस एव वृत्तिः न त्वविद्यायाः साक्षात् । प्रातिभासिकरजतादिज्ञानस्थल इन्द्रियदोषादिव-दत्राविद्याविशेषोत्थापकाभावात् । यथा मृदो घटं प्रति शरावं प्रति च कारणत्वं स्वातन्त्र्येण तथा मनसः प्रमाज्ञानं प्रति भ्रमप्रमाविलक्षणमुक्तज्ञानं प्रति च स्वात-न्त्र्येण कार्यकारणभावद्वयम् । स्मरणात्मकं ज्ञानं तु न प्रमाविरोधि किं त्वाहार्या-रोपवद्भ्रमप्रमाविलक्षणमेवेति मनोवृत्तिरेव स्मृतिः स्वीकर्तुं शक्येति ।

तन्न मनोरमम् । अप्रमाशब्दे नञो विरोधार्थकत्वे प्रमाणाभावात् । किं च स्मृतिर्हि संस्कारजन्या । संस्कारश्च न मनसा वृत्तिं माहयितुं प्रभवति । प्रमाणानामेव हि तादृशं सामर्थ्यम् । संस्कारस्य तादृशसा-मर्थ्याङ्गीकारे अयथार्थस्मृतिस्थलेपि मनसो वृत्तिः कल्पनीया स्यात् । न चेष्टापत्तिः । प्रत्यक्षभ्रमादावपि दोषाणां तादृशसामर्थ्यकल्पनाप्रसक्तेः । तथा च स्मृतेः प्रमाविरोधित्वाभावेपि प्रमाणजन्यत्वाभावेन प्रमात्वा-भावात्तत्र च मनोवृत्तिग्राहकस्य प्रमाणस्याभावादविद्यावृत्तिरेव स्मृतिः । नन्वे-वमाहार्यारोपस्थलीयज्ञानस्यापि प्रमात्वाभावान्मनोवृत्तित्वं न स्यादिति चेन्न । आहार्यारोपे ज्ञानत्वस्यैवाभावात् । तदेव हि ज्ञानं यन्न विधातुं प्रतिषेद्धुं वा शक्यते । इन्द्रियसंनिकर्षादिसाधनसामग्र्या असत्त्वे ज्ञानस्य विधानेप्यसंभवः । सत्यां च सामग्र्यां निषिद्धमपि दुर्वारमेव भवति । आहार्यारोपस्तु कर्तुमकर्तुम-न्यथा वा कर्तुं शक्य इति मानसी क्रियैव सा । सा च न ज्ञानरूपा मनोवृत्तिः । किं तु संकल्पविशेषात्मिका कामसुखादिवदतिरिक्तैव । स्मृतिस्तु असति संस्कारोद्बोधे शतशो विधीयमानापि न कर्तुं शक्या । संस्कारोद्बोधे तु सति शतशो निषिद्धाप्यवर्जनीयैवेति ज्ञानरूपैव सा । एवं च प्रमात्वाभावेन मनोवृत्तिग्राहकप्रमाणाभावादविद्यावृत्तिरेवेति सिद्धम् ।

तदेतत्सकलमभिप्रेत्याह–नामादिष्विति । नाम ब्रह्मेत्युपास्ते (छा. ७।१।५) इति श्रुतौ ब्रह्मभावनया नाम्न उपासना प्रतिपादिता । तत्र माणवके सिंहाध्यास-वन्नाम्नि ब्रह्माध्यासो न भ्रमात्मकं ज्ञानं नापि प्रमात्मकं ज्ञानम् । किं तु कामा-दिवत्स्वतन्त्रा मनोवृत्तिरिति भावः । तदुक्तमिति । शारीरकभाष्ये श्रीमच्छंकर-पादाकैरियम् ( ब्र. सू. भा. १।१।४ ) । चोदनाजन्यत्वादिति । विध्यधीनेच्छा-जन्यप्रयत्नसाध्यत्वादित्यर्थः । व्याप्यारोपेणेति । यदि वह्निर्न स्यात्तर्हि धूमोपि

१ च–वमनोजन्यत्वा । २ ग च छ ज–येव सा न । ३ झ–येषा न । छ ज झ–एतेन तर्क ।

कप्रसञ्जनात्मकस्य तर्कस्येच्छाधीनतया भ्रमप्रमाविलक्षणत्वादिति । अत एव मननिदिध्यासनसहिते श्रवणाख्ये वेदान्तवाक्यविचारे श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिविधिरुपपद्यते ।

तस्य[3] चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात् । दृग्दृश्यान्वयव्यतिरेकः ।

---

न स्यादिति तर्काकारः । अत्र धूमाभावव्याप्यस्य वह्न्यभावस्य पर्वत आरोपः । वस्तुतो वह्न्यभावस्य तत्रासत्त्वात् । वह्न्यभावस्य चारोपेण तद्व्यापकस्य धूमाभावस्य धूमसत्त्वेप्यारोपेणास्तित्वमापाद्यते । इयं च विचारात्मिका स्वतन्त्रा मनोवृत्तिः । न तु विषयाकारेणान्तःकरणपरिणामरूपं ज्ञानम् । अत एवेति । ज्ञानविलक्षणः स्वतन्त्रमनोवृत्तिविशेषरूपस्तर्क इत्यङ्गीकारादेवेत्यर्थः । ज्ञानं हि न विधातुं नापि प्रतिषेद्धुं युज्यते । इच्छाधीनत्वाभावादवर्जनीयत्वाच्च । तर्कस्तु ज्ञानविलक्षणत्वाद्विधातुं शक्यत एव । श्रोतव्य इति श्रुतौ च तर्कविशेष एव विधीयते । श्रुतः शब्द इत्यादि प्रत्ययसिद्धं श्रोत्रेन्द्रियजन्यं यच्छ्रावणप्रत्यक्षं तदत्र न श्रवणम् । किं तु तर्करूपम् । मननं निदिध्यासनमपि च तर्करूपमेव । तत्रात्मैक्यसंभावनोपपादकस्तर्कः श्रवणम् । अनेनासंभावना विपरीतभावना च निराक्रियते । आत्मैक्यनिश्चयोपपादकस्तर्को मननम् । अनेन संशयो निराक्रियते । आत्मैक्यप्रत्यक्षोपपादकस्तर्को निदिध्यासनम् । अनेनात्मैक्यसाक्षात्कारो निश्चीयते ।

तस्य चतुर्विधेति । दृक्च दृश्यं च दृग्दृश्ये । अन्वयश्च व्यतिरेकश्चान्वयव्यतिरेकौ । दृग्दृश्ययोरन्वयव्यतिरेकौ यस्मिन्निति विग्रहः । एवमेव साक्षिसाक्ष्येत्यादावपि । अयं भावः । अन्वयव्यतिरेकौ हि तर्के बहूपकारकौ । कार्यकारणनिश्चयौ हि ताभ्यां भवति । व्याप्तिनिश्चयश्चानुमानोपजीव्यस्ताभ्यामेव । तावेव च साहित्यशास्त्रे शब्दार्थालंकारयोर्विभागं साधयत इति काव्यप्रकाशे दशमोल्लासान्त उक्तम् । ऐक्यं भेदश्च ताभ्यामेव ज्ञायते । तथा हि । अन्वयः संबन्धः । व्यतिरेकोऽभावः । संबन्धश्च द्वयोर्भेदेन भवति । तादात्म्येन तु स्वस्यैवावस्थाविशेषविशिष्टस्य । संबन्धश्च नियतश्चेत्तर्कोपजीव्यः । अनियतस्त्वकिंचित्करः । यथा राजगृहे गोः सत्त्वेऽश्वस्यापि सत्त्वम् । दरिद्रस्य गृहे गोरभावेऽश्वस्याप्यभावः । परंतु मध्यावस्थगृहस्थस्य गृहे गोरभावेप्यश्वस्याश्वस्याभावेपि गोश्च दर्शनेन गवाश्वयोः संबन्धो न नियत इति न गवाश्वयोः कार्यकारणभावादिकं किंचिदपि निश्चीयते । नियतस्तु संबन्धः कार्यकारी । यथाग्निसत्त्वे धूमसत्त्वमग्न्यभावे धूमाभावः । यथा वा दण्डसत्त्वे घटसत्त्वं दण्डाभावे घटाभावः । अत्र धूमोत्पत्तिकालेऽग्निधूमयोः संबन्धो नियतः । घटोत्पत्तिकाले च दण्डघटयोः । संबन्धनियमश्चायमग्निसत्त्व एव धूमसत्त्वमित्येवं कारणांशे । न त्वग्निसत्त्वे धूमसत्त्वमस्त्येवेत्येवं कार्यांशे । अयोगोलके व्यभिचारात् । तथा

---

१ ख ङ च छ ज झ—स्येच्छा । २ ग—धिरप । ३ च—तच्छ्रवणस्य चतु ।

व्यतिरेकेप्यग्न्यभावे धूमाभावोऽस्त्येवेत्येवं कार्याभावांशे नियमो न त्वग्न्यभाव एव धूमाभाव इत्येवं कारणाभावांशे। अयोगोलक एव व्यभिचारात्। कारणांशे संबद्धैवकारबोधितेन नियमेन नियमितं तु कार्यमेव भवति। धूमोऽमुकस्थल एवास्तीति। यत एवकारस्ततोन्यत्र नियम इति न्यायात्। तथा च यत्सत्त्वे यत्सत्त्वमित्यन्वयस्य यत्सत्त्व एव यत्सत्त्वमिति तात्पर्यम्। तथा यदभावे यदभाव इति व्यतिरेकस्य यदभावे यदभाव एवेत्यत्र तात्पर्यं बोध्यम्। आभ्यां चान्वयव्यतिरेकाभ्यां धूमाग्न्योः कार्यकारणभावो निश्चीयते। कार्यं हि कारणमन्तरेण नात्मानं लभत इत्यर्थस्य बालैरपि सुज्ञेयत्वात्।

एवं निश्चिते कार्यकारणभावे तयोर्ज्ञाप्यज्ञापकभावोपि सुग्रहो भवति। तत्र च धूमसत्त्वेऽग्निसत्त्वमित्यन्वयः। अत्र च धूमसत्त्वेऽग्निसत्त्वमस्त्येवेत्येवं ज्ञाप्यांशेवधारणम्। धूमाभावेऽग्न्यभाव इति व्यतिरेकः। तत्र च धूमाभाव एवाग्न्यभाव इत्येवं ज्ञापकाभावांशेऽवधारणम्। उभयत्राप्यवधारणविपर्ययेऽयोगोलके व्यभिचारः। आभ्यां चान्वयव्यतिरेकाभ्यामग्निधूमयोर्ज्ञाप्यज्ञापकभावो निश्चीयते। ज्ञापकं हि ज्ञाप्यमन्तरेण नात्मानं लभत इत्यर्थस्य पूर्ववदेव बालैरपि सुज्ञेयत्वात्। एवमेवान्वयव्यतिरेकमूलकः शब्दार्थालंकारविभागो बोध्यः। तत्रापि यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्येवमुक्तरूपाभ्यामन्वयव्यतिरेकाभ्यामयं शब्दालंकारोयमर्थालंकार इति निश्चीयते।

अथावस्थाविशेषेणान्वयव्यतिरेकौ वस्त्वैक्यसाधकावुच्येते। तत्र कल्पद्वयं क्वचिद् द्वयोरन्योन्यतादात्म्येन प्रतीतिः। क्वचित्तु द्वयोर्मध्ये कस्यचिदेकस्यैवान्यतादात्म्येन प्रतीतिर्नापरस्य। तादात्म्येन प्रतीतिरित्यस्य भेदेन न प्रतीतिरित्यर्थः। आद्योदाहरणं जातिव्यक्ती। न घटत्वजातिर्घटव्यक्तेः सकाशाद्भेदेन प्रदर्शयितुं शक्यते। नापि घटव्यक्तिर्घटत्वजातेः सकाशाद्भेदेन प्रदर्शयितुं शक्यते। अत्र जातिव्यक्त्योरैक्यमेव न तु तयोः पृथगस्तित्वम्। द्वितीयोदाहरणं सुवर्णाङ्गुलीयके। अत्राङ्गुलीयकं न सुवर्णाद्भेदेन प्रदर्शयितुं शक्यते। सुवर्णं त्वङ्गुलीयकावस्थातो भेदेन प्रदर्शयितुं शक्यत एव। तथा चात्र नाङ्गुलीयकस्य सुवर्णाद्भेदेन पृथगस्तित्वम्। सुवर्णस्य त्वस्त्येव पृथगस्तित्वम्। तेनैव चास्तित्वेनाङ्गुलीयकेऽस्तित्वप्रतीतिः। अत्र च सुवर्णस्याङ्गुलीयकेन्वयः। अङ्गुलीयकस्य च सुवर्णे व्यतिरेकः। मृद्घटादिविषयेप्येवमेव घटादीनां पृथगस्तित्वं निवारणीयम्। एतादृशस्तर्कश्च मानसक्रियारूप इच्छाधीनत्वात्कर्तुमकर्तुं वा शक्य इत्यतः स एव श्रोतव्य इति विधीयते न तु श्रावणज्ञानमात्रम्। प्रागुक्तरीत्या ज्ञानस्याविधेयत्वात्। तथा चात्मा वारे द्रष्टव्यः (बृ. २।४।५) इत्यादिश्रुतेरयमर्थः। आत्मा वा इदमेक एवाग्र आसीत् (ऐ०१।१) इति श्रुतौ यदात्मैक्यमुक्तं तस्यैवात्र द्रष्टव्य इत्यनेन साक्षात्कार उच्यते। आत्मशब्दप्रत्यभिज्ञानात्। साक्षात्कारश्च न विधातुं शक्यते। इन्द्रियप्रकाशादिसाधनसंपत्तौ सत्यामविहितस्यापि तस्यावर्जनीयत्वात्। असत्यां च साधनसंपत्तौ

विहितस्यापि तस्य दुर्घटत्वात् । अतः साक्षात्कारविधिरत्र तत्साधने पर्यवस्यति । तदुक्तम्–

विधेयत्वेन निर्दिष्टे विधिः स्यात्कुण्ठितो यदि ।
प्रयोक्तृतात्पर्यवशात्साधने पर्यवस्यति ॥

यथा घटं पश्येदित्युक्ते चक्षुःसंनिकर्षे विधेः पर्यवसानं तद्वत् । नन्वेवमपि विधेरत्रानुपपत्तिरेव । आत्मैक्यसाक्षात्कारस्य साधनाभावात् । यदि साधनं किंचित्स्यात्तर्हि साध्यसाधनभेदस्य विद्यमानत्वेनात्मैक्यमेव न साक्षात्कृतं भवति । स एव चात्मसाक्षात्कार उच्यते यत्र साक्षात्कर्ता साक्षात्कारविषयः साक्षात्कारस्तत्साधनं चेति कोपि भेदो न प्रतीयत इति चेत्सत्यम् । प्रतिबन्धनिवारकेऽत्र साधनत्वोपचारः । यथा निघर्षणेनादर्शः प्रतिबिम्बं गृह्णातीत्यत्र निघर्षणस्य साधनत्वम् । आदर्शो हि स्वभावत एव प्रतिबिम्बं गृह्णाति । तत्प्रतिबन्धकमलदूरीकरणेन निघर्षणमुपयुज्यते तद्वत् । तथा चात्मा द्रष्टव्य इत्यस्यात्मेतरत्वेन ज्ञाने जायमाना प्रवृत्तिर्दूरीकरणीयेति तात्पर्यम् । विषयेष्वासक्तिरेव चात्मैक्यसाक्षात्कारप्रतिबन्धिका । एतदेवोक्तं शारीरके समन्वयाधिकरणशेषे श्रीमदाचार्यशंकरपादैः–किमर्थानि तर्हि आत्मा वारे द्रष्टव्य इत्यादीनि विधिच्छायानि वाक्यानि । स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूम इति । यद्यप्येवं विषयदोषदर्शनेन विषयासक्तिनिवृत्त्यौदासीन्यं संपादितं न तावतात्मैक्यसाक्षात्कारो भवति । तर्हि तदर्थं किं कर्तव्यमित्याह श्रुतिः–श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । अत्र श्रवणं मननं निदिध्यासनं चेति त्रयं मानसक्रियारूपत्वाद्विधातुमर्हति । ननु श्रवणस्य कथं विधिः । तद्धि श्रावणप्रत्यक्षरूपं ज्ञानमेव न तु मानसी क्रियेति चेदत्र केचित् । श्रवणे विधिरनुपपन्नः संस्तत्साधनीभूतगुरूपसदनादौ स पर्यवस्यतीति । वस्तुतस्तु श्रोतव्य इत्यस्य न श्रावणप्रत्यक्षमात्रे तात्पर्यम् । तस्य श्रवणेन्द्रियमात्रसाध्यस्य पशुपक्ष्यादिसाधारणत्वात् । किं तु तदर्थभावनायामपि श्रुतेस्तात्पर्यम् । अर्थभावना च मानसी क्रिया न ज्ञानम् । सा च तर्कविशेषरूपेति प्रागुक्तमेव । मननं च साधकबाधकयुक्त्यनुसंधानपूर्वकं चिन्तनम् । तदेवानवरतं निदिध्यासनमिति । एतच्च श्रवणादित्रयं तर्कविशेषरूपमिति प्रागुक्तमेव । एतदुक्तं भवति । आत्मा द्रष्टव्यः (बृ० २।४।५) आत्मा वा इदमेक एवाग्र आसीत् (ऐ० १) इत्यादिवाक्यार्थे गुर्वादिभिः कथ्यमाने सत्यात्मैक्यं भावनीयम् ।

ननु कथमात्मैक्यं संभवति । तस्य कदाप्यननुभवात् । दूरे तस्य भावना । प्रत्युतानुभवानुसारेणात्मैक्यविरुद्ध आत्मभेद एव संभावनामर्हति । तथा च कथमात्मैक्यभावनेति चेत्–उक्तासंभावनाविपरीतभावनानिवृत्त्यर्थं श्रोतव्य इति करुणयाह श्रुतिः । तदुत्तरं संशयनिवृत्त्यर्थमात्मसाक्षात्कारनिश्चयार्थं च मन्तव्यो

साक्षिसाक्ष्यान्वयव्यतिरेकः । आगमापायितदवध्यन्वयव्यतिरेकः । दुःखिपरम-

---

निदिध्यासितव्य इत्याह श्रुतिः।मननं चात्मैक्यनिश्चयोपपादकस्तर्कविशेषः। निदि-ध्यासनं चात्मैक्यसाक्षात्कारोपपादकस्तर्कविशेषः। तथा हि–तर्को हि दृग्दृश्या-न्वयव्यतिरेकादिरूपः। यथा घटे मृदन्वयो नियतो मृदि तु न घटान्वयो नियतः। मृत्तिका हि न कदापि घटं व्यभिचरति । घटस्तु मृदं व्यभिचरत्येव । अतो मृदन्वयिनी घटस्तु व्यतिरेकी। आभ्यामन्वयव्यतिरेकाभ्यां यथा मृदपेक्षया घटस्य न पृथगस्तित्वं तथा दृगपेक्षया दृश्यस्य न पृथगस्तित्वम् । दृश्ये हि दृश्यत्वावस्थापन्ने दृक्संबन्धो नियतः । दृशौ तु न दृश्यसंबन्धो नियतः। यतो दृशिः स्वरूपेणैव दृग्रूपा। दृश्यास्तु घटपटादयः स्वरूपेण पृथिव्यादिविशेष-रूपाः पार्थिवा घटपटादिरूपा एव न तु स्वरूपेण दृश्याः। दृक्संबन्धात्तु दृश्यता-मापद्यन्ते। तथा च दृश्यत्वावस्थापन्नानां तेषां न दृगपेक्षया पृथगस्तित्वम्। दृश्यत्वं मिथ्येति यावत्। ननु दृश्यत्वस्य घटादिगतस्य मिथ्यात्वेपि स्वरूपेण घटादेः सत्यत्वात्कथमात्मैक्यसिद्धिरिति चेत् तावताप्यात्मैक्यसाक्षात्कार-स्याक्षतेः। घटादेः सत्यत्वेपि तत्र दृश्यत्वस्य मिथ्यात्वेनैक्यसाक्षात्कारविरुद्धस्य द्वैतप्रतिभासस्याभावात् । घटादयो ह्यात्मैक्यविरोधिनो न त्वात्मैक्यसाक्षा-त्कारविरोधिनः । तादृशसाक्षात्कारविरोधि तु तेषां दृश्यत्वं साक्ष्यत्वं वा । दृश्यत्वेन साक्ष्यत्वेन च द्वितीयं वस्तु नास्ति चेत्कीदृश आत्मैक्यसाक्षात्कारे प्रतिबन्धो भवेत्। वस्तुतस्तु घटादेः स्वरूपेणापि मिथ्यात्वमागमापायितदवध्य-न्वयव्यतिरेकानुगततर्केणोपपद्यत एव । दृश्यत्ववत्तुल्यन्यायाद् द्रष्टृद्रष्टृत्वमपि मिथ्यैव।

एवं साक्षिणोन्वयिनः सकाशात्साक्ष्यस्य व्यतिरेकिणः साक्ष्यत्वावस्थाप-न्नस्य न पृथगस्तित्वम्। साक्ष्यत्वं मिथ्येति यावत्।साक्षी तु सत्यः।स च न द्रष्टा। किं तु दृग्रूपः। अत एव साक्ष्ये तस्य नियतोन्वयः । एवमागमापायिन्युत्पत्ति-विनाशशालिनि घटादौ तदवधिभूताया मृदोन्वयो नियतः। मृदि तु घटान्वयो व्यभिचरित इति घटस्य तत्र व्यतिरेकः।

तथा चागमापायिनो घटस्य न तदवधिभूतमृदस्तित्वापेक्षया पृथगस्ति-त्वम्। तथा च योयमागमापायी मृदोवस्थाविशेषो घटसंज्ञकः स मिथ्येति सिध्यति । अवस्थाविशेषस्य मिथ्यात्वे तत्सहभाविनो घट इति नाम्नोपि मिथ्यात्वं सिध्यतीति नामरूपात्मकस्याखिलस्य जगतो मिथ्यात्वे आत्मैक्यसि-द्धिर्निर्बाधैव। एवं तावदखिलस्याचेतनस्यात्मभिन्नस्य जगतो मिथ्यात्वमात्मै-क्यस्य सत्यत्वं च तर्केण साधितम्।

नन्वेकोप्यात्मा यदि स्वरूपेणावस्थाविशेषवत्त्वेन च सत्यः स्यात्तर्हि दुःखि-त्वावस्थाविशिष्टस्यापि तस्य सत्यत्वमेवेति कथं मोक्षे दुःखनिवृत्तिः स्यात्। तथा च ज्ञातेप्यात्मसाक्षात्कारे मोक्षो दुर्घट एवेति चेन्न। आत्मनः स्वरूपेणैव सत्यत्वमवस्थाविशेषवत्त्वेन तु मिथ्यात्वमेव। एतच्च दुःखिपरमप्रेमास्पदान्वय-

प्रेमास्पदान्वयव्यतिरेक इति । अनुवृत्तव्यावृत्तान्वयव्यतिरेकोऽपि पञ्चमः ।

---

व्यतिरेकसहकृततर्केण साध्यते । यदा यदा चात्मनो दुःखित्वावस्था तदा स नियमेन परमप्रेमास्पद आत्मास्त्येव । तदनुसंधाने च दुःखस्य दुःखत्वमेव न स्यात् । एवं परमप्रेमास्पदस्यात्मस्वरूपस्य सर्वावस्थासु नियमेनान्वयः । दुःखित्वावस्था त्वात्मस्वरूपं व्यभिचरति । सर्वदा तस्या अवस्थाया अभावात् । एतदुक्तं भवति । दुःखी ह्यात्मैव । न ह्यात्मभिन्नस्य कस्यापि दुःखं संभवति । आत्मा च परमप्रेमास्पद एव । तदुक्तं पञ्चदश्याम्—

तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि ।
अतस्तत्परमं तेन परमानन्दतात्मनः ॥ ( पं. द. १।९ ) इति ।

यो हि यदा स्वं दुःखित्वेनानुसंधत्ते तदा तस्य स्वस्मिन्परमप्रेमास्पदत्वेनानुसंधानमस्त्येव । मूर्छायां चात्मनः परमप्रेमास्पदत्वेनानुसंधानाभावे दुःखित्वेनाप्यनुसंधानं तदा नास्त्येव । आत्मनश्च परमप्रेमास्पदत्वं स्वरूपेणैव न तु धर्मान्तरेण केनचित् । तथा च परमप्रेमास्पदमात्मनः स्वरूपमेवेति दुःखित्वावस्थायामपि तस्यान्वयात्तस्य सत्यत्वं दुःखित्वावस्थायाश्च मिथ्यात्वं सिद्धम् । एवं सुखित्वावस्थाया अपि मिथ्यात्वमेव । किं तु सावस्था मुमुक्षोः स्वरूपेण न त्याज्या भवति किं तु दुःखानुषङ्गात् । अतस्तस्या मिथ्यात्वेऽपि न तदत्र निर्दिष्टम् । यन्मुख्यतस्त्याज्यं दुःखं तस्य मिथ्यात्वात्तत्त्यागः सुकर इति ह्यत्रावश्यं प्रदर्शनीयं भवति ।

उक्तानां चतुर्विधानां तर्काणामन्येषां चैवंविधानां सर्वेषां तर्काणां मूलभूतः सर्वोपजीव्यस्तर्कोऽनुवृत्तव्यावृत्तान्वयव्यतिरेकरूपः । दृश्येऽनुवृत्ता दृक् । दृशि तु दृश्यं व्यावृत्तम् । साक्षी साक्ष्येऽनुवर्तते । साक्ष्यं तु साक्षिणो व्यावर्तते । आगमापायिनि तदवधेरनुवृत्तिः । तदवधौ तु आगमापायिनो व्यावृत्तिः । दुःखिनि परमप्रेमास्पदस्य संबन्धः । परमप्रेमास्पदस्वरूपे दुःखिनोऽभाव इति ।

अथापरा योजना । दृग्दृश्ययोः क्रमेणान्वयव्यतिरेकयोः संबन्धः । दृशोऽन्वये दृश्यस्य व्यतिरेके । अन्वयः संबन्धः । व्यतिरेकोऽभावः । एवमेव साक्षिसाक्ष्यादिषु क्रमेणान्वयो बोध्यः । अनेन च तर्कचतुष्टयेन मूलकारणस्य भावरूपत्वं चिद्रूपत्वं नित्यत्वमानन्दरूपत्वं च साध्यते । दृक् सर्वत्र संबन्धसत्त्वाद्भावरूपा । दृश्यं चादावन्ते चाभावग्रस्तत्वान्मध्येऽप्यभावरूपमेव । एतेन शून्यवादो निरस्तः । तथा हि । कारणमेव विशेषावस्थामापद्यमानं कार्यं भवति । तेषु तेषु चावस्थाविशेषेषु स्वेन रूपेण संबध्यमानं कारणम् । तथा च यथा प्रातिभासिकं रजतं शुक्तेरेवाविद्याकृतोऽवस्थाविशेषस्तथा दृश्याः पदार्था अविद्यासंपादिता दृश एवावस्थाविशेषाः । अतो दृग्रूपस्य भावस्यैव कारणत्वं सिध्यतीत्यर्थादेव शून्य-

---

१ ग—इति गमनन्वयाध्यायाविरोधाध्यायसाधनाध्यायफलाध्यायाः । अनु । २ ग—रेकः पञ्च ।

एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणमीमांसाप्रतिपादितानामुपलक्षण-मित्यभियुक्ताः। विस्तरस्तु वेदान्तकल्पलतिकायामनुसंधेयः।

वादो निरस्तो भवति। एवं साक्ष्यं सर्वं साक्षिण एवावस्थाविशेष इति मूलकारणस्य साक्षिरूपत्वं सिद्धं भवति। साक्षी च चिन्मात्रस्वरूपः। तेन च प्रधान-परमाण्वादिजडकारणवादा निरस्ता भवन्ति। तथा ये चानित्या अर्थास्ते नित्यस्यैवावस्थाविशेषा इति मूलकारणस्य नित्यत्वसिद्धौ क्षणिकवादो निरस्तो भवति। एवं दुःखिनोऽर्थाः परमप्रेमास्पदस्यैवावस्थाविशेषा इति मूलकारणस्यानन्दमयत्वं सिद्धं भवति। तेन चात्मनः स्वाभाविके एव सुखदुःखे इति स्वभाववादो निरस्तो भवतीति।

एतच्चेति। लक्षणशब्दोऽध्यायवाची। चतुर्लक्षणी चतुरध्यायी। चतुर्विधानुक्तांस्तर्कानन्यांश्च तन्मूलकानवलम्ब्य श्रीमद्बादरायणाचार्यैरध्यायचतुष्टयात्मकं ब्रह्ममीमांसासूत्रं विरचितम्। तत्र दृग्दृश्यान्वयव्यतिरेकरूपं प्रथमं तर्कं प्राधान्येनानुसृत्य ब्रह्मसूत्रकारैः समन्वयाख्ये प्रथमेऽध्याये श्रुतीनामद्वैते ब्रह्मणि समन्वयः प्रदर्शितः। प्रधानस्य दृश्यत्वाद् दृश्यस्य चोक्ततर्केण मिथ्यात्वनिश्चयान्न प्रधानस्य जगन्मूलकारणत्वप्रतिपादने श्रुतीनां तात्पर्यमवसीयत इति हीक्षतेर्नाशब्दमित्यादिसूत्रैरभिधीयते। एवमविरोधाख्ये द्वितीयेऽध्याये द्वितीयं तर्कं प्राधान्येनानुसृत्य द्वैतदर्शनानि निराक्रियन्ते। भेदमूलकानि ह्यखिलानि द्वैतदर्शनानि। भेदश्च न स्वप्रकाशः किं तु परप्रकाशः। अतः स भेदःससाक्षिक एव वक्तव्यः। असाक्षिकत्वे निष्प्रमाणतैव स्यात्। ससाक्षिकत्वे च तस्य साक्ष्यत्वावश्यंभावात्साक्ष्यस्य चोक्ततर्केण मिथ्यात्वाद्भेद एव न प्रमाणपदवीमधिरोहति। तथा तृतीये साधनाध्याये तृतीयं तर्कं प्राधान्येनानुसृत्य मोक्षसाधनविचारः क्रियते। साधनानि चान्तरङ्गाणि बहिरङ्गाणि च सर्वाण्यपि वैराग्ये सत्येवोपयुज्यन्ते। वैराग्यं च विषयदोषदर्शनमूलकं चेत्स्थिरपदं भवति। दोषेषु च मिथ्यात्वं मुख्यो दोषः। आगमापायिनामखिलानां शब्दस्पर्शादिविषयाणां च तृतीयेन तर्केण मिथ्यात्वेऽवगते तेष्वासक्तिः शिथिलैवेति तस्यामवस्थायां श्रवणादीनि साधनान्युपयुक्तानि भवन्ति। तथा चतुर्थे फलाध्याये चतुर्थं तर्कं प्राधान्येनानुसृत्य मोक्षावस्थायां सच्चिदानन्दात्मस्वरूपसंपत्तिः फलत्वेन प्रतिपाद्यते। चतुर्थेन तर्केण दुःखित्वावस्थाया मिथ्यात्वेऽवगते परमप्रेमास्पदात्मस्वरूपसंपत्तिरुपपन्ना भवति इति बोध्यम्।

एवं क्रमप्राप्तं सुषुप्तिलक्षणं तत्र मिथः संसृष्टत्वेनाप्रतीयमानमविद्याया वृत्तित्रयं चोपपाद्य तत्प्रसङ्गेन प्रमाज्ञानमन्तःकरणस्य वृत्तिस्तद्भिन्नं ज्ञानमविद्याया वृत्तिरित्युपपाद्येदानीं सुषुप्त्यवस्थाभिमानिजीवात्मस्वरूपं प्रदर्शयति—

---

१ छ—दान्तवाक्यानुकू।

तदेवं सुषुप्त्यवस्थायामस्त्यानन्दभोगः । तद्भोक्ता च सुषुप्त्यवस्थाभिमानी प्राज्ञ इत्युच्यते । प्रकर्षेणाज्ञत्वात् । तदानीं विशेषावच्छेदाभावेन प्रकृष्टज्ञत्वाद्वा । तदा चान्तःकरणस्य लयेपि तत्संस्कारेणावच्छेदान्न जीवाभावप्रसङ्गः । न वा सर्वज्ञत्वापत्तिः ।

तदेवमिति । आनन्दभोगः सुखदुःखाकारवृत्तिः । तद्भोक्ता तदाश्रयः । प्रकर्षेणाज्ञत्वादिति । जाग्रत्स्वप्नसुषुप्तिक्रमेणाज्ञानाधिक्यं प्रसिद्धमेव लोके । पक्षान्तरमाह-तदानीमिति । प्रज्ञ एव प्राज्ञः । स्वार्थेण प्रत्ययः । रज्ज्वां रज्जुस्वरूपाज्ञानपूर्वकसर्पाभासापेक्षया केवलं रज्जुस्वरूपाज्ञानमेव वरम् । स्वेदकम्पाद्यजननात् । यतो यस्य केवलं रज्जुस्वरूपाज्ञानं तस्य 'अत्र रज्जुरस्ति' इति केनचित्कथिते सद्य एव रज्जुस्वरूपज्ञानं सौकर्येण भवति । यस्य तु पुनः सर्पभ्रमस्तस्य रज्जुस्वरूपज्ञानार्थं भ्रमोपि दूरीकरणीयो भवति । सर्परूपो योऽविद्यापरिणामविशेषस्तदवच्छिन्नत्वाद्रज्जुस्वरूपस्य । सवेषपुरुषापेक्षया दिगम्बरपुरुषस्य सवेषधारणं शैघ्र्येण भवेत् । तथा च सुप्तावस्थः प्रत्यगात्मा आत्मस्वरूपज्ञाने जाग्रज्जीवापेक्षया संनिकृष्ट इति भावः । किं च सुषुप्तौ यद्यपि त्रिपुटी वर्तते साक्षिभास्यत्वात्सुखस्य तथापि त्रिपुटीत्वेन नास्ति साक्षिसुखवृत्तीनां संबन्धस्य विद्यमानस्यापि तदानीमकिंचित्करत्वात् । तथा चैतादृशात्रिपुट्या उच्छेदः सुकरः । यथा कन्यायाः सत्त्वे मूर्खोपि जामाता दुरुच्छेद्यो भवति । स एव निवृत्तसंबन्धश्चेत्सुखोच्छेद्यो भवति तद्वत् । ननु जीवस्य जीवत्वप्रापक उपाधिरविद्यान्तःकरणं वेति पक्षद्वयं प्रागभिहितम् । तत्राविद्योपाधिपक्षे सुषुप्त्यवस्थायामप्यविद्याया अविलयाद्यावन्मोक्षं जीवभावोपपत्तिः । अन्तःकरणोपाधिपक्षे तु सुषुप्तावन्तःकरणस्य विलयाज्जीवत्वं नोपपद्यते । प्रत्युत प्रतिबिम्बवादे यथा दर्पणाद्युपाधिनाशे सति प्रतिबिम्बभावादपगतं मुखादिकं केवलं बिम्बरूपमेव भवति तथा सुषुप्तावन्तःकरणस्य विलये प्रतिबिम्बभावादपगतं चैतन्यं केवलं बिम्बभूतेश्वरस्वरूपमेवेति तदा तस्य सर्वज्ञत्वं स्यात् । अवच्छेदवादेपि यथा मठान्तर्वर्तिघटाकाशो घटनाशे मठाकाशस्वरूप एव भवति तथाविद्यापरिणामभूतान्तःकरणावच्छिन्ना चिदन्तःकरणनाशेऽविद्यावच्छिन्नचित्स्वरूपैव । स एव चेश्वर इति सुषुप्तौ जीवात्मनोऽपगतजीवभावस्य सर्वज्ञत्वं तदवस्थमेवेति चेत्तत्राह-तदा चेति । तत्संस्कारेणेति । अन्तःकरणसंस्कारावच्छिन्नाया अविद्यायाः सुषुप्तौ जीवोपाधित्वात् । तथा च यथा दग्धा रज्जुर्बन्धनासमर्थापि संवलनसंस्कारं न जहाति तद्वत्तदानीमविद्याया अवस्थितिरिति भावः ।

नन्वेवं सुषुप्तौ जीवभावस्य स्थिरत्वे सता सोम्य तदा संपन्नो भवति

१ च-प्रकृष्टज्ञानत्वा । २ ज झ-वा सार्वज्ञ्यापत्तिः ।

ईशाभेदप्रतिपादनं च शरीरेन्द्रियाद्यभिमानराहित्येनोपचारात्। तत्संस्कारस्य च निमित्तकारणत्वेन साक्ष्याश्रितकार्योपादानकोटावप्रवेशान्न तद्भेदेन साक्षिभेदः।

---

(छां. ६।८।१) इति श्रुतौ सुषुप्त्यवस्थायां जीवस्येश्वराभेदः प्रतिपादितो न संगच्छत इति चेत्तत्राह–ईशाभेदेति। सुषुप्तावुक्तरीत्या जीवत्वप्रापकोपाधेर्विद्यमानत्वान्न तदानीमपि वस्तुतो जीवस्येश्वरेण सहाभेदः। किं तु केवलं तदानीं तस्येश्वरवच्छरीराद्यभिमानराहित्यं भवति। तथा च श्रुतिप्रतिपादित ईशाभेदो गौणः यथा संपदाधिक्ये तेन साम्यात्पुरोहितोऽयं राजा संवृत्त इति व्यपदिश्यते तद्वत्। एवं सुषुप्तौ जीवैक्यमपि नापादनीयम्। अन्तःकरणानामिव तत्संस्काराणामप्यविद्यागतानां नानात्वाज्जाग्रदादिवदौपाधिकभेदस्य सुवचत्वात्। जीवत्व प्रापकोपाधिरविद्या इति पक्षे तु जीवैक्यमिष्टमेव। तच्च न केवलं सुषुप्तावेव किं त्ववस्थात्रयेऽपीति।

ननु सुषुप्तौ संस्कारसत्त्वे तादृशसंस्कारानुरूपैव सुखमहमस्वाप्समिति स्मृतिरित्यङ्गीकर्तव्यम्। स्मृत्यादयो हि संस्कारानुरूपा जायन्ते इति प्रसिद्धमेव। स्मृतिसंशयविपर्ययाणां साक्ष्याश्रयत्वं च प्रागुक्तमेव (पृ. ११४।२)। तथा च यथा प्रातिभासिकं रजतं स्वाश्रयीभूतशुक्तिस्वरूपान्तर्गततदाकारानुरूपं दृश्यते तथात्र स्मृत्यादयः स्वाश्रयीभूतसाक्षिस्वरूपान्तर्गतसंस्कारानुरूपा इति वक्तव्यम्। परं तु तन्न शक्यते वक्तुम्। संस्काराणां साक्षिस्वरूपान्तर्गतत्वे साक्षिभेदप्रसङ्गः। संस्काराणां नानात्वात्। साक्षिभेदस्तु नेष्यते। साक्षी त्वेकविध एव (९३।२) इति प्रागुक्तत्वात्। तथा च कथमत्र व्यवस्थेति चेत्तत्राह–तत्संस्कारस्य चेति। साक्ष्याश्रितं यत्कार्यं स्मरणादिकं तस्य यदुपादानं तत्स्वरूप इत्यर्थः। अयं भावः। संस्काराद्युपाधिसंनिहितोऽपि चिन्मात्ररूप एव साक्षी न तूपाधिविशिष्टः। स्मरणं च साक्षिमात्रोपादानकमिति वार्तिकमतम्। अन्ये तु चिन्मात्र एव साक्षी। स्मरणं तु साक्षी अन्तःकरणसंस्कारश्चेतदुभयाश्रितमिति मन्यन्ते। अपरे तु स्मरणं साक्षिमात्राश्रितम्। साक्षि स्वरूपं तु अन्तःकरणसंस्कारविशिष्टा चिदिति वदन्ति। अत्र वार्तिकमतमेव सम्यक्। तदितरमतद्वयेऽन्तःकरणसंस्काराणां साक्षिस्वरूपानन्तर्गतानां तदन्तर्गतानां वा स्मरणाश्रितत्वमुक्तं तन्न संभवति। स्मरणं मूलाविद्यावृत्तिविशेषः तस्य मूलाविद्यापरिणामभूता एवान्तःकरणसंस्कारा आश्रया इत्युक्तेरात्माश्रयदोषग्रस्तत्वात्। किं चापरमते संस्काराणां साक्षिस्वरूपे प्रवेशो नैव संभवति। संस्काराणां साक्ष्यत्वात्। तथान्यमतमपि न युक्तम्। यतः स्मरणं नाम वृत्तिविशेषविशिष्टायामविद्यायां चितः स्फुरणम्। स्फुरणं च चेतनमात्राश्रितम्। न हि जडं वस्तु मूर्तममूर्तं वा धर्मभूतं धर्मिभूतं वा किंचिदपि क्वचिदपि च स्वयं

---

१ ग च छ ज स–दौंप सा।

जागरणे त्वन्तःकरणस्य प्रमात्राश्रितकार्योपादानकोटौ प्रवेशात्तद्भेदेन प्रमातृभेद एव । साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्नानुसंधानानुपपत्तिरिति ।

---

स्फुरति । चिदेव सर्वत्र तेन तेन रूपेण चकास्ति । तथा च स्मरणावस्थायां संस्कारा नैव प्रकाशन्ते । किं तु केवलमविद्याया वृत्तिविशेषग्रहणे कारणीभूता भवन्ति । नैतावता तेषां कथमपि स्फुरणाश्रयत्वम् । एतावता प्रबन्धेन स्मरणात्मिकायाः कार्यभूताया अविद्यावृत्तेरुपादानकारणीभूतः केवलः साक्ष्येवाश्रय इति न सुषुप्तौ जीवभेदेऽपि साक्षिभेद इति साधितम् ।

नन्वेवं संस्कारस्य स्मृतिनिमित्तकारणत्वे कथं कार्यभूतस्य स्मरणस्य संस्कारस्वरूपानुविधायित्वम् । न हि घटो दण्डगतं स्थौल्यं कार्श्यं वानुहरति । स्मरणं तु यथा संस्कारस्तथा भवतीति चेदुच्यते । स्मरणरूपाया अविद्यावृत्तेरुपादानकारणं द्विविधम् । विवर्तोपादानं परिणाम्युपादानं च । आद्यं साक्षिमात्रम् । अन्त्यमविद्या । संस्काराश्चान्तःकरणे जायमाना अपि तादृशान्तःकरणस्य मूलकारणीभूतायामविद्यायां पर्यवस्यन्तीत्युक्तमेव । तथा च परिणाम्युपादानकारणीभूताविद्यागतसंस्कारस्वरूपानुसरणं कार्यस्य स्मरणस्य युक्तमेव । ननु तर्हि कार्योपादानकोटौ संस्कारस्याप्रवेशः कथं मूल उक्त इति चेत्—अत्र केचिदुपादानपदेन विवर्तोपादानं विवक्षितमिति समादधते । अन्ये तु संस्काराणां परिणाम्युपादानकारणीभूताविद्यानिष्ठत्वेऽपि नोपादानकारणस्वरूपान्तर्गतत्वम् । न हि वार्तिकमतेऽपि घटोपादानकारणीभूतायां मृदि वर्तमाना मृत्तिकात्वजातिरुपादानकारणस्वरूपेऽन्तर्भवति । प्रत्युतान्यथासिद्धत्वात्सा घटस्य निमित्तकारणमपि न भवति । प्रकृते च स्मरणस्य निमित्तकारणीभूता अपि संस्कारा उपादानकारणनिष्ठत्वात्तत्स्वरूपानुविधायि कार्यं भवतीत्याहुः ।

यथा साक्ष्यैक्यं न तथा प्रमात्रैक्यं वक्तुं शक्यत इत्याह—जागरणे त्विति । इन्द्रियवृत्तिकालीनार्थोपलम्भो जागरणम् । तत्र यो घटाद्यर्थोपलम्भस्तदेव प्रमात्राश्रितं कार्यम् । स चोपलम्भोऽन्तःकरणवृत्त्यपेक्ष इति प्रमात्रुपाधिभूतस्यान्तःकरणस्य प्रमाज्ञानोपादानभूते प्रमातृस्वरूपे प्रवेश आवश्यक एव । तथा चार्थादेवान्तःकरणभेदात्प्रमातृभेदः सिद्धो भवति । नन्वेवं साक्षी सर्वानुसंधातैक एव प्रमाता जीवस्तु प्रतिशरीरमन्तःकरणभेदेन भिन्न एवेत्येवं प्रमातृसाक्षिणोर्भेदे प्रमात्रनुभूतस्य कथं साक्षिणः स्मरणम् । अन्येनानुभूतस्यान्येन स्मरणायोगादिति चेत्तत्राह—साक्षिण एवेति । अधिकोपाधिः सवृत्तिकं मनः । अनुसंधानं स्मरणम् । न साक्षिप्रमात्रोः सर्वथा भेदः । किं तु साक्षिण एव चिन्मात्रस्याधिककञ्चुकप्रवेशात्प्रमातृत्वम् । उक्तार्थे वार्तिककारसंमतिं प्रदर्शयति—

---

१ ग ङ च छ ज झ—त्वान्न प्रतिसं ।

मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते ।
साक्षी बाह्यार्थवद्यस्मात्स आत्मेत्युच्यते ततः ॥
व्यभिचारो मिथो यद्वत्प्रमात्रादेः ससाक्षिकः ।
सर्वमात्राद्यभावस्य साक्षित्वान्न तथात्मनः ॥ ( बृ. वा. ३।४।५४–५५) इति वार्तिककारपादैर्व्यवहारदशायामपि साक्षिभेदनिराकरणात्सुषुप्तौ तद्भेदकल्पनं[3] केचिन्मन्यन्ते तन्महामोह एवेत्यवधेयम् ।

ननु दुःखमहमस्वाप्समिति कस्यचित्कदाचित्परामर्शात्सुषुप्तौ दुःखानुभवोऽप्यस्तु । न । तदानीं दुःखसामग्रीविरहेण तदभावात् । सुखस्य चात्मस्व-

मातृमानेति । मनुष्यपशुपक्ष्यादिदेहभेदेन तेष्वपि देवदत्तयज्ञदत्तादिदेहभेदेन च प्रमातृप्रमाणयोर्भेदेऽपि यथा बाह्योऽर्थो घटादिर्न भिद्यते तथा साक्ष्यपि यस्मान्न भिद्यते तस्मात्कारणात्स आत्मेत्युच्यते । अतति सर्वं व्याप्नोति इति आत्मशब्दनिर्वचनम् । यथा प्रमातृप्रमाणप्रमेयाणां परस्परं भेदः ससाक्षिकोऽज्ञानावाच्छिन्नचैतन्यसाक्षिको न तथात्मनः साक्षिणो भेदो भवति । यतः स प्रमाणप्रमात्रादीनां सर्वेषां तेषामभावानां च साक्षिभूत इत्यर्थः । साक्षिनानात्वं ससाक्षिकं चेदनवस्था । असाक्षिकं चेन्नैव सिध्यति । एवं च जाग्रदवस्थायामपि साक्षिभेदो नास्ति चेत्किमुत सुषुप्तौ वक्तव्यम् । तथा च देवदत्तयज्ञदत्तादिदेहभेदेऽपि न साक्षिभेदस्तथा जाग्रदाद्यवस्थाभेदेऽपि न साक्षिभेदः । किं तु सर्वज्ञः सर्वत्र चिन्मात्ररूप एक एव साक्षीति सिद्धं भवति । एतेन वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रोक्तं साक्षिनानात्वं निरस्तं वेदितव्यम् ।

नन्विति । यथा जागृतौ जायमानं यत्सुखमहमस्वाप्समित्यनुसंधानं तदनुसारेण सुषुप्तावविद्यावृत्तिः सुखाकाराभ्युपेयते तर्हि दुःखमहमस्वाप्समित्यपि कदाचिज्जागृतावनुसंधानं जायते तदनुसारेण दुःखाकाराप्यविद्यावृत्तिः सुषुप्तौ कल्पनीया स्यादित्याशयः । तदानीमिति । सुषुप्तौ देहाभिमानत्यागेन मनसो विलयेन च बाह्यवैषयिकदुःखानुभवसामग्र्यास्तदानीमभाव एव । यद्यप्येवं बाह्यवैषयिकसुखानुभवसामग्र्या अपि तदानीमभाव एव तथापि विज्ञानमानन्दं ब्रह्म ( बृ. ३।९।२८ ) आनन्द आत्मा ( तै. २।५।१ ) इत्यादिश्रुतिष्वात्मनो नित्यसुखस्वरूपत्वोक्तेरान्तरसुखस्य कारणदेहेन तद्भोगस्य च सत्त्वमक्षतमेव । आत्मनो नित्यसुखस्वरूपत्वे सुषुप्तिस्थानुभवोऽपि प्रमाणं भवति । तदुक्तं वार्तिके—

स्वानन्दाभिमुखः स्वापे बोध्यमानोत एव च ।
पीड्यते स्त्र्यादिसंपर्कसुखविच्छेदतो यथा ॥ ( बृह. संबन्धवार्तिक

१ ग ङ च छ ज झ–देः स्वसाक्षि । २ ङ च छ ज–झ–भावार्थेसा । ३ ग च ज झ–नं केषांचिद्व्यामोह । च–नं केषांचिद्व्यामोहमाचामित्यव । ; छ–न केषांचिन्महामो । ४ ख–चित्परा । ५ ख ङ–रहात् ।

रूपत्वेन नित्यत्वात्। शय्यादेरसमीचीनत्वेन च दुःखमित्युपचाराद्दुःखमहमस्वाप्समिति प्रत्ययोपपत्तिः।

अथ वा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारात्सुषुप्तावपि दुःखमुपपद्यते। तथा हि। प्रमाज्ञानं जाग्रज्जाग्रत्। शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः। श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्। स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः। जाग्रद्दशायां कथयितुं न शक्यते स्वप्नाव-

श्लो. १०२१ ) इति।

सुषुप्तौ जीवात्मा स्वानन्दाभिमुखो भवति। अत एव बोध्यमानः सन्पीडितो भवतीति तदर्थः। नन्वेवं कदाचिज्जायमानस्य दुःखमहमस्वाप्समिति परामर्शस्य का गतिस्तत्राह–शय्यादेरिति। सुषुप्तेः पूर्वं जाग्रदवस्थान्त्यक्षणे शय्यादेः काठिन्येन हस्तपादाद्यवयवसंनिवेशविशेषेण वा यद् दुःखमनुभूयते तस्य सुषुप्तावपि अनुवृत्तिमारोप्य तादृशपरामर्श उपपादनीयः। वास्तविकस्य दुःखस्य तु सुषुप्तिकाले गन्धोऽपि नास्तीति भावः।

अथ बृहदारण्यके चतुर्थाध्याये तृतीये ज्योतिर्ब्राह्मणे वार्तिककारैः सुरेश्वराचार्यैर्यदुक्तं तदनुसारेण पक्षान्तरमाह–अथ वेति। इन्द्रियवृत्तिकालीनोऽर्थोपलम्भो जागृतिः। इन्द्रियवृत्त्यभावकालीनो वासनामात्रेण जायमानोऽर्थोपलम्भः स्वप्नः। कारणमात्रार्थोपलम्भः सुषुप्तिः। एतास्तिस्रोऽवस्था अर्थत्रैविध्यात्पुनः प्रत्येकं जाग्रत्स्वप्नसुषुप्तिभेदेन त्रिविधाः। अर्थो हि व्यावहारिकः प्रातिभासिकोऽज्ञानमयश्चेति त्रिविधः। तथा च संकलनया नवावस्था भवन्ति। जाग्रज्जाग्रत् (१) जाग्रत्स्वप्नः (२) जाग्रत्सुषुप्तिः (३) स्वप्नजाग्रत् (४) स्वप्नस्वप्नः (५) स्वप्नसुषुप्तिः (६) सुषुप्तिजाग्रत् (७) सुषुप्तिस्वप्नः (८) सुषुप्तिः (९) इति। प्रमाज्ञानमिति। प्रमाणजन्यो यथार्थो घटाद्युपलम्भ इत्यर्थः। स्तब्धीभाव इति। यत्र चाहमाकारवृत्तिव्यतिरिक्ता न काचिद् वृत्तिः किं त्वज्ञानविशेष एवोपलभ्यते तादृश्यवस्थेत्यर्थः। मन्त्रादीति। मन्त्रश्चायं व्यावहारिकः सत्यः। जागृतावपि तदुपयोगदर्शनात्। एवमेव यदत्र दीक्षितान्वये तत्पूर्वजेन गाणपत्येन स्वप्ने कस्माच्चिद् ब्राह्मणात्सकाशाद्गणपतिमूर्तिर्लब्धा जागृतावपि सा तथैवासीन्न विनष्टा। अद्यापि सा तेषां गृहे देवागारे वर्तत इति श्रूयते। स मूर्तिप्रतिलम्भोऽपि स्वप्नजाग्रदेव। स्वप्नेऽपीति। यत्रैकस्मिन्स्वप्नेऽवान्तरस्वप्नदर्शनं तत्रावान्तरस्वप्नदृष्टा अर्थाः कल्पिता इति स्वप्नावस्थायामपि तेषामर्थानां कल्पितत्वेन प्रतिलम्भो भवति। जाग्रद्दशायामिति। यथा त्वया तत्र कः सुवर्णालंकारो दृष्ट इत्येवं देवदत्तेन पृष्टो यज्ञदत्तः कदाचिदेवं कथयति यन्मया सुवर्णमितीदानीं स्मर्यते अमुकालंकार इतीदानीं न स्मर्यत इति। यद्यपि सुवर्णदर्शनसमयेऽलं-

१ छ–त्रङ्गयाङ्गी।

स्थायां च यत्किंचिदनुभूयते तत्स्वप्नसुषुप्तिः। एवं सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत्। तदनन्तरं सुखमहमस्वाप्समिति परामर्शः। तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः। तदनन्तरमेव दुःखमहमस्वाप्समिति परामर्शोत्पत्तिः। तत्रैव या तामसी वृत्तिः सा सुषुप्तिसुषुप्तिः। तदनन्तरं गाढं मूढोऽहमिति परामर्शः। यथा चैतत्तथा वासिष्ठवार्तिकामृतादौ स्पष्टम्।

एवमध्यात्मं विश्वः। अधिभूतं विराट्। अधिदैवं विष्णुः। अध्यात्मं

कारदर्शनमावश्यकमेव तथापि तद्दर्शनसामान्यं न तु निरीक्षणमिति संस्काराजनकत्वात्स्मृतिप्रतिबन्धाधायि न भवति। तादृशः संस्काराजनको यः स्वप्नेऽर्थोपलम्भः सा स्वप्नसुषुप्तिः। सुखाकारेति। सुखस्यात्मस्वरूपत्वेन सत्यत्वात्तदुपलम्भः सुषुप्तिजाग्रत्। तत्रैव येति। दुःखस्य तु राजस्या वृत्त्या प्रातिभासिकस्योपलम्भ इति स सुषुप्तिस्वप्नः। शय्यादेरसमीचीनत्वेन दुःखोपचार इति प्रथमे पक्षे अथ वेत्यादिनोपपादितेऽस्मिन्द्वितीये पक्षे च सुषुप्त्यवस्थायां वस्तुतो दुःखं नास्तीति समानमेव। इयांस्तु विशेषः। प्रथमे पक्षे सुषुप्त्यवस्थातः पूर्वं विद्यमानस्य दुःखस्य संसर्गः केवलं सुषुप्तौ कल्प्यते। द्वितीये तु सुषुप्त्यवस्थायामपूर्वमेव दुःखं कल्प्यत इति। एवमस्मिन्मते (पृ. ८८ पं. १०) इत्यारभ्य स्पष्टम् (पृ. १३९ पं. ५) इत्यन्तेन प्रबन्धेन न जाग्रदित्यष्टमपद्यार्थप्रदर्शनाय पद्यघटकजाग्रदादिपदार्था विविचिताः। तेषामविद्यात्मकत्वं चोपपादितम्।

अथ प्रसङ्गादन्तःकरणशुद्ध्यर्थमध्यात्मादीनामैक्यभावनापूर्वकमुपासनाप्रकारं प्रदर्शयति—एवमध्यात्ममिति। एक एव दृक्पदार्थ आत्मा पारमार्थिकः। दृश्यं च सर्वं प्रातीतिकं तत्रैवाविद्याकल्पितं मिथ्याभूतम्। तथा च दृश्यस्यावान्तरभेदा अव्याकृतादयस्तदुपाधिका ईश्वरादयो दृग्भेदाः सत्त्वादिगुणभेदेन विष्णुब्रह्मरुद्रभेदास्तत्कार्याणि तथाध्यात्माधिदैवाधिभूतभेदा जाग्रदाद्यवस्थाभेदाश्च सर्वे कल्पनामात्रशरीरा मिथ्याभूता एवेत्येवमैक्यभावनया हिरण्यगर्भलोकप्राप्तिरन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च भवति। उपाधिविलयेनैक्यसाक्षात्कारे तु साक्षात्सद्य एव मोक्षप्राप्तिः।

अत्रेदं बोध्यम्। अध्यात्ममित्यत्रात्मशब्दः शरीरवाची। शरीरं स्थूलशरीरं लिङ्गशरीरं कारणशरीरं वाधिकृत्य स्थितः शारीर आत्मा तदवस्थाश्चाध्यात्मशब्देनोच्यन्ते। भूतं स्थूलं सूक्ष्मं सूक्ष्मतरं वाधिकृत्य स्थिता अव्याकृतादयोऽर्थास्तद्गुणाः सत्त्वादयश्चाधिभूतशब्देनोच्यन्ते। देवं सत्त्वरजस्तमोमयं गुण-

१ छ ज—नन्तरं दुःख। २ ङ च—शोपपत्तिः। एवं तामसी वृत्तिः सुषुप्तिसुषु। ज—शोंपपत्तिः। तत्रैव।; झ—शोंपपत्तिः। एवं तामसी। ३ ङ च छ झ—हमासामिति। ज—हमस्वाप्समिति। ४ झ—कादौ स्प ५ ङ—वं ब्रह्मा। अध्यात्मं जाग्रत्। अधिदैवं सृष्टिः। अधिभूतं रजोगुणः। एवमध्यात्मं तैजसः। अधिभूतं हिरण्यगर्भः। अधिदैवं विष्णुः। अध्यात्मं स्वप्नः। अधिदैवं पालनम्। अधिभूतं सत्त्वगुणः। एवमध्यात्मं प्राज्ञः।

जाग्रत् । अधिदैवं पालनम् । अधिभूतं सत्वगुणः । एवमध्यात्मं तैजसः । अधिभूतं हिरण्यगर्भः । अधिदैवं ब्रह्मा । अध्यात्मं स्वप्नः । अधिदैवं सृष्टिः । अधिभूतं रजोगुणः । एवमध्यात्मं प्राज्ञः । अधिभूतमव्याकृतम् । अधिदैवं रुद्रः । अध्यात्मं सुषुप्तिः । अधिदैवं प्रलयः । अधिभूतं तमोगुणः । एवमध्यात्माधिभूताधिदैवानामेकत्वात्प्रणवावयवत्रयसहितानामुपहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः । अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च । एतत्सर्वोपाधिनिराक-

वर्गमधिकृत्य स्थिता देवतास्तत्कार्यं चाधिदैवशब्देनोच्यते। तत्रोद्भूतसत्त्वगुणा स्थूलजडसमष्टिर्विराडाख्या सत्त्वप्रधानजाग्रदवस्था सत्त्वप्रधानस्थूलजडव्यष्ट्यभिमानी विश्वाख्यो जीवः सात्त्विककार्यपालनकर्त्री विष्णुदेवता चेत्येकः समूहः । उद्भूतरजोगुणा सूक्ष्मजडसमष्टिर्हिरण्यगर्भाख्या रजःप्रधानस्वप्नावस्था रजःप्रधानसूक्ष्मजडव्यष्ट्यभिमानी तैजसाख्यो जीवो राजसकार्यसृष्टिकर्त्री ब्रह्मदेवता चेति द्वितीयः समूहः । उद्भूततमोगुणा सूक्ष्मतरा जडसमष्टिरव्याकृताख्या तमःप्रधानसुषुप्त्यवस्था तमःप्रधानसूक्ष्मतरजडव्यष्ट्यभिमानी प्राज्ञाख्यो जीवस्तामसकार्यप्रलयकर्त्री रुद्रदेवता चेति तृतीयः समूहः । प्रणवस्योंकारस्यावयवीभूता अकारोकारमकारास्त्रयो वर्णा एषां त्रयाणां समूहानां क्रमेण वाचकाः । ऐक्यभावना चेत्थम्–अकारो वाचकः । प्रथमः समूहश्च तद्वाच्यः । वाच्यवाचकयोरभेदाद्वाच्यापेक्षया वाचको भेदेन न भावनीयः । एवं द्वितीयसमूहवाचक उकारो वाच्यद्वितीयसमूहापेक्षया भेदेन न भावनीयः। मकारोप्येवं तृतीयसमूहापेक्षया भेदेन न भावनीयः। ततः प्रथमसमूहः स्वकारणीभूतद्वितीयसमूहापेक्षया भेदेन न भावनीयः। कार्यकारणयोरैक्यात् । ततो द्वितीयसमूहः स्वकारणीभूततृतीयसमूहापेक्षया भेदेन न भावनीयः । समूहे च समष्ट्यपेक्षया व्यष्टिर्भेदेन न भावनीया । अनवरतात्मैक्यभावनाभ्यासेन चोत्तरोत्तरं मूर्तामूर्ताव्याकृतमिथ्यात्वनिश्चयपूर्वकमात्मैक्यनिश्चयदार्ढ्ये सति विगलितनिःशेषदोषः सत्यलोकं गतो विशुद्धान्तःकरणः प्रलयसमये मूर्तामूर्तविलयं प्रत्यक्षीकुर्वन्नुपबृंहितमिथ्यात्वसंस्कारो निर्विकल्पाखण्डब्रह्मात्मैक्यसाक्षात्कारो लेशतोप्यनवशिष्टाव्याकृताभिमानो बन्धात्प्रमुच्यते । यथा कश्चित्कार्यार्थी गच्छन्मार्गे रज्जुसर्पं दृष्ट्वा भिया परावृत्तो विरतगतिर्नायं सर्प इत्याप्तेन संबोधितः पुरः प्रवर्तमानोपि यावद्दूरत्वादिदोषं शनैरेव गच्छति । अपगते तु दूरत्वादिदोषे सर्पविलयं रज्जुसाक्षात्कारादभयं गतो भवति तद्वत् । एषा क्रममुक्तिः । यस्य तु पूर्वपुण्यौघपरिपाकवशात्केनचिद्दयालुना ब्रह्मविदोपदिष्टात्मतत्त्वस्येहैवात्मज्योतिराविर्भवति तस्य सद्य एव तद्विरुद्धस्याविद्यामयस्य मूर्तामूर्ताव्याकृतात्मकनिखिलप्रपञ्चस्य युगपदेव विलये सद्यो मुक्तिः। एषा जीवन्मुक्तिः। तदाह–एतत्सर्वेति । तस्य तावदेव चिरम् ( छा० ६।१४।२ ) इति न्यायेन प्रारब्धकर्म-

१ ख–वमध्यात्मिकाधि । २ ङ–नामेतेषा । ३ ग च–नामैक्यो ।

रणेन साक्षिचैतन्यमात्रज्ञानेन तु साक्षादेव मोक्ष इति ।

तदेवं त्रयाणामप्यवस्थात्रयसहितानां विश्वतैजसप्राज्ञानामविद्यात्मकत्वाद्दृश्यत्वेन च मिथ्यात्वादनुपहितः केवलः साक्षी तुरीयाख्योहमस्मीत्यर्थः । एवं व्यवहारतः सर्वव्यवस्थोपपत्तेः परमार्थतः कस्या अपि व्यवस्थाया अभावान्न काप्यनुपपत्तिः । विस्तरेणैतत्प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायामित्युपरम्यते ॥ ८ ॥

ननु जाग्रत्स्वप्नसुषुप्त्यवस्थासहितानां त्रयाणामपि तदभिमानिनां मिथ्यात्वात्तत्साक्षिणोपि मिथ्यात्वं स्यादविशेषादित्याशङ्क्य विशेषाभिधानेन साक्षिणः सत्यत्वमाह–

समाप्तौ देहपातानन्तरं विदेहमुक्तिरिति बोध्यम् । एवं प्रकृताष्टमश्लोकपूर्वार्धगतजाग्रदादिपदार्थस्वरूपं विविच्य प्रसङ्गादुपासनं मोक्षं च प्रतिपाद्येदानीं श्लोकोत्तरार्धं व्याचष्टे–तदेवमिति ॥ ८ ॥

अविशेषादिति । यथा जाग्रदाद्यवस्थानां मिथो व्यभिचारित्वान्मिथ्यात्वेन तदभिमानिनां विश्वादीनामपि तादृशावस्थासापेक्षतया मिथ्यात्वमुक्तं तथा साक्षित्वस्यापि साक्ष्यसापेक्षत्वात्साक्ष्यस्य च मिथ्यात्वात्साक्षिणोपि मिथ्यात्वं स्यादित्याशयः । विशेषाभिधानेनेति । अतोन्यदार्तम् ( बृ. ३।४।२ ) इति श्रुतौ साक्षिव्यतिरिक्तस्य मिथ्यात्वाभिधानेनेत्यर्थः । अयं भावः । साक्षिणः साक्षित्वस्य साक्ष्यसापेक्षत्वेन मिथ्यात्वेपि चिन्मात्रस्वरूपेण तस्य न मिथ्यात्वम् । सत्यं मिथ्या चेति हि मिथःप्रतिद्वन्द्विभूतावर्थौ । यदि मिथ्याव्यतिरिक्तं किंचिदपि न स्यात्तर्हि मिथ्याभूतस्यार्थस्य मिथ्यात्वमेव न स्यादिति । नन्वेवं विश्वादीनामपि चिन्मात्रस्वरूपेण सत्यत्वमेवेति चेन्न । विश्वादीनां स्वरूपमन्तःकरणाद्युपाधिविशिष्टं न तु केवलम् । तथा चोपाधेर्मिथ्यात्वात्कथं तद्विशिष्टस्य सत्यत्वं स्यात् । नन्वेवमपि विश्वादिस्वरूपान्तर्गतस्य चिन्मात्रस्य सत्यत्वमस्त्येवेति चेत्सत्यमेतत् । तदेवात्र साक्षिणः सत्यत्वमुच्यते । साक्षिण एवाधिककञ्चुकप्रवेशादीश्वरत्वजीवत्वादिकमिति प्रागुक्तमेव । तत्र सर्वेषां कञ्चुकानां मिथ्यात्वेपि येन कञ्चुकानि गृहीतानि तस्य कञ्चुकान्तर्गतस्य कस्यचित्सत्यत्वमवश्यमभ्युपेतव्यं भवति । यश्च सर्वान्तर्गतः स एवात्र साक्षिशब्देन प्रतिपाद्यत इति बोध्यम् ।

१ झ–न्यज्ञानेन । २ च–ज्ञाने च साक्षा । ३ च ज झ–स्थासहि । ४ च छ ज झ–रेण चैतदस्मा ।

अपि व्यापकत्वाद्धितत्वप्रयोगात्
स्वतःसिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्यत्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥

अपीति । न दृष्टेर्द्रष्टारं पश्येः ( बृ. ३।४।२ ) इति साक्षिणं प्रकृत्या-तोऽन्यदार्तम् ( बृ. ३।४।२ ) इति श्रुतेः साक्षिणोऽन्यत्साक्ष्यं सर्वं जगत्तुच्छं न तु साक्षी । बाधावधित्वाद् भ्रमाधिष्ठानतया ज्ञातत्वाच्च तद्बाध[1]ग्राहकाभावाच्चे-त्याद्यनुक्तसमुच्चयार्थोऽपिशब्दः ।

---

अपि व्यापकत्वादिति । तदन्यदित्यत्र तच्छब्देन पूर्वप्रकृतस्तुरीयः सर्वसाक्षी परामृश्यते । साक्षिणः सकाशादन्यत्समस्तमेतज्जगत्तुच्छं मिथ्येति तृतीयपादार्थः । जगतस्तुच्छत्वे हेतुगर्भं विशेषणं तदन्यदिति । तच्चातोऽन्यदार्तम् ( बृ. ३।४।२ ) इति श्रुतिं हृदि निधायोक्तम् । तदन्यदित्यनेनाभिधीयमानस्य साक्षिप्रयुदासस्योक्तश्रुतिसिद्धत्वेऽपि तदुपोद्बलनार्थं पूर्वार्धे व्यापकत्वादयो हेतव उक्ताः । अपिशब्देन बाधावधित्वादिसंग्रहः । न दृष्टेरिति । लौकिक्या रूपाभिव्यञ्जिकाया दृष्टेर्द्रष्टारं व्यापारं दृग्रूपसाक्षिणं न पश्येः । स दृशिकर्म न भवति । अत एतस्मात्साक्षिणः सकाशादन्यत्सर्वमार्तं विनाशि मिथ्येत्यर्थः । बाधावधित्वादिति । यथा नेदं रजतमित्युक्ते यदि नेदं रजतं तर्हि किमेतदिति प्रश्नेऽमुकमिदमित्युत्तरं यदि न दीयते तर्हि रजतस्य बाध एव न सिध्यति । यावद्बाधावधित्वेनामुकमिदमिति न ज्ञायते तावद्रजतमपि स्यादिति संभावनायाः सत्त्वात् । एवं च बाधः सर्वत्र सावधिरेवेति सिद्धम् । निरवधेस्तु बाधस्यात्मलाभ एव नास्ति । तथा च बाधावधिभूतः साक्षी बाधरहितः सिध्यति । सोऽपि बाधित इति कल्प्यते चेत्तस्यापि बाधस्यान्योऽवधिः कल्पनीय इत्यनवस्था स्यादिति भावः । भ्रमाधिष्ठानतयेति । यथा शुक्तिरजतभ्रमेऽधिष्ठानभूतायाः शुक्तेः शुक्तित्वेन विशेषरूपेण ज्ञानं भ्रमविरोध्येव तथापि तस्याः सामान्यरूपेणेदंत्वेन ज्ञानं भ्रमार्थमावश्यकमेव । गाढान्धकारे सामान्यरूपेणाप्यधिष्ठानाज्ञाने भ्रमायोगात् । यच्च जगद्भ्रमस्य सामान्यरूपेण ज्ञायमानमधिष्ठानं स एव साक्षी । यदि च सोऽपि भ्रान्त्या कल्पित इत्युच्यते तर्हि तादृशभ्रमाधिष्ठानं पुनरन्यत्किंचित्कल्पनीयं स्यादित्यनवस्थाप्रसङ्ग इति भावः । तद्बाधेति । यथा नेदं रजतमित्येवमसत्यस्य रजतस्य बाधो गृह्यते तथा साक्षिणोऽसत्यत्वे तद्बाधो वक्तव्यः । स च नैव शक्यते विकल्पासहत्वात् । साक्षिबाधः किमसाक्षिकः ससाक्षिको वा । असाक्षिकश्चेदप्रमाणमेव । तदुक्तं पञ्चदश्यां विद्यारण्यमुनिभिः—

---

१ ङ—धकाभावा ।

अथ यदल्पं तन्मर्त्यम् ( छा. ७।२४।१ ) इति श्रुतेः परिच्छिन्नत्वतुच्छत्वयोः समव्याप्तत्वात्परिच्छिन्नत्वनिवृत्त्या तुच्छत्वनिवृत्तिरित्याह—व्यापकत्वादिति। सर्वं खल्विदं ब्रह्म ( छा. ३।१४।१ ) इति सर्वात्मत्वोपदेशेन देशकालापरिच्छिन्नत्वात्। आकाशादीनां च देशकालपरिच्छिन्नत्वेप्यापेक्षिकमहत्त्वात्तेन व्यापकत्वोपचारात्।

---

बाधः किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते ( प. द. ३।२९ ) इति। असाक्षिकं वस्तु सिध्यति चेत्सर्वत्रैवाव्यवस्था व्यवहारविलोपिनी प्रसज्येतेति तद्भावः। ससाक्षिकश्चेत् व्याघातः। मूकोहमित्युक्तिवत्। यदि मूको नोक्तिरथोक्तिर्न मूकः। तथा यदि साक्षी न साक्षिबाधोऽथ साक्षिबाधो न साक्षीति।

अथ यादिति। छान्दोग्ये सप्तमाध्याये चतुर्विंशे खण्डे यत्र नान्यत्पश्यति स भूमा यत्रान्यत्पश्यति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमित्युक्तम्। भूमा व्यापकम्। अल्पमव्यापकं परिच्छिन्नम्। अमृतमविनाशि। मर्त्यं विनाशि। अत्र यदल्पं तन्मर्त्यमिति श्रुत्या यद्यत्परिच्छिन्नं तत्तद्विनाशीति व्याप्तिरुच्यते ननु यथा यत्र यत्र धूमस्तत्र तत्राग्निरिति व्याप्तावुच्यमानायां धूमसत्त्वे नियमेनाग्निः सिध्यतु नाम। धूमाभावे त्वग्निः स्याद्वा न वेत्यनियम एव। तथा यद्यत्परिच्छिन्नं तत्तद्विनाशीति व्याप्तावुच्यमानायां परिच्छिन्नस्य विनाशित्वं नियमेन सिध्यतु। अपरिच्छिन्नं व्यापकं तु विनाशि वा स्यादविनाशि वेत्यनियम एवेति यद्यद्विनाशि तत्तत्परिच्छिन्नमिति व्याप्तिर्न सिध्यति। तथा च परिच्छिन्नत्वविनाशित्वयोः समव्याप्तिर्न सिध्यतीति चेन्न। यो वै भूमा तदमृतमित्यनेन पूर्ववाक्येन यद्यदपरिच्छिन्नं तत्तदविनाशीत्येवमपरिच्छिन्नत्वाविनाशित्वयोरन्वयव्याप्तौ सिद्धायां तदभावयोर्व्यतिरेकव्याप्तिरर्थादेव सिध्यति। सा च यद्यदविनाशि न भवति तत्तदपरिच्छिन्नमपि न भवतीति। इयमेवोभयत्र नञ्द्वयत्यागेनोच्यमाना यद्यद्विनाशि तत्तत्परिच्छिन्नमित्याकारा भवतीति परिच्छिन्नत्वाविनाशित्वयोः समव्याप्तत्वं सिद्धम्। विनाशित्वं तुच्छत्वम्। सर्वं खल्विति। खल्वित्यव्ययं वाक्यालंकारे निश्चये वा। समस्तमिदं ब्रह्मैव। बृहत्त्वाद् व्यापकत्वाद् ब्रह्म। अत्र श्रुतावसंकुचितार्थेन सर्वशब्देन चतुर्दशभुवनात्मकः सर्वो देशो भूतभविष्यद्वर्तमानात्मकः सर्वः कालश्च संगृह्यते। इदंशदेशकालव्यापकं च वस्तु देशकालापरिच्छिन्नमेव सिध्यति। तथा च साक्षिणो ब्रह्मणः परिच्छिन्नत्वाभावाद्विनाशित्वाभाव इति सत्यत्वं साक्षिणः सिद्धम्। नन्वाकाशस्य व्यापकत्वं लोके प्रतीयते। तथा चोक्तनियमेन तदप्यविनाशि स्यादित्यत आह—आकाशादीनामिति। आदिपदेन वायुसंग्रहः। आकाशस्य यन्मूलकारणं तदेकदेशस्याका-

---

१ ङ च छ ज—महत्त्वेन व्याप।

ननु सर्वव्यापकत्वेन नित्यत्वाद्भावरूपत्वाच्चात्मा न दुःखनिवृत्तिरूपः। नापि सुखरूपः। सुखस्यानित्यत्वेन नित्यात्मस्वरूपत्वानुपपत्तेः। तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एवेत्याशङ्क्य नेत्याह—हितत्वप्रयोगादिति। हितत्वं पुरुषार्थत्वम्। तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोन्यस्मात्सर्वस्मादन्तरन्तरं यदयमात्मा (बृ. १।४।८) यो वै भूमा तत्सुखम् (छा. ७।२३।१) एषं एव परमानन्दः (बृ. ४।३।३३) विज्ञानमानन्दं ब्रह्म (बृ. ३।९।२८) इत्यादिश्रुतिभिस्तस्य परमानन्दरूपत्वोपदेशात्।

शरूपेण परिणामादाकाशस्य देशतः परिच्छिन्नत्वम्। आत्मन आकाशः संभूतः (तै. २।१।१) इत्यादिसृष्टिश्रुतौ चाकाशस्य सृष्ट्यारम्भ उत्पत्तिवर्णनेन प्रागभावबोधनात्कालतः परिच्छिन्नत्वम्। तथा च वस्तुगत्याकाशस्याव्यापकत्वमेव। आकाशकार्यभूतवाय्वाद्यपेक्षयाकाशस्य महत्त्वदर्शनाल्लोकप्रतीतिर्निर्वाह्या। वायुविषयेऽप्येवमेवेति बोध्यम्।

ननु सर्वेति। साक्षिभूतस्यात्मनोऽप्याकाशादिवन्नित्यत्वमापेक्षिकमेव न त्वात्यन्तिकमित्यङ्गीकार्यम्। अन्यथात्मस्वरूपप्राप्तये जायमाना मुमुक्षोः प्रवृत्तिरनुपपन्ना स्यात्। प्रवृत्तिश्च द्विविधा सुखार्था दुःखनिवृत्त्यर्था च। तृतीयं तु प्रवृत्तिनिमित्तं लोके न किंचिदालक्ष्यते। तथा चाविद्यमानं यत्सुखमविद्यमाना वा या दुःखनिवृत्तिस्तदुत्पत्तये प्रवृत्तिर्जायते। साक्षिभूतस्यात्मन आत्यन्तिकनित्यत्वे तु तस्योत्पत्तिर्न संभवतीति न स आत्मा सुख...। नापि दुःखनिवृत्तिरूपो वक्तुं शक्यः। किं च दुःखनिवृत्तिर्दुःखध्वंसरूपा। ध्वंसश्चाभावो न तु भावः। साक्षिभूत आत्मा तु भावरूप एवेति तस्य दुःखनिवृत्तिरूपत्वं सुतरां व...मशक्यम्। तथा चात्मस्वरूपप्राप्तये द्विविधाया अपि प्रवृत्तेर्वक्तुमशक्यतया पुरुषेणार्थ्यमानत्वाभावादात्मस्वरूपस्य मोक्षस्य पुरुषार्थत्वं न संभवतीत्याशयः। तदेतदिति। तदेतत्साक्ष्यात्मस्वरूपं पुत्रादपि प्रियतरं हिरण्यरत्नादिकाद्वित्तादपि प्रियतरम्। तथा लोके यदन्यत्किंचित्पुत्रवित्तापेक्षयाप्यधिकप्रियत्वेन प्रसिद्धं शरीरादिकं तस्मादप्येतदात्मतत्त्वं प्रियतरम्। यतो बाह्यापेक्षयान्तरमधिकं प्रियं भवति। आत्मा त्वान्तरस्याप्यान्तरः। अतति सर्वमन्तर्व्याप्नोतीत्यात्मेति निरुक्त्या तस्य सर्वान्तरत्वादित्यर्थः। यो वै भूमेति। यो भूमा निरतिशयमहांस्तदेव सुखं नाल्पे सुखमस्ति। अल्पस्याधिकतृष्णाहेतुत्वात्। तृष्णा च दुःखबीजम्। तथा चाल्पे न सुखं किं तु भूम्न्येवेत्यर्थः। परमानन्दरूपत्वेति। तथा चात्मन आनन्दरूपत्वात्तत्स्वरूपो मोक्षः सुखार्थिभिर्मुमुक्षुभिः पुरुषैरर्थ्यत इति मोक्षस्य पुरुषार्थत्वं

१ झ—स्याप्यनित्य। २ ङ—एषोस्य परमानन्दः। एष ह्येवानन्दयाति। विज्ञा। ३ ज—तिभ्यस्तस्य। ४ छ—पत्वनोप।

तस्य च नित्यत्वेपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारः[1]। अज्ञानव्यवहितस्य च तस्याप्राप्तस्येव ज्ञानमात्रादविद्यानिवृत्त्या प्राप्ति[3]रिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्तेरुपपत्तिः[4]। अध्यस्तस्य प्रपञ्चस्य दुःखस्वरूपस्याधिष्ठानत्वात्स एवाभाव इति दुःखाभावरूपत्वेनापि तस्य पुरुषार्थता[5]।

ननु मोक्षे सुखं संवेद्यते न वा। नाद्यः। तदानीं देहेन्द्रियाद्यभावेन तद्व्यञ्जकाभावात्। व्यञ्जकाभावेपि तत्संवेदनाभ्युपगमे संसारदशायामपि तथा प्रसङ्गात्। न द्वितीयः। अपुरुषार्थत्वापत्तेः। ज्ञायमानस्यैव तस्य पुरुषार्थत्वात्। अत एव शर्करातद्भोजिनोरिवेति वैष्णवंमन्यानामुद्गार इति चेन्नेत्याह—स्वतःसिद्धम्। न च मोक्षसुखस्योत्पन्नत्वे विनाशावश्यंभाव इति मोक्षस्यानित्यत्वं स्यादिति वाच्यम्। तस्यात्यन्तिकानित्यत्वेन तस्योत्पत्तिविनाशाभावात्। मुमुक्षूणां प्रवृत्तेस्तु न मोक्षसुखोत्पादनार्था किं तु मोक्षसुखाभिव्यक्त्यै। एतावता सुखार्थैव सा प्रवृत्तिः। किं च लोकेपि सर्वत्र सुखार्था प्रवृत्तिरीदृश्येव। यतो लोकेनुभूयमानं वैषयिकं सुखमपि नोक्तादात्मस्वरूपभूतात्सुखादतिरिक्तमिति न तद्विषयेन्द्रियसंयोगादुत्पद्यते किं त्वभिव्यज्यते। तच्च लौकिकं वैषयिकं सुखमुक्तात्मस्वरूपभूतसुखस्य शततमीमपि कलां न स्पृशतीत्यन्यत्।

नन्वेवं लौकिकसुखस्याप्यात्मस्वरूपभूतात्सुखादनतिरिक्ततयात्यान्तिकानित्यत्वाङ्गीकारे उत्पन्नं सुखं विनष्टं सुखमिति व्यवहारःकथमिति चेत्तत्राह-तस्य चेति यथा वायुसंयोगगतावुत्पत्तिविनाशौ शब्द उपचर्येते उत्पन्नः शब्दो विनष्टः शब्द इति तथात्रान्तःकरणवृत्तिगतावुत्पत्तिविनाशौ सुख उपचर्येते इति भावः।नन्वात्मा न कस्यचिद्विप्रकृष्टो नापि व्यवहित इति न तत्स्वरूपभूतस्य सुखस्यानभिव्यक्तिः किं तु सदाभिव्यक्तिरेवेति मुमुक्षूणां प्रवृत्तिर्नोपपद्यत इति चेत्तत्राह—अज्ञानव्यवहितस्येति। एवमात्मस्वरूपस्य मोक्षस्य सुखात्मकत्वेन मुमुक्षूणां प्रवृत्तिमुपपाद्येदानीं तस्य दुःखनिवृत्तिरूपत्वेनापि मुमुक्षूणां तत्र प्रवृत्तिमुपपादयति—अध्यस्तस्येति। दुःखरूपः प्रपञ्चो ह्यात्मन्यध्यस्यत इत्यात्मा तदधिष्ठानम्। अभावश्चाधिकरणरूप एवेत्यात्मस्वरूपैव दुःखनिवृत्तिरिति भावः। एवं चात्मस्वरूपो मोक्षः सुखरूपतया दुःखनिवृत्तिरूपतया च मुमुक्षुभिः पुरुषैरर्थ्यत इति साक्षिभूतस्यात्मनः पुरुषार्थत्वं सिद्धम्। परमपुरुषार्थत्वेन च तस्यात्यन्तिकनित्यत्वात्सत्यत्वमेव न मिथ्यात्वम्। अतस्तदन्यदिति तच्छब्दपरामृष्टस्य साक्षिणः पर्युदासे हितत्वप्रयोगादिति हेतुरुपपन्नो भवति।

तत्संवेदनाभ्युपगम इति। अखण्डानन्दसाक्षात्काराभ्युपगम इत्यर्थः। अत एवेति। जीवब्रह्मणोरैक्यमसहमाना द्वैतवादिनो माध्वा इत्थं वदन्ति-

१ ज—णव्यङ्ग्य। २ ज—चारात्। अज्ञा। ३ ज—प्तिर्भव। ४ च छ ज झ—वृत्युपपत्तिः। ५ झ—र्थत्वम्। ननु।

सिद्धभावादिति। स्वप्रकाशज्ञानरूपत्वादित्यर्थः। यद्यपि संसारदशायामविद्यावृतस्वरूपत्वादात्मा परमानन्दरूपतया न प्रथते तथापि[3] विद्यया अविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दरूपेण प्रकाशत इति न व्यञ्जकापेक्षा।

ननु सुखस्य स्वप्रकाशज्ञानरूपत्वेपि नात्मरूपता। ज्ञानस्य धात्वर्थरूपतया क्रियात्वेन साश्रयत्वात्। जानामीति प्रतीतेः ज्ञानमहमस्मीत्यप्रतीतेश्च। तथा च कथमद्वैतवाद इत्याशङ्क्य नेत्याह—अनन्याश्रयत्वादिति। यत्साक्षादपरो-

---

मोक्षावस्थायां जीवो ब्रह्मस्वरूपश्चेद्ब्रह्मणः सुखरूपत्वात्तदभिन्नस्य जीवस्य सुखस्वरूपत्वेपि न सुखप्रकाशः। सुखसंवेदनाभावात्। अतो मोक्षावस्थायां ब्रह्मणः सकाशाद्भेदेनैव जीवस्यावस्थितिर्वाच्या। तथा हि सति ब्रह्मस्वरूपसुखस्य संवेदनं जीवस्योपपद्यते। यथा शर्कराभोजिनो माधुर्यसंवेदनात्सुखं न तु शर्करातादात्म्येनावस्थितस्य लोष्टादेः। तत्संवेदनाभावादिति। स्वप्रकाशेति। आत्मा हि न वैशेषिकाभिमत इव ज्ञानाश्रयोस्माभिः स्वीक्रियते। किं तु ज्ञानस्वरूप एव। तथा च तस्य संवेदनरूपत्वादेव नोक्तशङ्काकलङ्कावकाश इति भावः। संवेदनेन च तदितरत्सिध्यति। संवेदनं तु स्वतःसिद्धमेव। अन्यथानवस्थाप्रसङ्गः। एवं स्वतःसिद्धस्य तस्य संवेदनस्य नित्यत्वं स्वीकार्यम्। अनित्यत्वे तदभावावस्थायां जगदान्ध्यप्रसङ्गः। किं च संवेदनमेव यदि लुप्येत हन्त किमाश्रया पुनः सृष्टिः स्यात्। तथा च संवेदनरूपस्य साक्षिणः सत्यत्वमवश्यमभ्युपेत्यमिति तदन्यादिति पर्युदासे स्वतःसिद्धभावादिति हेतुरुपपद्यते। नन्वात्मस्वरूपभूतं सुखं स्वतःसिद्धं चेत्कुतः संसारावस्थायां न भाति। अविद्यया तिरोभाव इति चेत्कथं मोक्षे तदभिव्यक्तिः। तदानीं देहेन्द्रियादेरभिव्यञ्जकाभावादिति चेत्तत्राह—यद्यपीति। न व्यञ्जकापेक्षेति। यथा जडो घटादिर्न स्वप्रकाशः किं तु परप्रकाश इति व्यञ्जकमन्तःकरणवृत्त्यादिकमपेक्षते। दीपस्तु तमोनिरसनद्वारान्तःकरणवृत्तावुपयुज्यते न तु स्वातन्त्र्येण तस्य घटादिव्यञ्जकत्वम्। अन्धस्यापि तदभिव्यक्तिप्रसङ्गात्। प्रकृते सुखरूपं साक्षिचैतन्यं स्वतःसिद्धत्वान्नान्तःकरणवृत्त्यादिकं व्यञ्जकमपेक्षते। तत्त्वविद्या त्वविद्यां निरासयतीत्येव न तु तद्द्वारा सा कस्यचिद्व्यञ्जकस्योपकारिका भवतीति भावः।

कथमद्वैतवाद इति। किं तु संवेदनं तद्भिन्नस्तदाश्रयः साक्षी चेति द्वैतवाद एवोक्तप्रतीत्यनुसारेणाङ्गीकार्यः स्यात्। अङ्गीकृते च द्वैते संवेदनेतरस्य साक्षिणो घटादिवन्मिथ्यात्वमेव स्यान्न तु सत्यत्वमित्याशयः। यत्साक्षादिति। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। प्रत्यक्षमिति यावत्। यद्ब्रह्म साक्षात्प्रत्यक्षज्ञानरूपं य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्यर्थः। प्रमाणद्वारा प्रत्यक्षरूपतां

---

१ ग—शरूपञ्चाम। २ झ—मन्दतया। ३ ग च छ ज झ—पि तत्त्वविद्य।

क्षाद्ब्रह्म य आत्मा सर्वान्तरः ( बृ.३।४।१ ) सत्यं ज्ञानमनन्तं ब्रह्म ( तै.२।१।१ ) विज्ञानमानन्दं ब्रह्म ( बृ. ३।९।२८ ) इत्यादिश्रुतेः स्वप्रकाशज्ञानानन्दरूप एवात्मा। अन्तःकरणतादात्म्याध्यासेन च तद्वृत्तौ ज्ञानाध्यासाज्जानामीति तदाश्रयत्वप्रतीतिः। धात्वर्थत्वमुत्पत्तिविनाशवत्त्वं चान्तःकरणवृत्तेरेवेति ज्ञप्तिरूपमुख्यज्ञानस्य सर्वाधिष्ठानत्वेनान्याश्रयत्वाभावान्न द्वैतापत्तिः। तेन ज्ञानसुखात्मक आत्मा सत्यस्तद्भिन्नं सर्वं जगदसत्यमिति सिद्धम् ॥ ९ ॥

ननु सर्वस्य जगतस्तुच्छत्वे तन्निषेधेनात्मतत्त्वप्रतीतिर्न स्यात्। न हि शशविषाणं निषिध्यते। क्वचित्प्रमितं क्वचिन्निषिध्यत इति न्यायात्। तथा च

---

ब्रह्मणो वारयितुं साक्षात्पदम्। अत्र श्रुतावपरोक्षादित्यनेन सत्यं ज्ञानमिति श्रुतौ ज्ञानमित्यनेन विज्ञानमानन्दमिति श्रुतौ विज्ञानमित्यनेन च ब्रह्मणो ज्ञानस्वरूपत्वमेवोच्यते न तु ज्ञानाश्रयत्वम्। ननु तर्ह्यहं जानामीति प्रतीतेः का गतिरत आह--अन्तःकरणेति। अयं भावः। घटः प्रकाशत इति लोके व्यपदिश्यते। तत्र घटो जडत्वान्न प्रकाशस्वभावः। किं तु तादृशघटाद्यधिष्ठानभूत आत्मा ज्ञानरूपत्वात्प्रकाशस्वभावः। अन्तःकरणवृत्तिश्च घटं स्वच्छतामापादयति। ततोऽधिष्ठानभूत आत्मा घटस्वरूपेण प्रकाशत इति वस्तुस्थितिः। प्रकाशश्च ज्ञानमेवेति तत्साधनभूतायामन्तःकरणवृत्तौ ज्ञानत्वमुपचर्यते। तादृशज्ञानाश्रयं च यद्यप्यन्तःकरणमेव तथापि तादृशान्तःकरणतादात्म्याध्यासादात्मापि तादृशज्ञानाश्रय इत्युपचर्यते। अतोऽहं जानामीति प्रतीतिरुपपन्ना भवति। एतच्च यदौपचारिकमन्तःकरणवृत्तिरूपं ज्ञानं तदेव ज्ञाधातुवाच्यं क्रियारूपं साश्रयं च। मुख्यं ज्ञानं तु न धातुवाच्यं क्रियारूपं नापि साश्रयम्। किं त्वात्मस्वरूपमेव। अतो न द्वैताङ्गीकारप्रसङ्गः। एवं च संवेदनस्वरूपस्य साक्षिभूतस्यात्मनः संवेदनेतरत्वाभावेन न घटादिवन्मिथ्यात्वं किं तु सत्यत्वमेवेति सिद्धम्। अन्याश्रयत्वेति। बहुव्रीहिस्त्वप्रत्ययः। मुख्यज्ञानस्यान्याश्रितत्वाभावादित्यर्थः। उपसंहरति--तेन ज्ञानसुखात्मक इति ॥ ९ ॥

जगतस्तुच्छत्वमसहमानो वैशेषिकमतानुसारेणाक्षिपति--ननु सर्वस्येति। न हि शशेति। शशः प्राणिविशेषः। विषाणं शृङ्गम्। शशस्य च शृङ्गं कालत्रयेऽपि नास्त्येवेति वस्तुस्थितिः। तदनुसारेण शशस्य शृङ्गं नास्तीति प्रतीतिः सर्वसंमता। अत्र शृङ्गं निषेध्यम्। तदेव प्रतियोगि। शशस्तु तादृशनिषेधाधिकरणत्वेन प्रतीयते। निषेध्यस्य शृङ्गस्य प्रमितिस्तु गोमहिष्यादौ वर्तते। प्रमितिः

---

१ ग--रणाद्युपाधितादा। २ ख छ--पमुख्यज्ञा। ३ च छ ज झ--न्नं च स। ४ छ--त्तेन तत्प्रतिषेधे।; झ--त्वेन तन्नि। ५ छ ज झ--प्रतिपत्तिर्न।

निषेधानुपपत्त्यैव न जगत्तुच्छमिति । नेत्याह—

न चैकं तदन्यद्द्वितीयं कुतः स्यात्
न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

न चैकमिति । एकत्वसंख्यायोग्येकम् । तदपेक्षाबुद्धिजन्यद्वित्वसंख्यायोगि द्वितीयम् । तत एकाभावे द्वितीयं कुतः स्यात् । द्वितीयं च तृतीयादीनामुपलक्षणम् । नन्वेकमेवाद्वितीयम् ( छा. ६।२।१ ) इति श्रुत्यैकत्व प्रतिपाद्यते । नेत्याह--न वा केवलत्वमिति । केवलत्वमेकत्वम् । तस्याविद्यात्मकत्वात् । यद्यात्मन एकत्वं श्रुत्या न प्रतिपाद्यते तर्हि प्रत्यक्षादिप्रमाणवशादनेकत्वमेव स्यादिति । नेत्याह--न चाकेवलत्वमिति । अकेवलत्वमनेकत्वम् । नेह नानास्ति किंचन ( बृ. ४।४।१९ ) एकमेवाद्वितीयम् ( छा. ६।२।१ ) अथात आदेशो

प्रमाज्ञानं यथार्थानुभवः । नेदं शशशृङ्गमिति तु कस्यापि प्रतीतिर्न भवति । तत्र निषेधाधिकरणत्वेनेदमर्थस्य प्रतीतिः । निषेध्यत्वेन तु शशशृङ्गस्य विशेषणविशिष्टस्येति वक्तव्यम् । तादृशस्य विशेषणविशिष्टस्य शशशृङ्गस्य तु न कस्यापि क्वापि प्रमितिः । एतदनुरोधेन प्रतियोगिज्ञानं निषेधे कारणमिति कार्यकारणभावः सर्वैरपि स्वीक्रियते । इयांस्तु विशेषः-वैशेषिका हि प्रतियोगिज्ञानं भ्रमप्रमासाधारण्येन ज्ञानत्वेन सामान्यरूपेण न निषेधे कारणं किं तु प्रमात्वेन विशेषरूपेणेवेति वदन्ति । तद्गौरवपराहतत्वात्सामान्यरूपेण प्रतियोगिज्ञानमात्रस्य कारणत्वे बाधकाभावाच्चाद्वैतवेदान्तिनो नाद्रियन्ते । तत्र वैशेषिकमतानुसारेणायमाक्षेपः ।

न चैकमिति । तस्मात्साक्षिचैतन्यात्सकाशादन्यदेकमपि किंचिन्नास्ति कुतो द्वितीयं स्यादित्यर्थः । अथ वा साक्षिचैतन्यमेकत्वसंख्याविशिष्टं न भवति । निर्गुणम् ( चू. ७।२ ) इति श्रुतौ तस्य गुणराहित्यबोधनेन तत्रैकत्वसंख्याया अभावात् । एवं तस्यैकत्वाभावे तदपेक्षं द्वितीयं कुतः स्यादित्यर्थः । तदपेक्षाबुद्धीति । अयमेकोऽयमेक इत्याद्यनेकैकत्वविषयकं ज्ञानमपेक्षाबुद्धिः । तया च द्वित्वादिसंख्योत्पद्यते । तदुक्तं भाषापरिच्छेदे-

द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ( भा. प. १०७ )

इति । तस्याविद्यात्मकत्वादिति । साक्षिचैतन्य एकत्वसंख्याप्यविद्याकल्पितैव श्रुत्यानूद्यते । नेहेति। नाना अनेकम्। इह किंचिदप्यनेकं नास्तीत्यर्थः। एकमेवेति। अत्र श्रुतावेकमिति पदस्य नैकत्वसंख्याप्रतिपादने तात्पर्यं किं त्वेकत्वविरुद्धस्य नानात्वस्य निषेध एव तत्तात्पर्यमित्यभिप्रायेणेदम् । अथात इति । अथ सत्य-

१ च छ झ-ज ग नस्तनच्छत्वमिति । २ ग ङ च छ ज झ-नामप्युप । ३ ग छ ज-विद्यकत्वा ।

नेति नेति ( बृ. २।३।६ ) इत्यादिश्रुतिभ्यः । तर्हि सर्वप्रतिषेधाच्छून्यमेव स्यादिति । नेत्याह—न शून्यमिति । असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति ( तै. २।६।१ ) सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इत्युपक्रम्य ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि ( छा. ६।८।७ ) इत्यादिश्रुतिभिः सत्यत्वप्रतिपादनात्सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च । तर्हि सत्यत्वज्ञानत्वादिधर्मवदपि स्यात् । नेत्याह—न चाशून्यमिति । एकमद्वितीयमिति पदद्वयेन सर्वप्रतिषेधेप्येवकारेण धर्मधर्मिभावादि-

स्वरूपनिर्देशानन्तरं यतः कारणात्साक्षिचैतन्यमवशिष्यतेऽतः कारणात्तस्यादेशो निर्देशः क्रियते । कोऽसौ निर्देशो नेति नेतीति । ननु नेति नेतीत्यनेन सत्यं कथं निर्दिष्टं भवतीति चेत्-उच्यते । प्रतियोगिविशेषमनिर्दिश्य प्रयुक्तो न-शब्द उपस्थितं सर्वं निषेधति । उपस्थिताश्च नाम रूपं कर्म जातिर्गुणो भेद इत्यादयः। तेषां च मध्ये कश्चिदपि विशेषः साक्षिचैतन्ये ब्रह्मणि नास्ति ।अतो न तदीदृशं तादृशमिति निर्देष्टुं शक्यत इति निषेधमुखेन श्रुतेः प्रवृत्तिर्नेति नेतीति । असन्नेवेति । ब्रह्म सत्यं नाभावरूपम् । तथा ज्ञानं न जडरूपम् । तथानन्तं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः । सदेवेति । हे सोम्येदं पुरो दृश्यमानं निखिलं जगदग्रे सृष्टेः पूर्वं सद्रूपमेवासीदित्यर्थः । ऐतदात्म्यमिति । एतच्छब्देन प्रकृतं सद्रूपं ब्रह्म परामृश्यते । एष आत्मा स्वरूपं यस्य तदेतदात्म । एतदात्मैवैतदात्म्यम् । स्वार्थे ष्यञ्प्रत्ययः । इदं सर्वं ब्रह्मस्वरूपमेव । तद्ब्रह्मैव सत्यं स आत्मा त्वं च तद्ब्रह्मैवासीत्येवमुद्दालकेन स्वपुत्रं श्वेतकेतुं प्रत्युपदिश्यते । सर्वभ्रमेति । सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च न तच्छून्यमिति भावः । इदं नवमश्लोकव्याख्यानावसरे पूर्वमुपपादितम् ( पृ.१४१ ) । न चाशून्यमिति । अशून्यमाधेयसहितम् । अशून्यो मञ्चोऽशून्यं गृहमित्यादौ तथा दर्शनात् । तच्चाधेयमास्तरणं वाधिष्ठिताः पुरुषा वेत्यन्यत् । अत्र च साक्षिचैतन्यमाधेयभूतैः सत्यत्वज्ञानत्वादिभिर्धर्मैर्युक्तमशून्यम् । तथा नेत्यर्थः । सत्यं ज्ञानम् ( तै. २।१।१ ) इति श्रुतेस्तु न सत्यत्वादिधर्मप्रतिपादने तात्पर्यम् । किं तु तद्विरुद्धानां मिथ्यात्वजडत्वपरिच्छिन्नत्वानां प्रतिषेधे तात्पर्यम् । निर्गुणम् ( चू. ७।२ ) निरञ्जनम् ( श्वे. ६।१९ ) इत्यादिश्रुत्यनुरोधादिति भावः । एकमद्वितीयमिति । एकं सजातीयवस्त्वन्तररहितम् । एकशब्दो हि स्वभावात्सजातीयं वस्त्वन्तरं व्यवच्छिनत्ति । तत्रोद्यान एको देवदत्त आसीदित्युक्ते मनुष्यान्तरं व्यवच्छिद्यते न तु पशवः पक्षि-

१ ज—तर्हि प्राप्तप्रतिषे । २ ग—र्वभेदम । ३ ख ङ च छ ज—वादिभेदाभेदम । ; ख—वादिप्रति ।

भेदप्रतिषेधात् । सर्वत्र हेतुमाह—अद्वैतकत्वादिति । द्विधा इतं द्वीतम् । तस्य भावो द्वैतम् । तदुक्तं वार्तिके—

द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते ( बृ. वा. ४।३।१८६ ) इति ।

न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थः । सलिल एको द्रष्टाद्वैतः (बृ. ४।

---

णां वा । अद्वितीयम् । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम् । अनेन च विजातीयं वस्त्वन्तरं व्यवच्छिद्यते । सजातीयवस्त्वन्तरव्यवच्छेदस्यैकमित्यनेन सिद्धत्वात् । न च सजातीयविषय एव द्वितीयशब्दप्रयोग इति नियम इति वाच्यम् । असिद्वितीयोऽनुससार पाण्डवमित्यादौ व्यभिचारदर्शनेन तादृशनियमानभ्युपगमात् । एवमेकमद्वितीयमिति पदद्वयेन सर्वविधवस्त्वन्तरप्रतिषेधे सिद्धेऽपि पुनर्यदेवकारं श्रुतिरादत्ते तद् ब्रह्मण आत्यन्तिकाद्वैतं बोधयति । आत्यन्तिकाद्वैतं च धर्मधर्मिभावेन ज्ञातृज्ञेयभावेन ज्ञाप्यज्ञापकभावेनोपास्योपासकभावेन वाच्यवाचकभावेन चेत्येवं कथमपि भेदासहत्वम् । द्विधेतमिति ।

तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते ॥

इति तस्योत्तरार्धम् । सलिल इति । सलिल इवाचरतीति सलिलो निर्मलः । सलिलशब्दादाचारक्विबन्तात्कर्तर्यच्प्रत्ययः । सिंहो माणवक इतिवत्सलिलशब्दस्य सलिलसदृशेऽर्थे गौणलक्षणाश्रयणे तु सलिल इति पुंस्त्वोपपत्तौ क्लेशः स्यात् । यद्यप्यात्मा वस्तुतो दृग्रूपस्तथाप्यविद्ययाधाराधेयभावकल्पनाद्द्रष्टेति लोके सांसारिकैः प्रतीयते । सांसारिका एव च श्रुत्या संबोध्या इति तदनुसारेणात्मानं द्रष्टेत्येवमनूद्य सलिल एकोऽद्वैत इत्येवमात्मस्वरूपमत्र श्रुत्या प्रतिपाद्यते । अथ वात्र अद्रष्टेति पदच्छेद इति न काप्यनुपपत्तिः । सुषुप्त्यवस्थायामात्मस्वरूपवर्णनमिदम् । आत्मा च तदानीं निर्मलः । अविद्या तदुपस्थापितः प्रपञ्चश्चात्मनो मलः । सुषुप्तावविद्यायाः प्रशान्तत्वात्तदानीमात्मा निर्मलः । तथा तदानीं वस्त्वन्तरप्रत्युपस्थापिकाया अविद्यायाः शान्तत्वेनात्मव्यतिरिक्तस्य कस्यचिददर्शनादेको दृङ्मात्ररूपः । अत्र निर्मलत्वबोधनाद्विजातीयान्यराहित्यमुच्यते । विजातीयं चाविद्या तदुपस्थापितः प्रपञ्च आत्मगता धर्माश्च । तेनात्मनः स्वगतभेदराहित्यं विजातीयभेदराहित्यं च सिद्धम् । एक इत्यनेन नानात्मवादो निरस्त इति सजातीयभेदराहित्यं च सिद्धम् । एतदेव च दृढीकर्तुं पुनरद्वैत इत्युक्तिः । द्विधा इतं गतं द्वीतं द्विप्रकारम् । यथा सैन्यं द्विधाभूतं भवति तथा पारमार्थिकं नित्यं वस्तु चिदचिद्भेदेन द्विधाभूतं चिद्वस्तु च जीवेशभेदेन द्विधाभूतमिति द्वैतवादिनां दर्शनम् । द्वीतस्य भावो द्वैतं द्विप्रकारत्वम् । एतादृशं किमपि द्वैतं यत्र न विद्यतेऽसावद्वैत आत्मेति श्रुत्यर्थः ।

---

१ ज-म नित्य एको ।

३।३२) इति श्रुतेः। प्रतियोगिज्ञानस्यैव लाघवेनाभावबुद्धौ कारणत्वात् द्वैतस्य चानिर्वचनीयत्वाङ्गीकारेण च प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। तर्ह्येतादृश आत्माङ्गुलिनिर्देशेनैवं प्रतिपाद्यतामिति। नेत्याह—कथं ब्रवीमीति[3]। किमाक्षेपे। अद्वैतकत्वेन वागविषयत्वात्। अवचनेनैव प्रोवाच(नृ.उ.ता.७)यतो वाचो निव-

अथ सर्वस्य जगतो मिथ्यात्वे तस्य क्वचिदपि प्रमाज्ञानविषयत्वाभावेन प्रमितत्वाभावात्तन्निषेधो नोपपद्यते। क्वचित्प्रमितं क्वचिन्निषिध्यत इति न्यायादिति यत्पूर्वमुक्तं तत्राह-प्रतियोगिज्ञानस्यैवेति। क्वचिज्ज्ञातं क्वचिन्निषिध्यत इत्येव न्यायस्वरूपं लाघवादभ्युपगम्यते न तु प्रमात्वघटितम्। गौरवात्। एवकारेण प्रमात्वावच्छिन्नत्वेन विशेषज्ञानस्य व्यवच्छेदः। अनिर्वचनीयत्वेति। यथा शशशृङ्गं कालत्रयेप्यसत्त्वात्तुच्छं न तथा तुच्छं जगदस्माभिः स्वीक्रियते। किं तु शुक्तिरजतादिवदविद्याकल्पितं प्रातिभासिकम्। तत्र यथा रजतं न सदित्येवं निर्वक्तुं शक्यते। सत्त्वे नेदं रजतमिति निषेधासंभवात्। नाप्यसदित्येवं निर्वक्तुं शक्यते। असत्त्व इदं रजतमिति प्रतीत्यसंभवात्। अतः प्रातिभासिकं तद्रजतं सदसद्भ्यामनिर्वचनीयं भवति। तथैवेदं सर्वं जगदनिर्वचनीयमिति भावः। तत्रैतावान्विशेषः—शुक्तिरजतं तूलाविद्याकल्पितं जगत्तु मूलाविद्याकल्पितमिति। प्रत्यक्षादिवेद्यत्वेति। नन्वेवं यदि प्रत्यक्षादिप्रमाणैर्जगतः सत्ता ज्ञाप्यते तर्हि तस्य मिथ्यात्वं नोपपद्यते। प्रमाणसिद्धस्य मिथ्यात्वायोगात्। यदि प्रमाणसिद्धं न तर्हि मिथ्या। अथ मिथ्या न तर्हि तत्प्रमाणासिद्धम्। तयोर्विरोधादिति चेन्न। विषयभेदेनैकत्र तयोरविरोधात्। व्यावहारिकी सत्ता प्रमाणैर्बोध्यते। पारमार्थिकसत्ताया अभावाच्च मिथ्यात्वमिति। अद्वैतकत्वेनेति। वाच्यवाचकभावरूपमपि द्वैतं तत्र नास्तीति भावः। अवचनेनैवेति। ब्रह्मजिज्ञासुना शिष्येण पृष्टो गुरुरवचनेनैव तस्मै शिष्याय ब्रह्म प्रोवाच ज्ञापितवानित्यर्थः। ब्रह्मणो वागविषयत्वाद्वाचा ब्रह्म प्रतिपादयितुं न शक्यत इत्यभिप्रायेण ब्रह्मविदपि गुरुस्तूष्णीमवतस्थे। बृहस्पतिवत्प्रवक्तापि ब्रह्मविदग्रेसरोऽपि सद्भावेन मया पृष्टोऽपि च यतोऽसौ गुरुर्न किंचिद्वक्ति ततस्तद् ब्रह्मेदृशं तादृशमित्येवं कथमपि कथयितुं नैव शक्यत इति गुरोरभिप्रायमवगच्छन्वागविषयत्वेन निर्विशेषं ब्रह्म ज्ञातवानित्यर्थः। यतो वाच इति। यतो वाङ्मनःप्रभृतिसकलजगत्कारणीभूताद् ब्रह्मणः सकाशाद्वाचः श्रुतिरूपा अपि मनसा सह निवर्तन्ते। ताश्च प्रतिपाद्यत्वेनाभिमतं विषयं संप्राप्य तत्प्रतिपादनेन कृतकृत्याः सत्यो निवृत्ताः स्युरिति कल्पनाव्यावृत्त्यर्थ उक्तमप्राप्येति। ब्रह्म हि वाचा वदितुं

१ ग घ छ ज झ—नस्यानि। २ ग ङ च छ ज झ—शेन प। ३ ङ—ति। कथमाक्षेपे। ४ झ—वागगोच।

तन्ते अप्राप्य मनसा सह ( तै. २।४।१ ) न विज्ञातेर्विज्ञातारं विजानीयाः ( बृ. ३।४।२ ) इत्यादिश्रुतिभ्यः। वागविषयत्वे[1] वेदान्तानां कथं तत्र[2] प्रामाण्यमिति चेद[3]विषयेप्यात्मनि तदाकारवृत्तिमात्रेण तदविद्यानिवर्तकत्वादित्याह— सर्ववेदान्तसिद्धमिति। तथा च श्रुतिः यस्यामतं तस्य मतं मतं यस्य न वेद

न शक्यते मनसा च चिन्तयितुं न शक्यत इति भावः। न विज्ञातेरिति। विज्ञातलौकिक्या बुद्धिवृत्तेर्विज्ञातारं व्यापारमात्मानं न विजानीयात्। न स ज्ञातुं शक्यत इत्यर्थः। अविषयेपीति। तदुक्तं पञ्चदश्यां विद्यारण्यमुनिभिस्तृप्तिदीपे—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।
स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते॥ ( प. द. ७।९१-९२ )

इति। अस्यार्थः। आत्मभिन्नघटादिविषयप्रत्यक्षकाले बुद्धिः स्ववृत्त्या घटं व्याप्नोति। बुद्धिगतश्चिदाभासश्च घटं व्याप्नोति। आद्या वृत्तिव्याप्तिरित्युच्यते। तया च घटादिविषयगतमज्ञानावरणं विनश्यति। चिदाभासव्याप्तिश्च फलव्याप्तिरित्युच्यते। तया च घटादिर्विषयः प्रकाशते। घटादेर्जडत्वेन स्वतः प्रकाशायोगात्। ब्रह्मसाक्षात्कारकाले तु वृत्तिव्याप्तिरेवापेक्ष्यते न तु द्वितीया फलव्याप्तिः। जीवब्रह्मणोरेकत्वस्याज्ञानेनावृतत्वात्तस्याज्ञानावरणस्य विनाशाय तत्त्वमसीत्यादिप्रमाणभूतवेदान्तवाक्यजन्ययाहं ब्रह्मास्मीत्येवमाकारया बुद्धिवृत्त्या व्याप्तिरपेक्षिता भवति। आत्मनस्त्व[illegible] स्वतःप्रकाशरूपत्वान्न तत्प्रकाशाय फलव्याप्तिरपेक्षिता भवतीति। तथा च तत्रैवोक्तम्—

स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत्।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्॥ ( प. द. ७।९० )

इति। आत्मसाक्षात्कारसमये साक्षी स्वप्रकाशोऽपि घटादिवद् बुद्धिवृत्त्या व्याप्यत एव। एतदप्रमेयम् ( बृ. ४।४।२० ) इत्यादिशास्त्रेषु यदप्रमेयमित्यनेनास्य प्रमाविषयत्वं निराक्रियते तत्फलव्याप्यत्वमेव निराक्रियते न तु वृत्तिव्याप्यत्वमित्यर्थः। यस्याममतमिति। ब्रह्म न जानामीति ज्ञानवता तद्ब्रह्म ज्ञेयं भवति तथा ब्रह्म जानामीति ज्ञानवता तद् ब्रह्म न ज्ञेयं भवतीति यत्पूर्वमुक्तं तत्कथं प्रामाणिकत्वेन विश्वसनीयं स्याद्विरोधादित्याशङ्कानिरसनार्थं यस्याममतमित्याद्युच्यते। यस्य विदुषो ब्रह्मामतं ज्ञातृज्ञेयादिभावेनानधिगतं तस्य ज्ञातृज्ञेयादिभावमनधिगतवतो विदुषो ब्रह्म मतं भवति। एतद्वैपरीत्येन यस्य ब्रह्म मतं ज्ञातृज्ञेयादिभावेनाधिगतं भवति स कर्तृकर्मादिभेदज्ञानवान्ब्रह्म न वेद याथातथ्येन न जानाति। यतो विजानतां ज्ञातृज्ञानज्ञेयादिविविधद्वैतबुद्धिमता-

१ क्ष—यत्वे कथं तत्र वेदान्ताः प्रमाणानि। २ ङ—तत्र प्रा। ३ ग—चेन्न। आव।

सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ( के. २।३ ) यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेवं ब्रह्म त्वं विद्धि नेदं यदिदमुपासते (के. १।५)इत्यादिरविषयत्वमात्मनो दर्शयति । तदेवं वेदान्तवाक्यजन्याखण्डाकारवृत्त्या अविद्यानिवृत्तौ[1] तत्कल्पितसकलानर्थनिवृत्तौ परमानन्दरूपः सन्कृतकृत्यो भवतीति सिद्धम् ॥ १० ॥

न स्तौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध ।
विनापि[2] तैः संग्रथिताखिलार्थं तं शंकरं नौमि सुरेश्वरं च ॥ १ ॥
लघुरपि बह्वर्थवह[3]श्चिन्तामणिरिव निबन्धोयम् ।
मधुसूदनेन मुनिना विहितो गुणिनां विनोदाय ॥ २ ॥

यद्वैतं ब्रह्म अविज्ञातं भवति। अविजानतां ज्ञातृज्ञानज्ञेयादिविविधद्वैतबुद्धिरहितानां ब्रह्म विज्ञातं विशेषेण यथाविद्यमानस्वरूपेणाधिगतं भवति । ब्रह्माधिगमश्चायं यत्र ज्ञात्रादित्रिपुटी न भासते तादृशो निर्विकल्पको निर्विशेषाखण्डब्रह्मसाक्षात्कारः स्वसंवेद्यः । अतो नोक्तशङ्कावकाशः । यन्मनसेति । यद्वस्तु मनसान्तःकरणेन कोपि न मनुते न संकल्पयति न निश्चिनोति । मनसोपि मननसामर्थ्यप्रदं किंचिद्वस्तु यत्स्यात्तन्मनने कथं मनः प्रभवेत् । प्रत्युत येन तादृशेन वस्तुना मनो मतं स्वव्यापारक्षमं भवतीत्याहुर्विचक्षणास्तदेव वस्तु ब्रह्मेति त्वं विद्धि । एवकारव्यवच्छेद्यं स्पष्टार्थं श्रुतिरेवाह--नेदमिति । यदिदं लौकिका उपासते तन्न ब्रह्म । उपास्यं हि मनोगम्यं भेदभावयुतं च भवति । न तादृशं ब्रह्मेत्यर्थः । एवं चाद्वैतस्य परमात्मनो न प्रमाविषयत्वमिति तत्त्वमसीत्यादिवेदान्तानामविद्यावरणानिवर्तकत्वेनोपयोगः सिद्धो भवति । तदुपसंहरति--तदेवमिति ॥ १० ॥

न स्तौमीति । यो व्यासोऽशेषमर्थं सूत्रैरपि सम्यङ् न बबन्ध तं सूत्रकारं न स्तौमि । किं तु तैः सूत्रैर्विनापि सम्यग्ग्रथिता अखिला अर्था येन तं शंकरं भाष्यकारं सुरेश्वरं वार्तिककारं च नौमीत्यर्थः । अत्र व्यासेन सूत्रसहायेनापि सर्वेऽर्था न सम्यग्ग्रथिताः।भाष्यवार्तिककाराभ्यां तु सूत्रसहायं विनैव सर्वेऽर्थाः सम्यग्ग्रथिता इति व्यतिरेको ध्वन्यते। वस्तुतः श्रीमान्बादरायणः सूत्रकारो भाष्यवार्तिककारयोरप्युपजीव्य इति सर्वेषां स्तुत्य एव । अत्र न स्तौमीत्युक्तिस्तु न हि निन्दा निन्द्यं निन्दितुं प्रक्रमते अपि तु स्तुत्यं स्तोतुमिति न्यायेन भाष्यवार्तिककारयोः स्तुत्याधिक्ये पर्यवस्यति । भाष्यवार्तिककारौ हि निबन्धकाराणां मार्गदर्शिनौ । अथ वा यो व्यासोऽशेषमर्थं सम्यक्सूत्ररूपेणापि च बबन्ध तं व्यासं न स्तौमीति न । किं तु स्तौम्येव । स्तुत्या च नातिराक्षिप्यते । न केवलं सूत्रकारमेव नौमि किं तु भाष्यकारं वार्तिककारं च नौमीत्यर्थः । अस्मिन्पक्षे नञ्द्वयस्य स्तौमीत्यत्रान्वयेन सम्यङ्ङिति नञो दूरान्वयक्लेशः ।

लघुरपीति । यथा चिन्तामणिर्लघुरपि बह्वर्थवहश्चिन्तितबह्वर्थप्रदायी

१ ज--त्तौ परमा । २ छ--पि सूत्रैर्ग्रथि । ३ छ--ह्वर्थोयं चिन्ता ।

यदत्र सौष्ठवं किंचित्तद्गुरोरेव मे न हि ।
यदत्रासौष्ठवं किंचित्तन्ममैव गुरोर्न हि ॥ ३ ॥
बहुयाचनया मयायमल्पो बलभद्रस्य कृते कृतो निबन्धः ।
यददुष्टमिहास्ति यच्च दुष्टं तदुदाराः सुधियो विचारयन्तु ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरभगवत्पादशिष्यश्रीमन्मधुसूदनमुनिवरविरचितः सिद्धान्ततत्त्वबिन्दुः समाप्तः ॥ श्रीगणेशसरस्वतीगुरुभ्यो नमो नमः ॥

तथा लघुरपि बह्वर्थवहोऽनेकार्थसंग्राहकोऽयं निबन्धः सिद्धान्तबिन्दुनामा ग्रन्थो मुनिना मननशीलेन मधुसूदनेन गुणिनां गुणग्राहकाणां विनोदाय विहितो रचित इत्यर्थः ।

औद्धत्यं परिहरति--यदत्रेति । अत्रास्मिन्ग्रन्थे यत्किंचित्सौष्ठवं सामीचीन्यं तद्गुरोरेव गुरुसंप्रदायप्राप्तमेव न तु मम । यत्त्वत्र किंचिदसौष्ठवमसामीचीन्यं तन्ममैव न तु तन्निमित्ता दोषा मद्गुरोः संभावनीय इत्यर्थः ।

बहुयाचनयेति । बलभद्रो नाम कश्चन मधुसूदनसरस्वतीभट्टाचार्याणां शिष्यः । तत्प्रार्थनया तदर्थमेव चायमल्पो निबन्धो विरचितः । अत्र गुणदोषविवेचनं प्रौढाशयाः सुधियः कुर्वन्त्वित्यर्थ इति शिवम् ॥

इति श्रीमद्विद्वन्मुकुटरत्नभास्करशास्त्र्यन्तेवासिसकलविद्यापारंगतरामशास्त्रिच्छात्रेण तच्चरणप्रसादलब्धज्ञानलवप्रोत्साहितेनाभ्यंकरोपाह्वमहामहोपाध्यायवासुदेवशास्त्रिणा विरचिता सिद्धान्तबिन्दुव्याख्या बिन्दुप्रपातनाम्नी समाप्तिमगमत् ॥ श्रीः ॥

१ च अ ख--विवेचयन्तु

## सिद्धान्तबिन्दौ तट्टीकायां च प्रसङ्गादुद्धृतानां श्रुत्यादीनामकारादिवर्णानुक्रमेण सूचीपत्रम् ।

## सिद्धान्तबिन्दुग्रन्थान्तर्गतानां विशेषशब्दानां सूचीपत्रम्

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| शाद्वेन | शाब्देन | ३ | २९ |
| कुले | कूले | ४ | १ |
| तारणिकां | तरणिकां | ४ | १५ |
| चेन्मवम् | चेन्मैवम् | ४ | २० |
| सत्य | सत्यं | ५ | २२ |
| बोवेने | बोधने | ९ | १२ |
| विचारणेति | विचारेणेति | १० | ४ |
| निरुपित | निरूपित | १२ | १६ |
| पृथकग्रन्थ | पृथग्ग्रन्थ | १३ | २५ |
| चतुष्टयस्य | चतुष्टयतस्य | १४ | ३ |
| तद्भावस्या | तदभावस्या | १४ | १९ |
| देहस्यात्मत्वे | देहस्यात्मत्व | १६ | १५ |
| शरीर | शरीरं | १९ | १७ |
| स्वेरूप | स्वरूपे | २० | ६ |
| परिणामित्वम् | परिणामित्वम् । | २० | ९ |
| कल्पितेवेति | कल्पितैवेति | २२ | २० |
| सबन्ध | संबन्ध | २३ | २८ |
| स एइ | स एव | २४ | ३ |
| तस्तुद्वेति | तन्तुद्वेति | २४ | ११ |
| कल्पते | कल्प्यते | २४ | २५ |
| चेद् | चेदं | २४ | [illegible] |
| उपाधिना- | उपाधिना | २४ | [illegible] |
| शाद्वे | शाद्वे | २५ | [illegible] |
| निवचनीयं | निर्वचनीयं | २५ | [illegible] |
| चैतन्य प्रत्य | चैतन्यप्रत्य | २६ | [illegible] |
| द्वितीय | द्वितीय | २९ | [illegible] |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| भ्रमाधिष्ठान | भ्रमाधिष्ठानं | २७ | ७ |
| निवृत्त्यस | निवृत्त्यसं | २७ | १६ |
| निवर्त्यमान | निवर्त्यमानं | २७<br>२७ | २२<br>२३ |
| [illegible]प्रस्य | क्त्वाप्रत्य | २८ | ८ |
| मुखेनेव | मुखेनैव | २८ | [illegible] |
| मध्योसापि | मध्यासोपि | ३० | ४ |
| सिद्धन्युत्तर | सिद्धन्युत्तरं | ३० | ८ |
| यवन्तः | यद्यन्तः— | ३० | १४ |
| यो शना | योशना | ३२ | १२ |
| अंसमव | असंभव | ३३ | १० |
| ससार | संसार | ३५ | १८ |
| शर्क्ति । | शक्तिं | ३७ | १० |
| दिप्रस्य | दिप्रत्य— | ३९ | १६ |
| सत्यान् । | सत्यान्— | ४१ | ११ |
| दित्यर्थः— | दित्यर्थः । | ४१ | १२ |
| पयक्षम् | पक्षम् | ४२ | १२ |
| इत्यादि प्रन्थेन | इत्यादिग्रन्थेन | ४३ | २४ |
| देशभूत | देशभूत— | ४४ | १७ |
| वायागोप | वाच्यत्वोप | ४४ | २३ |
| यथालोके | यथा लोके | ४७ | १९ |
| मायाविषय | माया विषय | ४८ | १७ |
| जीवः | जीव— | ४९ | १६ |
| प्रवृत्यनु | प्रवृत्यनु | ६८ | ३ |
| तावदत्र— | तावदत्र | ६८ | २० |
| भूतार्थप्रति | भूतार्थप्रति- | ६९ | २४ |
| सोपोऽलकसः<br>[illegible]पसोऽ | सोऽपौल्कसः<br>तापसोऽ— | ७१ | ७ |
| [illegible]च्छित्तिधर्माः | [illegible] | ७२ | [illegible] |
| अविक्रिया | विक्रिया | ७३ | ७ |
| शक्यते । | शक्यते | ८७ | ४ |

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| द्कत्व | देकत्वे- | ९३ | ९ |
| एव | एवं | ९३ | २५ |
| मद् | पद् | ९४ | २३ |
| तत्र | तत्रि | ९४ | २१ |
| पार्थिवत्व | पार्थिवत्व- | ९८ | १८ |
| सत्काराः | संस्कारा | १०४ | २५ |
| जागृता | जागृती | १०७ | ४ |
| प्रतन्यस्य | पीतन्यस्य | ११० | १४ |
| नुत्रपत्या | नुपपत्या- | ११३ | ६ |
| सामप्रीति. | सामग्रीति । | ११३ | ८ |
| माधिष्ठान | मधिष्ठान- | ११६ | १२ |
| अधिष्ठान | अधिष्ठान- | ११६ | १४ |
| स्याधिष्ठान | स्याधिष्ठान- | ११७ | ६ |
| [illegible] | [illegible] | १२३ | ७ |
| ज्ञानभ्यासो | ज्ञानाभ्यासो | १२३ | ११ |
| कारण्येना | करण्येना | १२३ | २८ |
| भयतया | भयतया- | १२४ | ७ |
| द्वितीयः | द्वितीयः । | १२५ | १७ |
| करण । | करण | १२५ | १८ |
| सत्कारा | संस्कारा | १२६ | २ |
| स्मृत्तिः | स्मृतिः | १२७ | १२ |
| रोध्द्रोधे | रोद्बोधे | १२७ | २६ |
| व्यतिरके: | व्यतिरेकः | १३१ | १ |
| नास्ति | नास्ति । | १३४ | १५ |
| तस्ये | तस्ये- | १३५ | ६ |
| बीजः | बीजः । | १३५ | ७ |
| जीवत्व | जीवत्व- | १३५ | १० |
| साक्षि | साक्षि- | १३५ | [illegible] |
| वार्तिक | वार्तिक- | १३७ | [illegible] |
| तत्रथा | [illegible] | [illegible] | [illegible] |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| कञ्चकानां | कञ्चुकानां | १४१ | २५ |
| मर्म | मर्म | १४२ | ११ |
| मार्त | मार्तं | १४२ | १६ |
| व शक्यते | वक्तुं शक्यते। | १४२ | ३० |
| च्च्यते | च्च्यते। | १४३ | १४ |
| चोति | चोति। | १४५ | १७ |
| वेशापिक | वैशेषिक | १४७ | २५ |
| श्रुत्यैकत्व | श्रुत्यैकत्वं | १४८ | ८ |
| ब्रह्मजिज्ञा | ब्रह्म जिज्ञा | १५१ | २२ |
| ब्रह्मामते | ब्रह्मामतं | १५२ | २१ |
| भूवं | भूवं | १५८ | ७ |
| यत्रोपर | यत्रोपर | १५८ | २३ |
| सौठ | सौठ | १५८ | २६ |
| असत्स्वावृत्ति | असत्स्वावृति | १६२ | १५ |

